# ब्रह्मानन्दीयभावप्रकाशः




महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिविरचितः
पण्डितराजेन वि. सुब्रह्मण्यशास्त्रिणा
संकलितटिप्पणेन संवलितः

महामहिममहोन्नतश्रीगोश्रीमहाराजानां
अन्तरङ्गकार्यदर्शिना
प्रकाशितः

1961

संपादकः—पण्डितराजः वि. सुब्रह्मण्यशास्त्री

# ब्रह्मानन्दीयभावप्रकाशः



महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिविरचितः

पण्डितराजेन वि. सुब्रह्मण्यशास्त्रिणा

संकलितटिप्पणेन संवलितः

महामहिममहोन्नतश्रीगोश्रीमहाराजानां

अन्तरङ्गकार्यदर्शिना

प्रकाशितः

1961

संपादकः-पण्डितराजः वि. सुब्रह्मण्यशास्त्री

# BRAHMĀNANDĪYABHĀVAPRAKĀŚA

BY

Mahāmahōpādhyāya

**PANCHĀPAGĒSA SĀSTRIĀR**

With Tippaṇa

BY

Paṇḍitarāja **V. Subrahmaṇya Sastri**

*Published by*

*The Private Secretary*

TO

HIS HIGHNESS THE MAHĀRĀJA OF COCHIN.

**1961**

*Editor* :—Paṇḍitarāja **V. Subrahmaṇya Sastri.**

# ब्रह्मानन्दीयभावप्रकाशः

महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिविरचितः

पण्डितराजेन वि. सुब्रह्मण्यशास्त्रिणा

संकलितटिप्पणेन संवलितः

महामहिममहोन्नतश्रीगोश्रीमहाराजानां

अन्तरङ्गकार्यदर्शिना

प्रकाशितः

1961

संपादकः–पण्डितराजः वि. सुब्रह्मण्यशास्त्री

॥ श्रीः ॥

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य

श्रीकाञ्चीकामकोटिपीठाधिप जगद्गुरु श्रीशंकराचार्य

श्रीमठसंस्थानात्

॥ श्रीचन्द्रमौलीश्वराय नमः ॥




मुखाम् इलयात्तङ्गुडि

ता० 31—3—1961

वेदान्तवादनगरगोपुरायमाणस्य लघुचन्द्रिकापरनामधेयस्य ब्रह्मानन्दीयस्य सोपाधिकत्वभङ्गपर्यन्तं भावप्रकाशनेन परकृतदूषणानि समुद्धरन् महामहोपाध्याय (पलमानेरि) श्रीपंचापगेशशास्त्रिमहोदयैर्विरचितः (अन्ते ब्रह्मीभूत) स्वच्छात्रप्रवर पण्डितराज (तिरुनिलाय्कडवु) श्रीलक्ष्मीनारायणशास्त्रिवरहस्ते सविश्वासं शोधनाद्याज्ञापनपुरस्सरं निक्षिप्तः "**ब्रह्मानन्दीयभावप्रकाशाभिधः**" अन्वर्थाभिधो ग्रन्थः तत्त्वजिज्ञासुभिः अत्यन्तमुपादेयः। एतावता च कालेन अमुद्रितोऽयं ग्रन्थः शास्त्रार्थविचारैकरसिकचित्ताभ्यां भवद्भ्यां संशोधितः विशिष्टटिप्पण्या संयोजितश्च इदानीं मुद्राप्य प्रकाश्यत इति परममामोदस्थानमस्माकम्।

अस्मिंश्च ग्रन्थे महामहोपाध्याय (मन्नार्गुडि) श्रीत्यागराजमखीन्द्र महामहोपाध्याय (गुणिकल्) श्रीलक्ष्मीनृसिंहशास्त्रि महामहोपाध्याय (तिरुविशनल्लूर्) श्रीरामसुब्रह्मण्यशास्त्रिप्रभृतिभिः स्वस्वग्रन्थेषु निरूपितानां

निरूपयन्तः वेदान्तदर्शने व्युत्पत्त्यतिशयं स्वीयग्रन्थपरिशीलिनामादधति। प्रथमतः न्यायामृतोक्तदोषाणामेव निरूपणं ततः सिद्धिलघुचन्द्रिकाकाराणां परिहारप्रकारवर्णनं ततश्च स्वाशयप्रकटनमिति सरण्या तत्र तत्र ग्रन्थस्थितानां प्रमेयाणामानुपूर्वीविशेषसंघटनेन शास्त्रार्थव्युत्पत्तिं वर्धयन्ति। दुरवगाहं लघुचन्द्रिकाग्रन्थं श्रीविट्ठलेशीयग्रन्थयोजनया विशदीकृत्य क्वचिदनुवदन्ति। अन्यत्र न्यायरत्नावलीवैजयन्तीप्रमेयान् अपरत्र लघुचन्द्रिकादिग्रन्थानुक्तान् मिथ्यात्वानुमानप्रभेदान् दृश्यत्वपरिष्कारांश्चानुवदन्ति दूषणाय। प्रायेण सिद्ध्यादिग्रन्थानुपूर्वीक्रमेणैव विचारः प्रवर्तितः। क्वचिदन्यप्रकरणे विचारिताः अन्यस्मिन् प्रकरणे विमृष्टाः। द्वितीयमिथ्यात्वविचारे चान्ते नेहनानेतिश्रुतिजन्यशाब्दबोधविमर्शः संघटितः।

अथैतेषां दूषणसरणिं किञ्चिदिव चिन्तयामः—

(1) तत्र आदौ विमतं मिथ्या दृश्यत्वादिति प्रयोगे विमतमिति पक्षग्रहणमयुक्तमित्यादिका दूषणभङ्गी सर्वेषामपि वादिनां मते संभवति। सर्वेऽपि कथकाः स्वाभिमतसाध्यसाधनाय न्यायप्रयोगे विमतविगीतादिपदेन पक्षं निर्दिशन्ति। अतश्च प्रकृतसाध्यतदभावप्रकारकविमतिविषयतावच्छेदकावच्छिन्नमेव विमतपदं बोधयतीति सर्वसंमतोऽर्थः। इममर्थं व्युत्पादयितुमेव विमतपदयथाश्रुतार्थे दूषणोक्तिरिति प्रतीमः।

(2) ब्रह्मप्रमातिरिक्ताबाध्यत्वरूपपक्षविशेषणमधिकृत्य वैजयन्तीदर्शितदिशा सपरिकरं प्रवर्तिते विस्तृते विचारे तत्तत्सिद्धसाधनपरिहारपूर्वकं अन्ते वैजयन्तीग्रन्थशङ्कितं ब्रह्मज्ञानाव्यवहितपूर्ववृत्तिभ्रमसिद्धे प्रातिभासिके सिद्धसाधनमुदभावि। ततश्च तद्वारकं वैजयन्त्यभिमतं ध्वंसविशिष्टान्यत्वमिति परिष्कारमुपवर्ण्य ज्ञानादज्ञानध्वंसो न जायते इति पक्षे तत्परिष्कारस्यासंभवदुक्तिकतादोषं प्रदर्श्य तद्विशेषणविचारमुपसंजह्रुः न्यायभास्करकाराः। एवमेव स्वानाशकज्ञानानाश्यज्ञानविषयत्वं दृश्यत्वमिति परिष्कारविचारः ब्रह्मज्ञानेन प्रपञ्चस्य

नाशो न जन्यते किन्तु प्रपञ्चाभाव एव ब्रह्मज्ञानप्रयुक्तः इति मतसाधारण्यविरहरूपेण दोषेणोपसंहृतः। ज्ञानादज्ञानस्य ध्वंसो जायते अज्ञानध्वंसेन तत्प्रयुक्तध्वंसो जायते इत्येकः पक्षः। ज्ञानेनाज्ञानध्वंसो न जायते अपि तु ज्ञानस्य अज्ञानप्रयुक्तदृश्याश्रयकालपूर्वत्वाभाव एवेत्यपरः पक्षः। तदेतत्पक्षद्वयमपि श्रीब्रह्मानन्दसरस्वतीभिः समर्थितं लघुचन्द्रिकायाम्। ध्वंसाङ्गीकर्तृपक्षाभिप्रायेण प्रवृत्तपरिष्कारस्य ध्वंसानङ्गीकर्तृपक्षसाधारण्याभावः कथं दूषणं भवति। अतश्चैतादृशदूषणोक्तिः व्युत्पत्तिवैशद्यायैव कल्पेत।

(3) भेदासहिष्णुतादात्म्यानङ्गीकारेऽपि स्वस्मिन्नपि विभिन्नरूपाभ्यां स्वतादात्म्यसंभवं लघुचन्द्रिकोक्तं प्रथममिथ्यात्वविचारे स्वयमभिधाय पुनः स्वयमेव असकृत् स्वस्मिन् स्वतादात्म्यानङ्गीकारेण तत्र तत्र दूषणाभिधानमपि तथैव।

द्वितीयमिथ्यात्वविचारे त्रैकालिकत्वविशेषणप्रयोजनविमर्शनावसरे मिथ्यात्वघटकाभावस्य व्यावहारिकत्वपक्षे लोकसिद्धविशेषणतासंबन्धेनात्यन्ताभाववत्त्वघटितं व्यापकत्वं लघुचन्द्रिकोक्तं निर्दुष्टमिति स्वयमुक्त्वा तत्र तत्र मिथ्यात्वन्यायेन तद्वत्यपि तदभावमादायार्थान्तरबाधादीनां दूषणतयोद्भावनमपि व्युत्पत्तिवैशद्यफलकमेव बोध्यम्।

(4) चतुर्थमिथ्यात्वविचारशेषे शुक्तिरूप्यदृष्टान्तं विनैव मिथ्यात्वसाधके प्रकारतापक्षके विशेष्यताविशिष्टत्वसाध्यके अनुमाने स्वयमुद्भावितदोषं स्वनिरूपितप्रकारताघटनेन परिहृत्य अनुगममार्गविहारिभिः सुलभसमाधेयस्य चरमस्य स्वत्वाननुगमदोषस्योद्भावनमपि तादृशमेव भवति।

(5) लघुचन्द्रिकायां दूषितः विशिष्टशुद्धोपहितब्रह्मसत्तैव विशिष्टशुद्धयोस्तादात्म्यमिति पक्षः फलव्याप्यत्वं दृश्यत्वमितिपक्षः अज्ञातृत्वं जडत्वमिति पक्षश्च चन्द्रिकोक्तदोषेणैव स्वयं दूषितः। परन्तु ज्ञातृत्वोपलक्षितचिद्भेदवत्त्वरूपमज्ञातृत्वमिति परिष्कारस्य साधुता चन्द्रिकोक्ता नोद्घाटितेति बोध्यम्।

न्यायभास्करोक्तदूषणखण्डनप्रकाराणामपि तत्र तत्र संयोजनेन, तथा श्रीविठ्ठलमिश्राणां श्रीभट्टत्र्यंबकशास्त्रिणां च सूक्तिघटनेन, तथा भवद्भ्यां १५ पुटे ज्ञानान्तरविषयतायाः ज्ञानान्तरविषयतानिरूपितत्वे सत्ख्यातिवादिस्वीकृतस्य इदं रजतं इति ज्ञानद्वयविषयतयोः निरूप्यनिरूपकभावस्य दृष्टान्ततया प्रदर्शनेन ६२ पुटे "ग्राह्य" इति प्रतीकं धृत्वा पंचजनादिपदस्य अर्थवर्णनप्रकारेण १३७ पुटे मिथ्यात्वकोटेः साध्यवैशिष्ट्यभंगप्रयोजकत्वप्रतिपादनेन १५२ पुटे "वृत्तिव्याप्यत्वरूपं दृश्यत्वं निरपवादं" इति ग्रन्थावतारिकाव्याजेन ग्रन्थपोषणेन च, एवं तत्र तत्र सूक्ष्मेक्षिकया निपुणं विचार्य बहूनां दुरूहाणां विषयाणां प्रतिपादनेन च, व्युत्पित्सवः व्युत्पन्नाश्च अत्यन्तं उपकृताः ।

समग्रस्यापि न्यायभास्करस्य खण्डनरूपायाः अस्याः भावप्रकाशाभिधायाः कृतेः अध्ययनेन अनाकुलिताद्वैततत्त्वज्ञाः सर्वेऽपि दोषज्ञसमाजाः ग्रन्थनिर्मातॄणां संपादकानां च प्रयत्नं सफलीकुर्युरिति, ग्रन्थपाठकानां विशिष्टटिप्पणीसहितग्रन्थप्रकाशनेन भगवत्पादकैङ्कर्यमनुष्ठितवतां गोश्रीजनपदेश्वराणां श्रीपरीक्षिन्महाराजानां संपादकानां पण्डितराज—वि. सुब्रह्मण्यशास्त्रिणाञ्च श्रीमहात्रिपुरसुन्दरीसमेतश्रीचन्द्रमौलीश्वरप्रसादेन सर्वाणि श्रेयांसि भूयासुः इत्याशास्महे ॥

विजययात्रास्थानम्<br>
इलयात्तङ्गुडि<br>
प्लव चैत्रशुक्लचतुर्दशी

नारायणस्मृतिः

S'RI

*Camp:* **Ilayattamgudi,**
*Date: 31-3-1961.*

## From the Śrī Maṭha-Samsthāna of His Holiness ParamahamsaParivrājakācāryavarya Jagad Guru Srī Saṅkarācārya of Srī Kāñcī Kāmakōṭi Pīṭha

Srī Candramaulīs'varāya namah

The present work appropriately named 'Brahmānandīya Bhāva Prakāśa' is to be whole-heartedly welcomed by all seekers of philosophic truth. It is written by Mahāmahōpādhyāya S'rī. Panchapagesa S'āstrī of the Palamaneri village (Tanjore Dt.) and it seeks to meet adverse criticisms by elucidating the true import of the section up to the 'Sopādhikatvabhaṅga' in the Brahmānandīya also known as the Laghu Candrikā which rises majestically like a tower in the vast city (realm) of polemical literature in the Vedānta. The work was entrusted by him, for being scrutinized and published, to his devoted disciple Paṇḍitarāja S'rī Lakshhmīnārayaṇa Śāstrī (of Tirunilāykadavu) who attained bliss by taking to sannyāsa in his last days It gives us extreme pleasure that this work which had not been published so far has now been printed and published after proper scrutiny along with an excellent 'tippana' by both of you (the editor and publisher) who are devoted lovers of 'śāstravicāra' (śāstraic discussion).

You have shown in this work the different methods of meeting adverse criticisms of the Nyāya Bhāskara as followed by Mahāmahōpādhyāya Sri Tyāgarāja Makhī (Mannargudi), Mm. Śrī Lakshmīnṛsimha Śāstri (Gunikal) and Mm. S'rī Rāmasubrahmanya Śāstrī (Tiruviśanallūr) and have also incorporated the views of Śrī Viṭṭhala Mis'ra and Śrī Bhaṭṭa Tryambaka S'āstrī in appropriate places. Besides this, you have in different contexts eluci-

dated many abstruse topics* and thus rendered a great service to the world of scholars and learners.

It is hoped that the world of dispassionate scholars would be able to appreciate and comprehend the essentials of Advaita Vedānta by a study of this 'Bhāva Prakāsā' which seeks to meet the adverse criticisms presented in the whole of the Nyāya Bhāskara and that thereby the efforts of the editor and the publisher will be amply rewarded. We also hope and pray that the blessings of Lord Candrmauliśvara and Mahā Tripura Sundarī may bestow all good things on the editor and on Śrī Parikshit Mahārāja of Cochin who has published this work with an excellent tippaṇa (gloss) for the benefit of the readers in a spirit of devoted service.

Ilayāttamgudi,
Plava-Caitra Śukla-Caturdaśi. } Nārāyaṇa Smṛtih.

---

* The asterisk indicates the illustrations occuring in the Sanskrit Śrī Mukha

ग्रन्थमिमं परिशोध्य मुद्रापितवन्तः



महामहिममहोन्नत-श्रीगोश्रीजनपदेश्वराः दर्शनकलानिधयः
अभिनवतर्कवागीशाः श्रीपरीक्षिन्महाराजाः

His Highness Dars'anakalānidhi Abhinavatarkavāgīśa
Dr. RĀMA VARMA PARĪKSHIT THAMPURĀN, D. Litt.
Mahārāja of Cochin

dated many abstruse topics* and thus rendered a great service to the world of scholars and learners.

It is hoped that the world of dispassionate scholars would be able to appreciate and comprehend the essentials of Advaita Vedānta by a study of this 'Bhāva Prakāsā' which seeks to meet the adverse criticisms presented in the whole of the Nyāya Bhāskara and that thereby the efforts of the editor and the publisher will be amply rewarded. We also hope and pray that the blessings of Lord Candrmauliśvara and Mahā Tripura Sundarī may bestow all good things on the editor and on Śrī Parikshit Mahārāja of Cochin who has published this work with an excellent tippaṇa (gloss) for the benefit of the readers in a spirit of devoted service.

Ilayāttamgudi,
Plava-Caitra Śukla-Caturdaśi. } Nārāyaṇa Smṛtiḥ.

---

* The asterisk indicates the illustrations occuring in the Sanskrit Śrī Mukha

ग्रन्थमिमं परिशोध्य मुद्रापितवन्तः



महामहिममहोन्नत-श्रीगोश्रीजनपदेश्वराः दर्शनकलानिधयः
अभिनवतर्कवागीशाः श्रीपरीक्षिन्महाराजाः

His Highness Dars'anakalānidhi Abhinavatarkavāgīsa
Dr. RĀMA VARMA PARĪKSHIT THAMPURĀN, D. Litt.
Mahārāja of Cochin

FORWORD

*BY*

His Highness

Darśanakalānidhi Abhinavatarkavāgīśa

Dr. Rāma Varma parīkshit Thampurān. D. Litt.

Mahārāja of Cochin




# आमुखम्

**श्रीहरये नमः**

**श्रीकाञ्चीकामकोटिपीठमिदानीमधितिष्ठतां**
**श्रीजगद्गुरूणां पादकमलाभ्यां नमो नमः ।**

त्रिचतुरेभ्यो वर्षेभ्यः प्राक् अत्रत्यश्रीरामवर्मसंस्कृतमहापाठशालायां प्रतिवर्षं प्रचलन्त्यां विद्वत्सभायां वेदवेदान्तादिनिष्णातानां चरमकाले आपत्संन्यासं स्वीकृत्य ब्रह्मभूयं गतानां श्रीलक्ष्मीनारायणशास्त्रिमहोदयानां सन्निधानमासीत्। ते चैकस्मिन् दिने मद्रासस्थानमासाद्य कञ्चित् पत्रसञ्चयं मम हस्ते निक्षिप्यैवमवादिषुः—ग्रन्थोऽयं पुरा श्रीमतां परिचितैरिदानीं स्वर्गतैः श्रीयज्ञापगेशशास्त्रिमहाशयैः अद्वैतिमतानुसारेण न्यायभास्करनामकग्रन्थोक्तानि दूषणानि परिहर्तुं निर्मितः स च तत्रभवद्भिः परिशोध्य मुद्रापयितव्य इति श्रीजगद्गुरुभिराज्ञप्तमिति ।

समाकर्ण्येदं वचनं जनोऽयं किञ्चित्तरलितान्तःकरणोऽभूत्। प्रत्युत्तरितञ्च मयेत्थम्—श्रीजगद्गुरूणामाज्ञामिमां महान्तमनुग्रहमवधारयामि, परन्तु मे कथमेतादृशप्रौढग्रन्थसंशोधने शक्तिलेशोऽपि स्यात् , तदन्यस्मिन्नेव पण्डितप्रकाण्डे श्रीस्वामिपादैः भारोऽयं निक्षिप्यताम् , मुद्रापणं परं मया निरुह्यते, इति यथावसरं श्रीस्वामिपादमहासन्निधौ सादरप्रणामा विज्ञापना निवेद्यताम् इति ।

ते तु पण्डितराजाः सर्वं विज्ञापयामि ग्रन्थोऽयमत्रैव परिपाल्यताम् इत्युक्त्वा सभावसाने निजगेहं प्रातिष्ठन्त।

गते च कस्मिंश्चित् काले मत्प्रियसुहृद्वरेभ्यः पण्डितराजश्रीसुब्रह्मण्यशास्त्रिमहाशयेभ्यः सकाशात् अचिरात् श्रीस्वामिचरणाज्ञया अहं तत्र ग्रन्थनिरूपणार्थमागमिष्यामीति पत्रिका लब्धा। शास्त्रिमहाशयानां समागममत्यन्तं प्रीत्यावहं प्रतिपालयन् अतिष्ठम्। तदागमनानन्तरं विना विलम्बं ग्रन्थावलोकनमारब्धम्। गुर्वाज्ञा सर्वथा अलङ्घनीयेति दृढं विश्वसन् बलवदशिक्षितत्वेन आत्मन्यप्रत्ययमपि चेतः तदेकतानमकरवम्। प्रवृत्ते च विचारे ग्रन्थोल्लिखिता नूतना विषयाः मां तत्रात्यासक्तं व्यदधत। कार्यान्तरव्यग्रतया रोगबाधया च शास्त्रिमहाशयानामन्यतोगमनमपि मे असुखायाजायत। इदानीमपि तेषां पुनरागमनं प्रतीक्षमाणो वर्ते। विचारदशायां यदि अस्मत्सन्निधानं शास्त्रिमहाशयानां ग्रन्थपरिशोधने कथञ्चिदुपकारायाकल्पत तदा महानस्ति मे चारितार्थ्यस्यावकाशः।

इदन्त्वत्र महाजनान् विज्ञापयामि—'सिद्ध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः संभावनागुणमवेहि तमीश्वराणाम्' इति नीत्या सर्वमिदं श्रीस्वामिपादानां करुणाविलासविजृम्भितमिति।

ब्रह्मानन्दीयभावप्रकाशकाराणां महामहोपाध्यायबिरुदधारिणां श्रीपञ्चापगेशशास्त्रिमहोदयानां मित्रभावभागधेयमनुभूतवता मया एतद्ग्रन्थप्रख्यापनमपि दिवं गतानामपि तेषां तोषाय भवेदिति सुदृढं विश्वसिमि। ग्रन्थस्यास्य वैशिष्ट्यं ग्रन्थकाराणामवश्यज्ञेयं चरितञ्च मत्प्रियसुहृद्भिः शास्त्रिमहाशयैरेव प्रस्तावनायां प्रकटीकृतमिति नात्र प्रतन्यते। श्रीजगद्गुरुचरणैर्बहुधा संमानिता वयं तत्प्रसादाय तत्पादपद्मयोः प्रणामशतानि विदधतः संप्रति विरमामः।

**Hill palace**
Tripunithura (Kerala)
17-8-1960.

राम वर्मा
परीक्षित्

# FOREWORD

My respectful homage to His Holiness the Jagad Guru now adorning the Kāmakoṭi-pīṭha of Kāñcī.

Sri Lakshminarayana Sastri of the Kāmakoṭi Math, an erudite scholar in the Veda and Vedānta, who in his last days took to sannyāsa, was present some three or four years back at the Vidvat Sadas which is held annually here at the Sri Rama Varma Sanskrit College, Tripunittura. Sri Sastri one day came to me and placing in my hands a sheaf of papers, said—" This work was written by Sri Panchapagesa Sastri of revered memory known to your Highness and it seeks to meet, according to the tenets of Advaita, the adverse criticisms set forth in the work entitled Nyāyabhāskara. His Holiness desires that the work should be printed after being scrutinized by your Highness ".

I was thrilled at these words and said in reply," I take this bidding of the Jagad Guru as a great blessing. But, where is the competence in me to scrutinize such an abstruse work? Therefore, let this part of the work be entrusted to another accomplished scholar. I shall, however, undertake the printing of the work. This respectful request of mine may be communicated to His Holiness ". Panditaraja Sri Sastri said, " I shall inform His Holiness about everything. The work may be kept here ". Then, at the end of the Sadas, Sri Sastri left for his native home.

Some time later, I received a letter from my good friend Paṇḍitarāja V. Subrahmanya Sastri stating that he would shortly be meeting me, as directed by His Holiness, for scrutinizing the work. I welcomed it and was eagerly looking forward to the time of Sri Sastri's arrival. Soon after his arrival, the scrutiny of the work started. Though diffident of my capacity, I was deeply convinced that the orders of His Holiness should be honoured by all means and hence began to apply my mind seriously to the work on hand.

As our discussions on the work were in progress, the novel ideas set forth therein deeply fascinated me. In the mean time, I became highly perturbed in mind because Sri Sastri had to stay away elsewhere owing to other pre-occupations and adverse health. Even now I am eagerly awaiting his return.

I would feel highly gratified if my presence at the discussions would have helped Sri Sastri in some way, during his scrutiny of the work. I would, however, like to submit this fact—" The gracious regard bestowed by the masters on their servants enables the latter to accomplish even mighty tasks: and all this is the manifest fruit of the unlimited grace of His Holiness ".

I had the good fortune to enjoy the friendship of the late Mahāmahopādhyāya Panchapagesa Sastri, the author of Brahmānandīya-bhāva-prakās'a, and I firmly believe that my part in the publication of this work would please his blessed soul. My esteemed friend, Sri Subrahmanya Sastri, has, in his preface, dealt with the facts bearing on the excellent features of the present work and the life of its author ; hence they are not repeated here.

The Jagad Guru has showered on me immense favour and I seek His perennial grace by offering my endless homage at His adorable feet.

HILL PALACE
TRIPUNITTURA (KERALA),
17—8—1960.

RĀMA VARMA,

*Parīkshit.*

---

# PREFACE

The merciful sages of old, desirous of saving the world steeped in the slough of sorrow, composed the Darśanas—Nyāya-Vaiśeṣika, Sāṁkhya-Yoga and Mīmāṁsā and Vedānta. Of these, the Vedānta is the daras'ana par excellence.

The greatness of the Vedānta-darśana has been accepted by Udayanācarya, Kumarila Baṭṭa and Prabhākara Miśra. The Vedānta-darśana, thus respected by eminent protagonists of other dars'anas, was set in the form of Sutras by Sage Veda Vyāsa in four adhyāyas (chapters). This was embellished by S'rī. S'aṅkarācārya through his Bhāṣya, at once clear and profound, divided into 'adhikaraṇas' meant to elucidate the import of the Vedāntic concepts. This Bhāṣya, in its turn, reigns supreme by being embellished by S'rī. Vācaspati Miśra's Bhāmatī and S'ri. Padmapāda's Pañcapādikā with their numerous commentaries and glosses and by many other independent elucidatory treatises. All this goes by the name of 'Adhikaraṇa Prasthāna'.

The followers of the Advaita doctrine of the Upaniṣads composed many works meeting adverse criticisms and establishing the final import of the Vedānta by independent reasoning. Of these, the 'Khaṇḍanakhaṇḍa-khādya' of Kavitārkikasārvabhauma S'rī Harṣa Mis'ra occupies a unique place. He is respectfully referred to as Bhagavān Khaṇḍanakāra by Sri Madhusūdana Sarasvatī and his work is known as 'Anirvacanīyatāsarvasva' as it shows in a masterly way that the "bheda prapañca" or diversity in the world of experience is opposed to logical reasoning and establishes its indefinable nature. This work enjoys an honoured place having been commented upon by many eminent scholars and leading logicians like S'rī. S'aṅkara Miśra and S'iromaṇi Bhaṭṭācārya. S'ri. Sarvajñātma Muni set forth the quintessence of the Upaniṣadic doctrine in the Saṁkṣepasārīraka which is commented upon by Śri. Madhusūdana Sarasvatī, Śri Nṛsiṁhās'rama and others. S'ri. Nṛsiṁhāśrama is the author of many polemical works on Advaita.

Following his method, S'rī Citsukhācarya also in his Tattvapradīpikā established the Advaita doctrine of the Upaniṣads. Many other scholars, too, later on, wrote many works of this nature. All these are known to scholars as the 'Vāda Prasthāna'.

S'rī Vyāsarāya Tīrtha, an eminent adherent of S'rī Ānanda-Tīrtha's doctrine of Dvaita Vedānta, criticised the tenets of Advaita in his work called Nyāyāmṛta consisting of four paricchedas. These criticisms were taken up in their respective order and refuted by Śrī Madhusūdana Sarasvatī in his Advaita Siddhi of four paricchedas couched in the most dignified and unexceptionable language. S'rī Madhusūdana Saraswatī is respectfully referred to for his profound learning by S'rī Brahmānanda Sarasvatī. Later, S'rī Rāma Tīrtha wrote a commentary on the Nyāyāmṛta called Nyāyāmṛta Taraṅgiṇī meant to criticise the views set forth in the Advaita Siddhi. S'rī Brahmānanda Saraswatī ably refuted all the adverse criticisms of the Taraṅgiṇī through the two commentaries which embellished the Advaita Siddhi, the Laghu Candrikā and the Guru Candrikā which, thanks to their profundity of thought, are known in learned circles by the name Gauḍa Brahmānandīya. Laghu Candrikā occupies an honoured place, being commented upon by the eminent logician S'rī Viṭṭhala Mis'ra. S'rī Vanamāli Mis'ra has criticised the arguments of the Brahmānandīya in his commentary on the Nyāyamṛta called Nyāyāmṛta Saugandhya. These criticisms were ably met by S'rī Bhaṭṭa Tryambaka S'āstrī in the Advaita Siddhānta Vaijayantī. But neither the Saugandhya nor the Vaijayantī is now available in its entirety. Śrī Ananta-krishna Śāstrī has written the Saugandhya Vimars'a being a refutation of the criticisms set forth in the Nyāyāmṛta Saugandhya.

Śrī Anantācārya, also known as Anandālvār, was an accomplished Naiyāyika and an adherent of the Vis'iṣṭādvaita School of Vedānta. He wrote the work Nyāya Bhāskara with a view to criticising the arguments set forth in the Laghu Candrikā. Sri Anantācārya is quite at home with the Siddhānta Vaijayantī, the Brahmānandīya and the commentary of Viṭṭhales'a. In the first lengthy Pariccheda of Advaita Siddhi, 'Mithyātvānumāna' was established as being 'sakaladoṣaśūnya' (free from all defects.)

There, in the first short section dealing with 'mithyātvānumāna,' the 'pakṣa' (subject), five varieties of 'sādhya' (the object of inference), three kinds of 'hetu' (reason for inference) and a fourth 'hetu' as shown by Citsukācārya were explained and the 'nirupādhikatva' established. This portion is taken up and criticised in the Nyāya Bhāskara in twelve sections called 'bhaṅgas. Sri Anantācārya deals with the topics on hand in the neither too-short, nor too-elaborate style of the Navya Naiyāyikas like Śri Gadādhara Bhaṭṭācārya and wields a dignified diction free from any trace of vituperation. A study of his works is bound to promote the reader's knowledge of the Vedānta darśana. First he enumerates the criticisms dealt with in the Nyāyāmṛta, then states the answers thereto as given in the Advaita Siddhi and Laghu Chandrikā and lastly sets forth his own views. Dealing thus methodically with the topics on hand in their proper sequence, the work tends to enhance the reader's mastery of the Śāstra proper. In some places, before criticising, he elucidates the abstruse arguments of the Laghu Candrikā with the help of the commentary of Vitthaleśa thereon. Elsewhere, he sets forth, before refuting them, the topics of the Nyayaratnāvalī-Vaijayanti. Similarly, he mentions the types of 'mithyātvānumāna' and the definitions of 'dṛśyatva' not dealt with in works like Laghu Candrikā. Generally, the discussions on the topics are carried on in the order in which they are treated in the Advaita Siddhi and other works. In some places, the views expressed in a particular context of the criticised text are reviewed in a different place. While discussing the second kind of 'mithyātva,' the author's view on the 'Śābdabodha' (verbal cognition) arising from the Vedic passage 'Néha nānāsti kiṁcana' is added at the end. The author of the Nyāya Bhāskara adopts different methods in refuting the opponent's view.*

The Nyāya Bhāskara abounds in discussions which afford delightful exercise to the intellectual faculty. Further, in the course of its able treatment of topics, it brings together the essential points in the arguments set forth in the Siddhi, Laghu Candrikā, Viṭṭhaleśīya and other works. Thus the Nyāya Bhās-

kara is an excellent work worthy of a critical study by the followers of Vedānta darsāna.

For meeting the adverse criticisms set-forth in this work, four works are known to have been written before by the scholars of Vedānta. The first among them is the Nyāyendus'ekhara written by Mr. S'ri Lakshmīnṛsimha Śāstrī of Kuṇigal. This work ends before completing the discussion on 'paksatāvacchedaka'. The topics elaborately dealt with in the Nyāya Bhāskara are here briefly set forth and refuted. The treatment of certain topics brings out the author's mastery of the Navya Nyāya.*

The second work which also bears the same name 'Nyāyendu-śekhara', was composed by Mahāmahōpādhyāya S'rī Tyāgarājād-hvarin. In seven sections called Ullāsas, the author refutes the first seven of the 'bhaṅgas' dealt with in the Nyāya Bhāskara. The work concludes with the discussion on 'mithyātva'. All the criticisms mentioned in the Nyāya Bhāskara are set forth here in their proper sequence and refuted. In the treatment of topics, the method of the Navya Naiyāyikas is folowed, the essence of the arguments being given in concluding verses in proper places. The Siddhānta Vaijayantī is referred to here as the work of Tryaṁbaka.* But, since the author does not refer any where to the commentary of Viṭṭhalesā we have to infer that the author had not pressed that work into service.* The author not only refutes the criticisms of his opponents, but interprets S'ruti passages in a different way setting aside the interpretations given by the opponents.* The work reflects the author's mastery over Navya Nyāya, Vyākaraṇa, Mīmāṁsā and Vedānta.

At the instance of his guru, and following his line of treatment*, Mahāmahōpādhyāya S'rī Harihara S'āstrī wrote the appendix to the Nyāyendu śekhara. This is an elaborate refutation of the last five 'bhaṅgas' beginning with that relating to 'dṛśyatva' dealt with in the Nyāya Bhāskara.

The third work is the Nyāya Bhāskara Khaṇḍana written by Mahāmahōpādhyāya S'rī Rāmasubrahmanya Śāstrī. It ends with the discussion on 'dṛśyatva' and refutes the arguments set forth

in the first eight 'bhaṅgas' of the Nyāya Bhāskara. Here adverse criticisms are set forth and refuted in terse sentences. The author does not deem it necessary to discuss the topics not referred to by the masters of Advaita beginning with Gauḍapāda and ending with Gauḍa Brahmānanda.* He refutes only the criticisms levelled against the Candrikā. But, apropos the discussion on the fourth type of 'mithyātva', though he says that the 'anumāna' not being found in the Candrikā need not be substantiated, he substantiates the 'anumāna'. He refers neither to the Vaijayantī nor its author. Though he follows the commentary of Viṭṭhaleśa, he differs from its views in some places. He also deals with topics not dealt with by other scholars.*

The fourth work is the one that is now being brought out called Brahmānandīya Bhāva Prakāśa written by Mahāmahōpādhyāya S'rī Panchapagesa S'āstrī of the village of Palamaneri (Tanjore district). This work stands out distinctly from the other three works mentioned before since it refutes in toto all the twelve 'bhaṅgas' of the Nyāya Bhāskara adopting the style of the Navya Nyāya in a dignified and polite language which is neither too terse nor too elaborate. S'rī S'āstrī does not refer to the Nyāya Bhāskara or its author by name. But he takes up the criticisms and refutes them in the order in which they are presented in the Nyāya Bhāskara. He critically reviews the S'ābdabodha (verbal cognition) that arises from the Vedic passage 'Nēha nānā 'sti kiṁcana' in the beginning of the discussion relating to 'dvitīya mithyātva'. In the Nyāya Bhāskara, however, this topic occurs at the end of the discussion referred to above.

While dealing with the topics for discussion, the author sets forth and meets adverse criticisms in a way distinct from that adopted by other critics* dealing with the same subject.

The author refutes the criticisms levelled against the types of inferences and definitions presented in the Laghu Candrikā and justifies them as also similar topics acceptable to the Vedāntins even though such topics are not strictly textual.*

Familiar with the commentary of Vitthales'a, the author disposes of adverse criticisms following the same line of argument*.

In some places, the author meets adverse criticisms following the line of argument adopted by Bhatta Tryambaka Śāstri and refers to his work Vaijayanti by name*.

The author does not like to indulge in elaboration though the author of the Nyāya Bhāskara sometimes does. When identical adverse criticisms are repeated in different contexts in the Nyāya Bhāskara, our author disposes of them all with a single refutation*.

The work on hand establishes the views held by Vedantins citing in support thereof passages from the works of Maṇikāra, S'iromaṇi Bhaṭṭācārya, Gadādhara Bhaṭṭācārya, Lokanātha Bhaṭṭācārya and others. It follows S'rī Dharmadatta Sūri while discussing the relative sequence between 'kārya' and 'kāraṇa'. It is a work to be enjoyed by Vedāntins who revel in the method of the Navya Nyāya. The Brahmānandiya Bhāva Prakās'a occupies a uniqe place among the works which seek to refute the adverse criticisms presented by the Nyāya Bhāskara. It bears an appropriate name as much by elucidating the true meaning of the abstruse passages of the Siddhi Brahmānandīya as by meeting the criticisms levelled against that work.

For the use of scholars, a 'tippaṇa' has been incorporated in the work. The explanation of the original textual passages by adopting the phraseology of the Naiyāyika and by elucidatory introductions in the relevant contexts—the mention of the final import of Vedic passages which are open to different interpretations—the statement of the rationale behind the non-mention of some adverse criticisms occurring in the Nyāya Bhāskara—mention of the untenability of some of the criticisms mentioned in the Nyāya Bhāskara in view of the arguments already advanced in the commentary of Vitthales'a and the refutation of some criticisms not taken up by the work on hand, are some of the features of the tippaṇa which might interest scholars.

The same adverse criticisms of the Nyāya Bhāskara can be refuted in different ways. The author has adopted a method which is distinct from those followed by other scholars. To acquaint scholars with this fact, the views of Śrī Tyāgarājadhvarin, Śrī Rāmasubrahmanya Śāstrī, Śrī Lakshminṛsimha Śāstrī, Śrī Bhaṭṭa Tryambaka Śāstrī and S'rī Parīkshit Maharāja have been incorporated in the relevant parts of the 'tippaṇa.'

An accomplished Naiyāyika, the Mahāraja always gives the more intelligible and easier one of two plausible explanations*. An able writer, he deals only with topics not touched upon by others, following the method of Śiromaṇi Bhaṭṭācārya.*

I would like to submit the fact that the scrutiny and fixing up of the textual passages in their proper sequence, the writing of the tippaṇa, in short, every thing connected with this publication is solely due to the inspiration given by the Mahārāja.

Śrī Panchapagesa Śāstrī, the author of the Brahmānandīya Bhāva Prakāśa, was born in the well-known village of Palamāneri in Cola-des'a. He learnt Nyāya, Vedānta and other Śāstras from Śrī Sundara Sastri of the same village, was honoured with the title of 'Mahāmahōpādhyāya by the government and occupied a prominent place among the scholars of South India. He taught Vedānta darśana in the Madras Sanskrit College and in the Sanskrit colleges in the states of Cochin and Mysore patronised by their respective Mahārājas. There are disciples of his like Mahāmahōpādhyāya Śrī Anantakrishna Śāstrī who occupy high positions in the world of scholars.

The revered Śāstrin in his last days entrusted the original self-written manuscript of this work to His Holiness the Jagad Guru now adorning the Kāñcī Kāmakoṭi Pīṭha with the request that it may be published after proper scrutiny. Acting on the desire of His Holiness, who is devoted to the propagation of Śrī S'aṅkara's system of Vedānta and who, by the power of his penance, is bringing every body on the right path of Vedic dharma, S'rī Parīkshit Mahārāja of Cochin, whose keen intellect and originality is a marvel to the world of scholars and who by his learning and

character reminds us of the kings like Janaka of the Upanisadic age, undertook the task of scrutinizing and publishing this work.

I have been nurtured on the loving kindness of His Holiness ever since my childhood. I have also been enjoying for long the affectionate regard of His Highness the Mahārāja. Hence I was directed by His Holiness to cooperate with His Highness in the task of scrutinizing the work. In this connection, I met the Mahārāja now and then in his palace and enjoyed the pleasure of going through this work along with my loving friend S'rī Kirāṇgāṭ Nārāyanan Nambūdiripād, disciple of the Mahārāja.

I became acquainted with the art of textual criticism and was able to understand the intricacies of the S'āstra better thanks to the facile method of His Highness in discussing S'āstraic topics, which, while reflecting his profound mastery of Nyāya and other s'āstras, aims only at clarifying the purport of the text in a remarkably dispassionate manner.

The world of Vedānta scholars is deeply beholden to His Highness S'rī Parikshit Mahāraja, the famous royal sage of these times who has rendered signal service to His Holiness by scrutinizing and publishing this work which is a source of delight to scholars.

I offer my endless salutations at the holy feet of His Holiness the generous Jagad Guru whose loving grace saved me by extricating me from the jaws of Death when, during the progress of this work, I had to be long in bed in a critical state after undergoing a major operation. His Holiness is the embodiment of Sanātana Dharma, the sole prop of the Vedas in this difficult age,the redeemer of people from their sins by his genial look, the upholder of the worship of Parmeśvara and of even-mindedness, the creator of supreme delight in the heart of those who listen to his sweet utterances, the purifier of places all round by his holy movements and the congenial place for the free sport of virtues like ahimsā. This work was accomplished by his grace and it is blessed with his Srī Mukha.

I express my gratefulness to my loving friend Paṇḍitarāja Śrī Kirāngāṭ Nārāyanan Nambūdiripād, a master of Yajur Veda and a disciple of his Highness. He helped me in many ways with fraternal affection in the scrutiny of the text with his valuable suggestions, when in my poor state of health, I was enjoying the kind hospitality of the Mahārāja, in his palace.

The late Śrī Lakshminaryana S'āstrī, Āsthāna Vidvān of the Math, was the disciple of the author of this work and he was deeply interested in the publication of this work. I firmly believe that his blessed soul in heaven will rejoice over this publication.

Sri S. R. Krishnamurti S'āstrī, who learnt Nyāya S'āstra from me and who at present is Professor of Vedānta in the Madras Sanskrit College successfully undertook the difficult task of expediting the scrutiny and correction of the proofs. I fervently pray that through the blessings of God and His Holiness the best things of life may be vouchsafed to him.

My thanks are due to the Proprietors of the Bhāratī Vijayam Press for the excellent printing of the work. I am indebted to Prof. Dr. V. Raghavan who helped me in many ways in the publication of this work. I pay my grateful homage to His Highness the royal sage S'rī Parīkshit Mahārāja who kindly accepted my cooperation in the scrutiny and publication of this work and graced it with a foreword.

I also convey my deep sense of gratefulness to Dr. C. S. Venkateswaran, Professor and Head of the Department of Sanskrit in the Annamalai University who has done me a great service in translating, on the orders of the Jagadguru, the Sri Mukha, the Amukha, and the Prasthavana into English.

Let me conclude now after offering my salutations at the revered feet of His Holiness the Jagad Guru.

Annamalainagar, Paṇḍitarāja, **V. Subrahmanya Sastri,**

---

* The asterisks denote how illustrations are given in the Sanskrit preface.

॥ श्रीगुरुभ्यो नमः ॥

# ॥ प्रस्तावना ॥



वक्तारमासाद्य यमेव नित्या सरस्वती स्वार्थसमन्विताऽभूत् ।
निरस्तदुस्तर्ककलङ्कपङ्का नमामि तं शंकरमर्चिताङ्घ्रिम् ॥

ललितैः पदविन्यासैः या नृत्यति विबुधवदनरङ्गेषु ।
सच्छास्त्रवेदवाद्यैः सरस्वतीं तां नमस्यामः ॥

परमर्षयः परमकारुणिकाः दुःखपङ्कनिमग्नं जगदुद्दिधीर्षवः न्याय-वैशेषिकसांख्ययोगमीमांसावेदान्तदर्शनानि प्रणिन्युः । तेषु वेदान्तदर्शनं दर्शनी-यतमं दर्शनम् ।

**न्यायाचार्याः आत्मतत्त्वविवेके**

'न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिः तद्बाधके बलिनि वेदनये जयश्रीः' इत्युद्घोषयन्ति ।

**भट्टपादाश्च**

'इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन ।'

इति आत्मप्रबोधदार्ढ्यस्य वेदान्तदर्शनपरिशीलनाधीनतामुपदिशन्ति । 'यद्यप्यात्मा निष्प्रपञ्चं ब्रह्मैव, तथाऽपि कर्मप्रसङ्गेन तथोक्तम्' इति वदन्तः **प्रभाकरगुरवोऽपि** वेदान्तदर्शनसिद्धमात्मस्वरूपमेव तात्त्विकमिति निरूपयन्ति ।

एवं दार्शनिकप्रवरैः पुरस्कृतं वेदान्तदर्शनं **भगवता वेदव्यासमहर्षिणा** वेदान्तवाक्यकुसुमग्रथनाय सूत्रात्मना निबद्धम् । तच्च चतुरध्यायीरूपं वेदान्त-वाक्यतात्पर्यनिर्णायकन्यायनिरूपकाधिकरणभेदगर्भितेन प्रसन्नगम्भीरेण भाष्येण

भूषयामासुः **श्रीमच्छंकरभगवत्पादाः** । तच्च भाष्यं व्याख्योपव्याख्याभिर्भूषितया **श्रीवाचस्पतिमिश्रनिर्मितभामत्या** तथाविधया **श्रीपद्मपादाचार्यविरचितपञ्चपादिकया** अन्याभिः स्वतन्त्रव्याख्याभिश्चोपबृंहितं चकास्ति। तदिदमधिकरणप्रस्थानं वदन्ति विपश्चितः ।

स्वतन्त्राभिर्युक्तिभिः परकीयानाक्षेपान् निरस्य वेदान्तवाक्यनिर्णीतान् सिद्धान्तान् व्यवस्थापयन्तः औपनिषदाः नैकान् प्रबन्धान् निबबन्धुः । तेषु श्रीमधुसूदनसरस्वतीभिः 'भगवान् खण्डनकारः' इति सबहुमानमुद्घोष्यमाणैः कवितार्किकसार्वभौमैः **श्रीश्रीहर्षमिश्रैः** निबद्धः अनुभूयमानस्य भेदप्रपञ्चस्य अनितरसाधारण्या सरण्या युक्तिबाध्यतानिरूपणेन अनिर्वचनीयतां बोधयन् अनिर्वचनीयतासर्वस्वापराभिधानः **खण्डनखण्डखाद्यग्रन्थः** उत्तमं स्थानमारोहति । स चायं बहुभिः पण्डिताग्रेसरैः नैयायिकप्रवरैः **श्रीशंकरमिश्रशिरोमणिभट्टाचार्यादिभिश्च** व्याख्यातः उत्कर्षस्य परां काष्ठामधिरूढो विलसति । सिद्धिकारनृसिंहाश्रमश्रीचरणादिभिः बहुभिः सबहुमानं व्याख्यातस्य **संक्षेपशारीरकस्य** निर्मित्या औपनिषदं तत्त्वं निरधारयन् **श्रीसर्वज्ञात्ममुनयः** । एवं **नृसिंहाश्रमश्रीचरणैः** युक्तिप्रधाना निबन्धा विरचिताः । **श्रीचित्सुखाचार्याश्च तत्त्वप्रदीपिका**भिधानेन प्रबन्धेन औपनिषदसिद्धान्तं स्थापयामासुः । अन्यैश्च विपश्चिद्भिरेतादृशा बहवो निबन्धाः प्रकाशिता वर्तन्ते । इदञ्च वादप्रस्थानमाहुर्विद्वांसः ।

आनन्दतीर्थीयमतावलम्बिनः **श्रीव्यासरायतीर्थाः** पण्डितमणयः परिच्छेदचतुष्टयगर्भिते **न्यायामृतनामके** ग्रन्थे अद्वैतसिद्धान्तान् दूषयामासुः ।

'मधुसूदनसरस्वत्याः पारं वेत्ति सरस्वती ।
पारं वेत्ति सरस्वत्या मधुसूदनसरस्वती ॥'

इति सबहुमानं श्रीब्रह्मानन्दसरस्वतीभिरभिहिताः **श्रीमधुसूदनसरस्वत्यः** परिच्छेदचतुष्टयात्मकेन अनुद्वेजकवाक्यसंदर्भेण **अद्वैतसिद्धि**प्रबन्धेन

न्यायामृतोक्तानि दूषणानि आनुपूर्व्येण पराचक्रुः। ततः अद्वैतसिद्धिप्रतिपादित-युक्तिदूषणपरः **न्यायामृततरङ्गिणी**नामको निबन्धः न्यायामृतव्याख्यारूपः **श्रीरामतीर्थैः** विनिर्मितः। दुरवगाहगभीरत्वेन पण्डितमण्डलीषु प्रथितेन **गौड-ब्रह्मानन्दीय**नाम्ना विश्रुतेन **लघुचन्द्रिका**भिधानेन **गुरुचन्द्रिका**भिधानेन च व्याख्यानेनाद्वैतसिद्धिं भूषयित्वा तरङ्गिणीदर्शितानि सर्वाणि दूषणानि सुदूरमुत्सारयामासुः **श्रीब्रह्मानन्दसरस्वत्यः**। लघुचन्द्रिका च नैयायिकाग्रगण्यैः **श्रीविट्ठलमिश्रै**र्व्याख्याता सर्वान् ग्रन्थानतिशेते। **श्रीवनमालिमिश्राश्च** **न्यायामृतसौगन्ध्य**नामके न्यायामृतव्याख्याने ब्रह्मानन्दीयोक्तानि दूषयामासुः। तानि च दूषणानि **श्रीभट्टत्र्यम्बकशास्त्रिपादैः** **अद्वैतसिद्धान्तवैजयन्त्यां** पराकृतानि। परन्तु सौगन्ध्यं वैजयन्ती च न साकल्येनोपलभ्येते। न्यायामृतसौगन्ध्यदूषणपरः **सौगन्ध्यविमर्शः** **श्रीयुतानन्तकृष्णशास्त्रिमहोदयै**र्विरचितोऽस्ति।

सिद्धान्तवैजयन्तीपरिशीलकाः श्रीविट्ठलेशीयसहितब्रह्मानन्दीयास्वाद-रसिकाः नैयायिकाग्रगण्याः विशिष्टाद्वैतमतावलम्बिनः **अनन्दाल्वारिति** विश्रुताः **श्रीमदनन्ताचार्याः** लघुचन्द्रिकादूषणपरं **न्यायभास्कर**नामानं प्रबन्धं रचयामासुः। अद्वैतसिद्धिप्रथमपरिच्छेदे विस्तृते सकलदोषशून्यतया मिथ्यात्वानुमानं व्यवस्थापितम्। यदाहुः सिद्धिकाराः प्रथमपरिच्छेदावसाने

उपाधिबाधप्रतिपक्षशून्यं विपक्षबाधागमसव्यपेक्षम्।
दृश्यत्वमव्याहतमम्बरादिमिथ्यात्वसिद्धौ सुदृढं हि मानम्॥ इति।

तत्रादिमेन संकुचितेन ग्रन्थेन मिथ्यात्वानुमाने पक्षं पञ्चविधसाध्यं मिथ्यात्वमिथ्यात्वं त्रिविधहेतुं चित्सुखाचार्यदर्शितमपरञ्च लिङ्गं निरूप्य निरुपाधिकत्वव्यवस्थापनमकारि। स एवांशः द्वादशभिः प्रकरणैः दूषितोऽस्मिन् न्यायभास्करे। श्रीमदनन्ताचार्याः श्रीगदाधरभट्टाचार्यादृतया नातिविस्तृतया नातिसंक्षिप्तया उद्वेजकवाक्यलेशेनापि रहितया नव्यनैयायिकशैल्या प्रमेयान्

(6) पक्षान्तरावतरणिकायां वर्णितं पूर्वपक्षानङ्गीकारनिमित्तमेव दूषणतया तत्र तत्र निर्दिशन्ति। तथा हि—मिथ्यात्वघटकाभावः पारमार्थिक इत्येकः पक्षः। व्यावहारिक इत्यपरः। 'अतात्त्विक एव वा निषेधोऽयम्' इति मूलग्रन्थावतरणिकायां श्रीब्रह्मानन्दसरस्वतीभिः प्रतिपादितमेव तात्त्विकत्वपक्षदूषणतया निरूपयन्ति। मिथ्यात्वमिथ्यात्वविचारे च प्रपञ्चगतसत्यत्वस्य प्रातिभासिकत्वपक्षं परित्यज्य व्यावहारिकत्वपक्षाङ्गीकरणे प्रतिपादितं निमित्तमेव दूषणतया विस्तरेणाभिहितम्।

(7) क्वचित् लघुचन्द्रिकायां शङ्कितमुद्धृतञ्च दूषणं चरमदूषणतया निर्दिश्यते। यथा—मिथ्यात्वमिथ्यात्वविचारे परिहृतोऽपि 'अभेदोपादाना भेदकल्पना' इतिभामतीविरोधः चरमदोषतया वर्णितः। पञ्चममिथ्यात्वविचारे वाचस्पतिमिश्रमते अखण्डाकारवृत्तेरपि स्वोपहितब्रह्मरूपबाधितार्थविषयकत्वेन भ्रमत्वात् दोषाजन्यज्ञानविषयाप्रसिद्ध्या तदन्यत्वरूपसाध्याप्रसिद्धिः दोष उद्भावितः। तदनन्तरमसत्ख्यातिस्वीकारेणाप्रसिद्धिपरिहारमाशङ्क्य प्रकारान्तरेणाप्रसिद्धिरभिहिता। ततश्च ग्रन्थानारूढः साध्यपरिष्कारः स्वयमुद्भाव्य निराकृतः न्यायभास्करे। अत्र च प्रकरणे लघुचन्द्रिकायामुक्तः वाचस्पतिसंमतप्रमात्वनिर्वचननिरूपणेन दोषाजन्यज्ञानविषयाप्रसिद्धिदोषपरिहारो नैवोद्घाटित इति विभावनीयम्।

(8) श्रीवाचस्पतिमिश्रमतेन शुद्धंस्वप्रकाशमिति वाक्यार्थविमर्शनावसरे लघुचन्द्रिकोक्तप्रमेयानेव पूर्वोत्तरपक्षभावव्यत्यासेन दूषणसरण्या निरूप्य अन्ते असमानप्रकारकज्ञानस्य प्रतिबन्धकत्वाभावाभिप्रायेण 'स्वप्रकाशत्वं शुद्धवृत्ति न वेति संशयानिवृत्तेः' इत्येकेन दूषणवचनेनोपसंहारः दूषणग्रन्थरचनाकौशलमेव केवलमावेदयति। मणिमन्त्रादिन्यायेनानुभवानुरोधादसमानप्रकारकज्ञानस्यापि प्रतिबन्धकत्वाभिप्रायेणैव विचारस्यास्य प्रक्रान्तत्वेन अवसाने तदप्रतिबन्धकत्वाभिप्रायमूलकाभिधानस्यानुचितत्वात्।

(9) जडत्वविचारे ज्ञानपदप्रयोज्यमुख्यविशेष्यत्वावच्छिन्नभेदस्य हेतुत्वविमर्शनावसरे पूर्वपूर्वनिरूपितदोषान् परिहृत्यान्ते 'चैत्रीयघटाद्याकारवृत्तिनिष्ठप्रतिबिम्बप्रयोजकशुद्धचितमादाय मैत्रीयज्ञानव्यवहारापत्तेर्वारणाय ज्ञाधात्वर्थे शुद्धचितो न प्रवेशः किन्तु मनोऽवच्छिन्नचितः इति भवद्भिरेव बिन्दुटीकायामुक्तत्वेन मनोऽवच्छिन्नचित एव विशेष्यांशत्वेन तदवच्छिन्नभेदस्य मनोऽवच्छिन्नचित्यभावेन भागासिद्धेः शुद्धचिति व्यभिचारस्य च प्रसङ्गात्' इति चरमदूषणपरः उपसंहारग्रन्थो लक्ष्यते। लघुचन्द्रिकायां जडत्वविचारे 'ज्ञानपदस्य वाच्यं वृत्त्यवच्छिन्नं चैतन्यम् ; वृत्त्यवच्छिन्नत्वञ्च वृत्तिसुखादिनिष्ठप्रतिबिम्बप्रयोजकं यन्मनोमायान्यतरावच्छिन्नचैतन्यं तदात्मकत्वम्। साक्षिणः शुद्धिचिद्रूपस्यैव अधिष्ठानत्वेन ज्ञानत्वात् उक्तान्यतरावच्छिन्नचिदात्मकचितो ज्ञानत्वमुक्तम्' इति स्पष्टमेव शुद्धचितः ज्ञानपदप्रयोज्यमुख्यविशेष्यत्वमभिहितम्। बिन्दुटीकायामपि न्यायभास्करप्रदर्शितपक्षनिरूपणानन्तरं 'एवं जानात्यर्थोऽपि पूर्वोक्तरीत्या प्रतिबिम्बप्रयोजकमनोऽवच्छिन्नचित्तादात्म्यविशिष्टःसाक्ष्येवोच्यताम्' इति निष्कृष्टपक्षोऽभिहितः। सत्यां चैवं वस्तुस्थितौ लघुचन्द्रिकायां बिन्दुटीकायाञ्च निष्कृष्टतयाऽभिहितस्य शुद्धचितो विशेष्यत्वस्य मनागप्यनाविष्करणं बिन्दुटीकायामुक्तपक्षान्तरेण दूषणोपसंहारश्च दूषणग्रन्थरचनाकौशलं व्यनक्ति।

(10) 'अस्तिब्रह्मेत्यत्र लकारः साधुत्वार्थः' इतिमूलव्याख्यानावसरे लघुचन्द्रिकायां लकारस्याश्रयत्वार्थकत्वमङ्गीकृत्य असत्त्वापादकाज्ञानविरोधिचितः सत्तारूपत्वे निरुक्तवाक्यात् उक्तसत्ता ब्रह्माश्रितेति बोधं कण्ठत एवोक्त्वा प्राचीनसिद्धान्ते नोक्तचित् सत्ता किन्तु शुद्धचिदेव तत्पक्षे ब्रह्मविशेष्यकस्य सत्ताविशेष्यकस्य च बोधस्य निर्धर्मितावच्छेदकस्यासंभवेन ब्रह्मकर्तृकत्वस्य सत्तायां बाधितत्वेन च सत्यंज्ञानमितिवत् ब्रह्मास्तीतिवाक्यमप्यखण्डार्थमिति प्रत्ययः साधुत्वार्थः इति भावो वर्णितः।

सत्यां चैवं वस्तुस्थितौ 'ब्रह्मपदस्य स्वरूपमात्रार्थकत्वेऽपि निर्धर्मितावच्छेदकबोधानङ्गीकारेऽपि आख्यातस्य साधुत्वमात्रार्थकत्वमयुक्तम्। बाध्यत्वा-

भावः सत्तेति कल्पे असत्त्वापादकाज्ञानविरोधिनी चित् सत्तेति पक्षेऽपि ब्रह्माभिन्नाश्रयिका तादृशसत्तेति बोधस्य धात्वर्थविशेष्यकस्य संभवात् धात्वर्थविशेष्यकस्यैव बोधस्य स्मृत्यनुमतत्वात्' इति दूषणोपसंहारोऽपि तादृश एव मन्तव्यः ।

(11) परिच्छिन्नत्वविचारे घटादयः स्वानुगतप्रतिभासे वस्तुनि कल्पिताः विभक्तत्वात् इत्यानन्दबोधाचार्यानुमाननिरूपणावसरे ब्रह्मानन्दीये 'कल्पितत्वं स्वाभाववतिज्ञेयत्वमेव विवक्षितं तथैव 'रज्ज्वा इदमंशे विभज्यते' इति मूलस्वारस्यात्' इत्यभिहितम् । घटादिकं सद्रूपे कल्पितमिति ब्रह्मसिद्धिकारोक्तानुमाने सद्रूपेकल्पितत्वं सद्रूपज्ञाननिवर्त्यत्वमिति च प्रतिपादितम् । सत्यां चैवं वस्तुगतौ आनन्दबोधाचार्यानुमाने ज्ञाननिवर्त्यत्वरूपकल्पितत्वनिवेशाभिप्रायेण दूषणजालनिरूपणं मनागपि ब्रह्मानन्दीयोक्ताशयस्यानाविष्करणञ्च ग्रन्थविस्तरकुशलतां प्रकटीकरोति ।

(12) दृश्यत्वविचारे प्रसङ्गागतः प्रतिकर्मव्यवस्थाप्रकरणे लघुचन्द्रिकायामुक्तस्य इच्छतिकरोत्याद्यर्थस्य विमर्शनप्रकारः नैयायिकप्रक्रियावगमे परमं साहाय्यमादधाति ।

(13) भूतले घटोनास्तीत्यादौ प्रथमान्तार्थविशेष्यकस्य नञर्थविशेष्यकस्य च बोधस्य तात्पर्यानुसारेण व्यवस्थापके शिरोमणिभट्टाचार्यकृतनञ्वादे प्रतिपादिताभिः घटादिविशेष्यकभूतलवृत्तित्वाभावप्रकारकबोधस्वीकारयुक्तिभिः नेहनानेत्यत्र नञर्थाभावविशेष्यकबोधं दूषयित्वा अन्ते 'तात्पर्यवशात् द्वैताभावे द्वैतवद्ब्रह्मवृत्तित्वबोधाङ्गीकारेऽपि' इत्यभिदधानाः श्रीमदनन्ताचार्याः नैयायिकानां नञ्वादस्मृतिमादधति ।

(14) नेहनानेतिश्रुत्यर्थविचारावसरे अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वनिरूपकलघुचन्द्रिकाविवरणे तथा 'ब्रह्मभिन्नंप्रपञ्चनिषेधादिकमतात्त्विकमित्यतात्त्विकत्वेन बोधयन्त्याः श्रुतेरप्रामाण्यासंभवात्' इतिसिद्धिविवरणलघु-

चन्द्रिकाव्याख्याने च विट्ठलेशीयोक्तानेव प्रमेयान् पूर्वोत्तरपक्षभावव्यत्यासेन तदीयवाक्यैरेव निरूप्य अवसाने उपरितनमूलग्रन्थे विस्तरेण निरस्तस्यैव दूषणस्य प्रतिपादकेन 'प्रत्यक्षबाधितेऽपि श्रुतेः प्रामाण्ये आदित्यो यूपः यजमानः प्रस्तरः इत्यादौ मीमांसकानां लक्षणाकथनस्य भवतामपि प्रत्यक्षाविरोधाय तत्त्वमसीत्यादौ लक्षणावर्णनस्यायुक्तत्वापत्तेः' इति ग्रन्थेन उपसंहारः तेषां विट्ठलेशीयरसिकतामावेदयति ।

(15) क्वचित् लघुचन्द्रिकावतरणिकायां विट्ठलेशीयोक्तं सचमत्कारं लघुचन्द्रिकादूषणतया निरूपयन्ति । प्रथममिथ्यात्वविचारे 'माध्वान्प्रति सद-सद्विलक्षणत्वसाधकन्यायप्रयोगे बाधः' इति लघुचन्द्रिकास्थं शङ्काग्रन्थं तत्स-माधानपरलघुचन्द्रिकाग्रन्थावतरणिकायां स्थितैः 'यत्र मतद्वयेऽपि साध्यविरहः' इत्यादिभिः विट्ठलेशीयवाक्यैरेव दूषयन्ति ।

(16) श्रीविट्ठलेशीयपरिहृतानंशान् दूषणतयोद्भावयन्ति—तथा हि

(क)) सदसद्विलक्षणत्वविचारे सत्यंसर्वंवाच्यमितिधीविशेषविषयत्वा-वच्छिन्नभेदरूपसद्भेदस्य निरूपणावसरे 'इदन्त्ववधेयम्' इत्यादिना विट्ठले-शीयग्रन्थेनोद्भाविता आक्षेपा एव दोषतया निरूपिता न्यायभास्करे । लक्षणा-भिप्रायेणातिव्याप्तिपदं तत्र प्रयुक्तम् । अत्र तु अनुमानदोषतात्पर्येण अर्थान्तर-पदं संघटितमिति विशेषः । परन्तु तदनन्तरेण 'अत्रेदमालोचनीयम्' इत्यादि-नोक्ता तत्परिहाररीतिर्नोदभावि ।

(ख) द्वितीयमिथ्यात्वविचारे पारमार्थिकनिष्ठं यत् व्यावहारिकाभाव-प्रतियोगित्वं इत्यादिके परिष्कारे तादृशप्रतियोगित्वाप्रसिद्धिः 'पारमार्थिक-निष्ठत्वं वैज्ञानिकं तेन नाप्रसिद्धिः' इतिग्रन्थेन परिहृतैव दोषतया वर्णिता ।

एवं नेहनानेतिश्रुत्यर्थविचारावसरे दृश्यवति दृश्याभावः अप्रातिभासिकः श्रुतिप्रमितत्वात् इत्यनुमानं विट्ठलेशीयपरिहृतेनैव स्वाप्ने व्यभिचारेण दोषेण दूषितम् ।

(ग) चतुर्थमिथ्यात्वविचारे इदानींगेहेघटोनास्तीतिबुद्धेः एतत्काले गृहनिष्ठघटाधिकरणतावच्छेदकत्वाभावो विषयः इतिपक्षे तादृशाधिकरणतावच्छेदकत्वस्यैवाप्रसिद्धिः 'न चाप्रसिद्धिः इदानीं गेहे घटः इत्यारोपविषयतया आध्यासिकस्य प्रसिद्धेः' इतिग्रन्थेन निरस्तैव दूषणतयोद्भाविता।

तत्रैव स्वसामानाधिकरण्यावच्छेदकघटत्वादिमत्त्वरूपघटादिनिष्ठव्याप्तिनिरूपकत्वघटितं कारणत्वमित्यस्य विमर्शनावसरे 'आधेयतावच्छेदकत्वस्यातिप्रसक्तधर्मसाधारणतया तद्विशेषरूपसामानाधिकरण्यावच्छेदकत्वस्यापि तथात्वावश्यंभावेन तादृशधर्मवत्त्वस्य व्याप्तिरूपत्वाभावात्' इति दूषणोक्तिः तत्स्थलीयेन 'अवच्छेदकत्वञ्चेदमनतिप्रसक्तत्वनियतं स्वरूपसंबन्धविशेषरूपं दीधितिकारोक्तं पारिभाषिकं वा, तेन रासभत्वावच्छिन्ने नोक्तव्यवहारापत्तिः' इति विठ्ठलेशीयग्रन्थेन पराहता नोत्थानं लभते।

(घ) दृश्यत्वविचारे स्वान्यत्वाभावविशिष्टा स्वनिष्ठापरोक्षत्वापेक्षणीया चित् यस्य तत्त्वं स्वप्रकाशत्वं तादृशस्वप्रकाशत्वाभावः दृश्यत्वमिति पक्षः श्रीविठ्ठलेशीयपरिहृतेनैव आनन्दांशे व्यभिचारेण चरमदोषेण दूषितः।

(17) नैयायिकसरण्या विषयविवेचका अपि श्रीमदनन्ताचार्याः अर्थान्तरदोषकथने नैयायिकसंप्रदायमननुवर्तमानाः विलक्षणां सरणिमाश्रयन्ते। प्रमाव्यापकस्वस्वसंस्कारान्यतराभावप्रतियोगित्वसाधकानुमाने ब्रह्मज्ञानानन्तरं जगतः सत्त्वेऽपि अज्ञानप्रयुक्ततत्संस्काराभावे तादृशप्रमानिष्ठाभावप्रतियोगिनि तादृशप्रतियोगित्वावच्छिन्नभेदाङ्गीकारमात्रेण उक्तसाध्यसिद्धिसंभवादर्थान्तरम्, साध्यकोटौ प्रतियोगितायां व्यधिकरणसंबन्धानवच्छिन्नत्वनिवेशे व्यधिकरणसंबन्धावच्छिन्नप्रतियोगितायामेव तदनवच्छिन्नत्वसिद्धिमादायार्थान्तरम्, इत्येवमादि दूषणं बहुलमुपलभ्यते न्यायभास्करे। इयञ्च सरणिः न नैयायिकसम्प्रतिपन्ना। न हि वह्निरद्विष्ठातीन्द्रियदाहानुकूलधर्मसमवायी इत्यनुमाने द्विष्ठ एव संयोगे अद्विष्ठत्वसिद्धिमादाय शब्दो नित्यत्वाभाववानित्यनुमाने शब्दगते

अभावान्तरे नित्यत्वप्रतियोगिकत्वसिद्धिमादाय वा अर्थान्तरं कथयन्ति कथकाः ।

एवं बुद्धिवैशद्यापादकविचारबहुलत्वात् रचनाविशेषेण सिद्धिचन्द्रिका-विठ्ठलेशीयादिप्रतिपाद्यसम्पिण्डितार्थबोधकत्वाच्च वेदान्तदर्शनावलम्बिनामवश्य-विमर्शनीयो न्यायभास्कराभिधो निबन्धो विलसति ।

एतद्ग्रन्थाभिहितदूषणनिरसनाय वेदान्तदर्शनावलम्बिभिः पूर्वैः विप-श्चिद्भिः विरचिताः चत्वारो निबन्धा विद्योतन्ते ।

**तेषु प्रथमः न्यायेन्दुशेखरः कुणिगल् श्रीलक्ष्मीनृसिंहशास्त्रिपादैः-विरचितः ।**

न्यायभास्करदन्तानां भञ्जकं रञ्जकं सताम् ।
न्यायेन्दुशेखरं कुर्वे नत्वा बालेन्दुशेखरम् ।

इत्यादिमपद्येन न्यायभास्करखण्डनपरता अस्य प्रकटिता । ईषदसमाप्तः पक्षतावच्छेदकविचार एव समुपलभ्यते । विमतमितिपक्षग्रहणमयुक्तमित्यादि बालव्यामोहकं दूषणं नानुवाद्यतामपि भजतेऽत्र । विस्तरेण न्यायभास्करोक्तस्य संक्षेपेणानुवादः तन्निरासश्च दृश्यते । ब्रह्मप्रमातिरिक्ताबाध्यत्वस्य गगनाभाव-विशिष्टत्वमित्यनुगमकरणं न्यायभास्करकारैः स्वयमुत्थापिते ब्रह्मान्यविशिष्टा-न्यत्वमित्यनुगमे संबन्धविशेषवैयर्थ्यनिरूपणं महावाक्यजन्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशेऽपि विषयताविशेषस्य प्रवेशावश्यकतानिरूपणं सत्यं-ज्ञानमितिवाक्यजन्ये तत्त्वमसीतिवाक्यजन्ये च निर्विकल्पके विषयताभेद-निरूपणञ्च ग्रन्थकाराणां नव्यन्यायपाण्डित्यप्रकर्षं स्फुटयति ।

**द्वितीयः न्यायेन्दुशेखरः महामहोपाध्यायश्रीत्यागराजाध्वरी-न्द्रैर्विरचितः ।** 'तथा परः कृतेश्चक्रे न्यायभास्करसंज्ञताम्' इत्यभिधाय 'अद्वैतसिद्धिशुभचन्द्रिकयोः प्रचारमार्गेऽर्पितं विषमकण्टकमुज्जिहीर्षे' इति प्रतिज्ञाकरणेन न्यायभास्करदूषणपरता अस्य प्रत्यपादि । न्यायभास्करीयाः सप्त

भङ्गाः भञ्जिताः सप्तभिरुल्लासैः । मिथ्यात्वविचारावसानोऽयं प्रबन्धः । न्यायभास्करोक्तानि सर्वाणि दूषणानि आनुपूर्व्येणोद्धृतानि । संग्राहकश्लोकगर्भिता प्रसन्ना नव्यनैयायिकसरणिरादृता प्रमेयप्रतिपादने । सिद्धान्तवैजयन्त्याः त्र्यम्बककृतिकृतत्वेनोल्लेखवत् श्रीविट्ठलेशीयव्याख्याया अनुल्लेखनात् सा न परामृष्टेति अवगच्छामः । प्रथममिथ्यात्वविचारे 'माध्वादीन् प्रति प्रयोगे बाधः' इति लघुचन्द्रिकार्थप्रतिपादनं द्वितीयमिथ्यात्वविचारे नेहनानेतिश्रुत्यर्थनिरूपणावसरे अप्रातिभासिकत्वानुमित्यनन्तरं मानसबोधः इति परकीयानुवादस्य दूषणाभिधानञ्च पूर्वोक्तमुपोद्बलयति । न केवलमेते परोक्तदूषणान्युद्धरन्ति, किन्तु तदभिमतानर्थानपि निराकुर्वन्ति । 'तमेव विदित्वा' इति श्रुतेः तं विदित्वैवेति योजनया पराभिमतस्यार्थस्य ध्यानस्य मुक्तिहेतुत्वेऽपि न विरोधः इति परोक्तेश्च विस्तरेण निराकरणं नेहनानेतिश्रुतेः पराभिमतार्थदूषणं संकल्पस्य ज्ञानरूपत्वखण्डनं 'शुक्तौ भासमानरूप्यस्यैव शुक्तिरूप्यशब्दार्थत्वात् तस्य चास्मन्मते सत्यत्वात्' इति परोक्तेः युक्तिभिरपाकरणञ्च विदुषां हृदयमावर्जयति । सिद्धान्तसिद्धे प्रतियोग्यभावयोरविरोधे सत्ख्यातिवादिनं परं प्रति इदंरजतमितिभ्रमस्थले शुक्तित्वरजतत्वयोरविरोधस्योदाहरणत्वोक्तिरतिमनोहरा दृश्यते । नव्यन्यायव्याकरणपूर्वोत्तरमीमांसादर्शनेषु पाण्डित्यप्रकर्षः प्रतिफलत्यस्मिन् न्यायेन्दुशेखरे ।

स्वगुरूणामाज्ञया **महामहोपाध्यायश्रीहरिहरशास्त्रिभिः** न्यायभास्करीयाणां पञ्चानां दृश्यत्वादिभङ्गानां भञ्जकः **न्यायेन्दुशेखरस्य परिशिष्टभागः** विस्तृतां प्रतिपादनसरणिमवलम्ब्य विरचितः । स्वाचार्या इव इमे शास्त्रिवर्याः न्यायभास्करोक्तदूषणोद्धारमिव 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेः विशिष्टाद्वैतिसंमतमर्थं अपहतपाप्मत्वादिनिर्वचनं मनुष्योऽहमितिप्रतीतिविषयं तत्त्वमसिवाक्यार्थञ्च तदभिमतं निराकुर्वन्ति ।

तृतीयस्तु **न्यायभास्करखण्डननामा** निबन्धः दृश्यत्वविचारावसानः अष्टानां भङ्गानां भञ्जकः **महामहोपाध्यायश्रीरामसुब्रह्मण्यशास्त्रिपादैर्विरचि-**

तोऽस्ति। तत्र संकुचितेन वाक्यसन्दर्भेण दूषणान्युद्धृतानि। एते शास्त्रिपादाः गौडपादादिगौडब्रह्मानन्दान्ताद्वैतिसार्वभौमैरनुक्तमर्थं न समर्थनीयं मन्यन्ते। चन्द्रिकाग्रन्थदूषणान्येव विमृशन्ति। ग्रन्थानारूढानां विद्वत्संमतानां दृश्यत्वपरिष्काराणां न्यायभास्करोक्तदूषणान्यनूद्यापि नोद्धरन्ति। तत्र च गौडब्रह्मानन्दान्ताद्वैतिभिस्तेषां परिष्काराणामनुक्तत्वेनासमर्थनीयत्वं हेतुं निरूपयन्ति। चतुर्थमिथ्यात्वविचारे चन्द्रिकानारूढमनुमानं स्वयमसमर्थनीयत्वेनोक्त्वापि समर्थयन्ति। वैजयन्तीग्रन्थं तत्कर्तारं वा नोल्लिखन्ति। श्रीविठ्ठलेशीयग्रन्थपरिशीलका अपीमे क्वचित् तेन विसंवदन्ते। शुद्धचिति प्रातिभासिकचिद्भेदासंभवप्रमुखान् इतरपण्डितापरिशीलितान् प्रमेयान् प्रतिपादयन्ति।

**चतुर्थस्तु मुद्राप्येदानीं प्रकाश्यमानः ब्रह्मानन्दीयभावप्रकाशः पलगानेरिग्रामाभिजनैः महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिपादैर्विरचितः** उद्वेजकवाक्यरहितया नातिसंक्षिप्तया नातिविस्तृतया च नैयायिकसरण्या प्रमेयनिरूपकः न्यायभास्करीयाणां द्वादशानामपि भङ्गानां भञ्जकः इतरेभ्यो निबन्धेभ्यो विशिष्यते। एते हि शास्त्रिपादाः न्यायभास्करं तत्कर्तारं वा न नाम्ना निर्दिशन्ति। परन्तु न्यायभास्करानुपूर्व्यनुसारेण तदुक्तदूषणान्यनूद्य निराकुर्वन्ति। द्वितीयमिथ्यात्वविचारादौ नेहनानेतिश्रुतिजन्यशाब्दबोधविमर्शं कुर्वन्ति। न्यायभास्करे तु द्वितीयमिथ्यात्वविचारावसाने स संघटितः।

अथैतेषां प्रमेयनिरूपणपद्धतिं किञ्चिदिव चिन्तयामः—

एते विमर्शकान्तरापरिशीलितसरण्या दूषणान्युद्धरन्ति।

(क) तथाहि—(1) ब्रह्मप्रमातिरिक्ताबाध्यत्वविचारे चरमोक्तस्य ब्रह्मज्ञानाव्यवहितपूर्ववृत्तिभ्रमसिद्धप्रातिभासिके सिद्धसाधनस्य वारकं ध्वंसविशिष्टान्यत्वपरिष्कारं ज्ञानादज्ञानध्वंसानङ्गीकर्तृपक्षसाधारण्याभावेन चरमदोषेण न्यायभास्करदूषितं ध्वंसपक्षनिर्वाहपूर्वकं समर्थ्य ध्वंसानङ्गीकारपक्षे अन्यापरिशीलितेन स्वारसिकेन स्वप्रयुक्ताभावप्रतियोग्यज्ञानत्वस्वप्रयुक्ताभावप्रतियोग्य-

ज्ञानप्रयुक्तत्वैतदन्यतरसंबन्धेन अभावविशिष्टान्यत्वमित्यनुगमेन निरुक्तसिद्ध-साधनं वारयन्ति ।

(2) चिद्भिन्नत्वविचारे इतरापरामृष्टेन चित्त्वग्रहप्रतिबन्धकतावच्छेदक-विषयताश्रयभेदवत्त्वमिति परिष्कारेण चिति बाधकथनाय न्यायभास्करोदाहृताः नैकविधाश्चिद्भेदा वारिताः ।

(3) स्वनिष्ठप्रकारतेत्यादिकस्य द्वितीयमिथ्यात्वस्य न्यायभास्करोक्तः सोऽयं ककार इति निर्विकल्पकभ्रमविषयप्रातिभासिके अव्याप्तिदोषः निर्विक-ल्पकभ्रमाङ्गीकारेऽपि अन्यापरिशीलितस्य स्वनिष्ठप्रकारताभिन्नप्रकारतानिरूपि तत्वसंबन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववद्विषयताव्यापकाभावप्रतियोगि - त्वमिति तत्परिष्कारस्य समन्वयेनापाकृतः ।

(4) रजतादिपक्षके विशेषानुमाने रजतत्वेनघटाभावप्रतियोगितायां प्रकारतावच्छेदकरजतत्वपर्याप्तावच्छेदकताकत्वाभावेन दृष्टान्ते घटे साध्य-वैकल्यस्य न्यायभास्करोक्तस्य परीक्षायां उभयाभावप्रतियोगिताव्यावर्तकेन रजतत्वेनघटाभावप्रतियोगितायाश्च संग्राहकेण अन्यापरिशीलितेन प्रकारतावच्छे-दकधर्मापर्याप्तत्वप्रतियोगिताव्यधिकरणावृत्तित्वोभयाभाववदवच्छेदकताकप्रतियो - गितायाः तथा प्रकारतावच्छेदकधर्मभिन्नत्वस्वसमानाधिकरणत्वोभयाभाववद्धर्मा-वच्छिन्नप्रतियोगितायाश्च संघटनेन सिद्धसाधनसाध्यवैकल्ये उद्धरन्ति ।

(5) पारमार्थिकत्वावच्छिन्नप्रतियोगितानिवेशकल्पे पारमार्थिकत्वघट-त्वोभाभ्यां पटाभावमादाय सिद्धसाधनवारणाय इतरापरामृष्टं पारमार्थिकत्वेन किञ्चिद्धर्मविशिष्टवत्ताग्रहप्रतिबन्धकतावच्छेदकीभूतविषयताश्रयाभावप्रतियोगि - तानिवेशं कुर्वन्तः साध्याप्रसिद्धिमपाकुर्वन्ति ।

(6) तृतीयमिथ्यात्वविचारे न्यायभास्करच्छायानुसारिणम्—तादृशप्रमा-त्वव्यापकतावच्छेदकानुयोगिताविशिष्टधर्मवत्त्वं ज्ञाननिवर्त्यत्वम्, वैशिष्ट्यञ्च स्वनिरूपिता या स्वसमानविषयकत्वकालिकविशेषणत्वोभयसंबन्धावच्छिन्ना-

ज्ञानतत्संस्कारान्यतराभावप्रतियोगिता या च स्वनिरूपिता स्वप्रयोजकाज्ञान-समानविषयकत्वस्वाश्रयकालपूर्वत्वोभयसंबन्धावच्छिन्नाज्ञानप्रयुक्ततत्संस्कारा-न्यतराभावप्रतियोगिता तदन्यतरविशिष्टत्वसंबन्धेन, वैशिष्ट्यञ्च स्वावच्छेदक-त्वसंबन्धेन—इत्यनुगमं निरूप्य तेनैव ब्रह्मज्ञानानन्तरं जगतः सत्त्वेऽपि घटादेः स्वसमानविषयकत्वघटितव्यधिकरणसंबन्धेनाभावमादाय ब्रह्मज्ञानेन प्रातिभासिक-मात्रनिवृत्तावपि तदभावप्रतियोगित्वस्य प्रपञ्चे सिद्धिमादाय ब्रह्मज्ञानसमानवि-षयकनिर्विकल्पकानङ्गीकरणेन तथा ब्रह्मज्ञानानन्तरं कालानवस्थानानङ्गीकरणेन साध्यसिद्धिमादाय च न्यायभास्करोक्तानां सर्वेषामर्थान्तराणामनवकाशं निरू-पयन्ति ।

(7) भूतलेघटोनास्तीत्यादौ घटविशेष्यकभूतलवृत्तित्वाभावप्रकारकस्य घटाभावविशेष्यकभूतलवृत्तित्वप्रकारकस्य च बोधस्य शिरोमणिभट्टाचार्यादिभिः यथातात्पर्यं व्यवस्थापितत्वेऽपि घटविशेष्यकबोधजनकमेव तद्वाक्यमिति निर्वाहेण न्यायभास्करकाराणां नेहनानेतिश्रुतेः मिथ्यात्वबोधजनकत्वदूषणं यक्षानुरूपो बलिरिति न्यायानुसारेण नञर्थाभावविशेष्यकबोधस्यैव जनकं तद्वाक्यमिति व्यवस्थापनेन पराकुर्वन्ति ।

(8) 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' इति मन्त्रे विना लक्षणां सर्वपदानि सार्थकीकृत्य चेतनाचेतनात्मकसर्वप्रपञ्चाधारत्वेन ब्रह्म प्रक्रान्तमिति न्यायपेटिकाकारवाचस्पत्युक्तपक्षाभिमानिनं प्रपञ्चस्य सदसद्रूपत्व-वादिनं प्रति सदसद्विलक्षणत्वरूपसाध्योक्तिरिति च निरूपणं इतरानाकलितं विदुषां हृदयमावर्जयति ।

किं बहुना, टिप्पणेऽस्माकं तत्रतत्रान्येषां विदुषामभिसन्धिप्रकाशनेनैव ग्रन्थकाराणां विलक्षणा परिहाररीतिरवगन्तुं शक्यते ।

(ख) लघुचन्द्रिकादिग्रन्थप्रदर्शितानामनुमानानां परिष्काराणाञ्च दूष-णोद्धारेण समर्थनमिव ग्रन्थानुक्तानामपि वेदान्तिसंमतानां तेषां समर्थनं

कुर्वन्ति । चतुर्थमिथ्यात्वविचारे प्रकारतादिपक्षकमनुमानत्रयं दृश्यत्वविचारे तत्परिष्काराश्च समर्थिताः । स्वसमानसत्ताकज्ञानविषयत्वं वृत्तिनिरूपितनिरवच्छिन्नविषयत्वं स्वानतिरिक्तविषयकज्ञानाबाध्यवृत्तिविषयत्वं सत्यादिपदतात्पर्यविषयाविषयकवृत्तिविषयत्वमिति चत्वारः दृश्यत्वपरिष्काराः दूषिता न्यायभास्करे। सर्वानेतान् प्रामाणिकग्रन्थानारूढत्वादसमर्थनीयान् मन्यन्ते न्यायभास्करखण्डनकृतः । श्रीहरिहरशास्त्रिणः न्यायेन्दुशेखरद्वितीयभागे स्वसमानसत्ताकज्ञानविषयत्वं समर्थयामासुः । ब्रह्मानन्दीयभावप्रकाशकारास्तु वृत्तिनिरूपितनिरवच्छिन्नविषयत्वं विहाय त्रीनपि परिष्कारान् समर्थयन्ति ।

(ग) विठ्ठलेशीयपरिशीलका एते क्वचित् तदुक्तयुक्त्यैव दूषणमुद्धरन्ति।

यथा—प्रथममिथ्यात्वविचारे ज्ञानानिवर्त्यत्वरूपसत्त्वावच्छिन्नभेदस्य निवेशासंभवप्रस्तावे ज्ञानानिवर्त्यत्वस्य लघुधर्मसमनियतत्वं विठ्ठलेशीयरीत्यैव न्यायभास्करोक्तं दूषणमुद्धृत्य समर्थयन्ति ।

तत्रैव ब्रह्मणः भावरूपधर्मानाश्रयत्वेन सत्यंसर्वंवाच्यमितिज्ञानविषयतानाश्रयत्वात् ब्रह्मण्यतिव्याप्तेः विठ्ठलेशीयशङ्कितायाः न्यायभास्करे दूषणतयोद्भावितायाः परिहारः विठ्ठलेशीयोक्त एव निरूपितः। एवं तत्रैव शङ्कितः सद्भिन्नं सर्वमात्मभिन्नमितिज्ञानविषयत्वाभाववद्भेदः (सद्भेदः) इति परिष्कारः अनुगतप्रमात्वनिर्वचनपूर्वकं समर्थितः ।

द्वितीयमिथ्यात्वविचारे ज्ञानानिवर्त्यमात्रविशेष्यकधीरूपपारमार्थिकत्वावच्छिन्नप्रतियोगिताविमर्शनावसरे घटपटादिविशेष्यकधीरूपाणामुक्तपारमार्थिकत्वानां भिन्नभिन्नतया चालिनीन्यायेन घटादिविशेष्यकधीरूपपारमार्थिकत्वेन पटाद्यभावमादाय सिद्धसाधनदोषस्य न्यायभास्करोक्तस्योत्थितिरेव न संभवति, यति तत्स्थलीयः 'सा च (ज्ञानानिवर्त्यमात्रविशेष्यकधीः) सत्यंसर्वंवाच्यमित्याकारिका सिद्धान्तिमते ब्रह्ममात्रविषया परेषां प्रातिभासिकातिरिक्तमात्रविषयिणीति तदवच्छिन्नप्रतियोगितासाधने न सिद्धसाधनम्' इति विठ्ठलेशीयग्रन्थः

पर्यालोच्यते । अथापि विट्ठलेशीयाभिसन्धिमनुद्घाटयैव तुष्यतु दुर्जनः इति न्यायेन न्यायभास्कररीतिमवलंब्यैव दोषा दूरीकृताः ।

एवं द्वितीयमिथ्यात्वविचारे पारमार्थिकनिष्ठं यत् व्यावहारिकाभावप्रतियोगित्वमित्यादिके परिष्कारे तादृशप्रतियोगित्वाप्रसिद्धिदोषः मिथ्यात्वानुमितेराहार्यत्वापत्तिदोषः चतुर्थमिथ्यात्वविचारे घटवति घटाभावप्रत्यक्षं प्रति घटादावधिष्ठानगतसत्त्वारोपस्य प्रतिबन्धकतायां परोक्तदोषश्च विठ्ठलमिश्रीयाभिहितपरिहारमनुद्घाटयैव मार्गान्तरेणापाकृतः। प्रकटितश्चेदमस्माभिः तत्र तत्र टिप्पणे ।

(घ) (1) सत्यंज्ञानमितिवाक्यजन्यनिर्विकल्पकस्य तत्त्वमसीतिवाक्यजन्यनिर्विकल्पकासमानाकारत्वनिरूपणम् (2) समानाकारयोः ज्ञानयोरिव ज्ञानाज्ञानयोरपि विषयताभेदमनङ्गीकृत्य ज्ञानस्याज्ञानसमानविषयकत्वमज्ञाननिरूपितविषयतानिरूपकत्वरूपमिति वर्णनम् (3) ज्ञानाधीनस्वात्मकवस्तुसामान्याभावप्रतियोगित्वमितिपरिष्कारघटके स्वात्मकवस्तुसामान्याभावे निवेशितं स्वसमानसत्ताकत्वं ब्रह्मान्यविषयकज्ञानबाध्यत्वतदभाववत्कादाचित्कत्वान्यतररूपेणेति वर्णनञ्च भट्टत्र्यम्बकशास्त्रिणां मार्गमवलम्बते ।

वैजयन्तीसरण्यैव—इदंरूप्यंसदितिभ्रमे शुक्तिरूप्ये व्यावहारिकरजततादात्म्यभानविचारे एकत्रारोपितस्य अन्यत्र तादात्म्येनारोपासंभवदोषमुद्धरन्ति, ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वस्य मूलोक्तसाध्यस्य ब्रह्मानन्दीयपरिष्कारानाश्रयणेनापि मुद्गरपातनिवर्त्यघटादौ बाधं वारयन्ति, लघुचन्द्रिकानुक्तं सद्विविक्तत्वपरिष्कारञ्च निरूपयन्ति। प्रपञ्चः सत्यः मिथ्याभूतमिथ्यात्वकत्वात् इत्यनुमाननिराकरणानन्तरं 'अधिकं सिद्धान्तवैजयन्त्याम्' इति कण्ठत एव भट्टत्र्यम्बकशास्त्रिणां कृतिमुल्लिखन्ति ।

(ङ) न्यायभास्करकारा ग्रन्थविस्तरं रोचयन्ते यथा न तथा ब्रह्मानन्दीयभावप्रकाशप्रणेतारः। वेदान्तिरीत्या स्वस्मिन् स्वतादात्म्याभावं मिथ्यात्वन्यायेन तद्वृतितदभावं समानाधिकरणप्रतीतिसिद्धं भेदं चादाय भिन्नभिन्नप्रकरणे

पृथक् पृथक् न्यायभास्करोक्तदूषणानां परिहारः एकत्र प्रकरणेऽभिधानेनैव बोद्धुं शक्यः इत्यभिसन्धिना इतरप्रकरणेषु तादृशदूषणान्येव नानुवदन्ति ।

एवं ज्ञानप्रयुक्तेत्यादिमूलस्य ब्रह्मानन्दीयोक्तप्रथमव्याख्यापक्षे स्वयमभिहितस्य ज्ञानव्यापकतावच्छेदकानुयोगिताविशिष्टधर्मवत्त्वपरिष्कारस्य रीत्या व्यापकतास्थाने अधीनत्वघटनेन तृतीयव्याख्यापक्षीयपरिष्कारस्य बोद्धुं शक्यतां तेनैव तत्पक्षोक्तदूषणानां निरासस्य सुज्ञेयताञ्चाभिसन्धाय तृतीयव्याख्यानं तत्पक्षदूषणञ्च नोद्घाटयन्ति । यत्र ब्रह्मानन्दीये उत्तरकल्पावतरणिकाग्रन्थाभिहितानेव पूर्वपूर्वकल्पदोषतया प्रतिपाद्य अन्ते ब्रह्मानन्दीयपरिहृतेनैव दोषेणोपसंहृतं न्यायभास्करे तत्र स्थले 'अन्यत्सर्वं सुगमम्' इति गभीरां वाचोयुक्तिमाश्रयन्ते, न किमप्यनुवदन्ति दूषयन्ति च ।

साक्षात्कारत्वेनज्ञाननिवर्त्यत्वादिपरिष्कारेणोत्तरज्ञाननिवर्त्यपूर्वज्ञानादौ सिद्धसाधनवारणेऽपि मुद्गरपातनिवर्त्यघटादौ बाधवारणायावस्थितिसामान्याभावघटितपरिष्कारस्यैवादरणीयतायाः श्रीविठ्ठलमिश्रैरुक्तत्वात् तादृशपरिष्कारस्य समर्थनेनैव समीहितसिद्धिरिति मन्वानाः साक्षात्कारत्वेननिवर्त्यत्वादिपरिष्कारदूषणानि न विमृशन्ति । अहं ब्रह्म घटो विनाशी इत्यादिसमूहालम्बनस्याज्ञाननिवर्तकतापक्षस्यापि श्रीब्रह्मानन्दस्वामिभिः व्यवस्थापितत्वात् तद्विचारानुबन्धिनं 'तमेव विदित्वा' इतिश्रुत्यर्थविचारं नैवावतारयन्ति ।

(च) **मणिकारशिरोमणिभट्टाचार्यगदाधरभट्टाचार्यलोकनाथभट्टाचार्यादिविरचितग्रन्थानामुद्धरणपूर्वकं** तत्र तत्र वेदान्तिसंमतार्थानां निर्वहणेन **श्रीधर्मदत्तसूरिसरण्या** कार्यतावच्छेदके कारणाव्यवहितोत्तरत्वविषयतादिनिवेशादिप्रौढप्रमेयनिरूपणेन च नव्यन्यायरसिकानां वेदान्तिनामास्वादनीयः इतरैर्न्यायभास्करविमर्शकग्रन्थैरगतार्थोऽयं ब्रह्मानन्दीयभावप्रकाशः ब्रह्मानन्दीयदूषणपरिहारेणेव विषमाणां सिद्धिब्रह्मानन्दीयवाक्यानां साक्षादाशयाविष्करणेनापि अन्वर्थाख्यां प्राप्तो विजयते ।

विदुषां प्रमोदायास्माभिरस्य टिप्पणं संकलितमस्ति । कुत्रचित् मूलार्थ-परिज्ञानोपयोगिनैयायिकप्रक्रियाविशेषकथनेनावतरणिकादानेन च मूलार्था-विष्करणं एकत्रानुगमविवरणं अपरत्र स्वत्वस्यानुगतत्वपक्षाभिप्रायेण मूले प्रवृत्ते नवीनमतेनानुगमनिरूपणं अन्यत्र 'विद्वान्नामरूपाद्विमुक्तः' 'नेह नानास्ति किञ्चन' इत्यादिश्रुतेः पराभिमतार्थकथनेन श्रुत्यर्थविवादनिरूपणञ्च वेदान्तदर्श-नव्युत्पित्सूनां सुखावबोधायाकारि । 'अलमतिप्रसङ्गेन' इत्यादौ वक्तव्यविशेष-युक्तिः 'अन्यत्सर्वं सुगमम्' इत्यत्र सुगमताप्रकारः न्यायभास्करोक्तानां केषां-चित् दूषणानामनुवादाभावे निमित्तविशेषः विट्ठलेशीयपर्यालोचनायां न्याय-भास्करोक्तानां केषाञ्चिद्दोषाणामनुत्थानपराहतिः मूलापरिहृतकतिपयदूषणो-द्धारः इत्येवमादिकं पण्डितप्रकाण्डानां प्रमोदाय निरूपितमास्ते ।

एकस्य दोषस्य नैकविधपरिहाराणां युगपदवधारणं ग्रन्थकाराणामितरा-परिशीलितमार्गगामित्वपरिज्ञानञ्चेति प्रयोजनद्वयमभिसन्धायास्माभिः **तत्र तत्र श्रीत्यागराजाध्वरीन्द्राणां श्रीरामसुब्रह्मण्यशास्त्रिपादानां श्रीलक्ष्मी-नृसिंहशास्त्रिपादानां श्रीभट्टत्र्यम्बकशास्त्रिपादानां श्रीपरीक्षिन्महाराजा-नाञ्चाशयविशेषाः प्रकटीकृताः ।**

अतिप्रौढनैयायिका अपि **श्रीपरीक्षिन्महाराजाः** झटिति परानवबोधाय कल्प्यमानं अनन्तविशिष्टत्वघटितवृत्तित्वसंबन्धेन गगनाभावविशिष्टत्वादिकमनु-गमं न रोचयन्ते । ग्रन्थरचनादक्षा अपि अन्यानाघ्रातप्रमेयानेव शिरोमणि-भट्टाचार्यादृतफक्किकया निरूपयन्ति ।

स्वनिष्ठप्रकारताघटितस्य मिथ्यात्वस्य निर्विकल्पकभ्रमविषयप्राति-भासिके अव्याप्तिवारकः स्वनिष्ठतादात्म्यसंबन्धावच्छिन्नप्रकारतानिरूपितत्व-संबन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्वविषयतानिरूपितत्वोभयाभाववद्विष-यताव्यापकाभावप्रतियोगित्वमिति परिष्कारः उभयभेदादिवारकः चिद्भेदपरिष्कारः ध्वंसानङ्गीकारपक्षे णशधात्वर्थपरिष्कारः इत्येवमादयः स्वारसिकाः अन्याना-

ग्रंताश्च परिष्कारास्तेषां कस्य वा न्यायरसिकस्य पण्डितप्रकाण्डस्य प्रमोदं नादधति ।

ध्वंसोत्पत्तिक्षणे प्रतियोगिनोऽवस्थानाङ्गीकारे इदानीं घटो ध्वंसते इति प्रत्यक्षदशायां घटोऽस्तीति प्रत्यक्षसंभवेन प्रवृत्त्यापत्तिरिति न्यायभास्करोदितो दोषः नोत्थानं लभते विषयजन्यस्य ध्वंसप्रत्यक्षस्याधिकरणे ध्वंसोत्पत्तिद्वितीयक्षणे प्रतियोगिनोऽनवस्थानेन विषयाभावादेव घटप्रत्यक्षायोगात् इतिवर्णनं एवं ज्ञानजन्यस्वस्वसंस्कारान्यतरध्वंसप्रतियोगित्वस्य ज्ञाननिवर्त्यत्वस्य साध्यत्वे न्यायभास्करप्रतिपादितः स्वतृतीयक्षणोत्पन्नस्मृतिनाश्यस्वस्वसंस्कारोभयके अपेक्षाबुद्ध्यात्मके घटाद्यनुभवे सिद्धसाधनदोषोऽपि नोन्मिषति, द्वित्वादिप्रत्यक्षार्थमेवापेक्षाबुद्धेः कल्पनात् तादृशबुद्धिस्थले द्वित्वादिप्रत्यक्षसामग्र्याः प्रबलायाः सत्त्वेन स्मृतेरेवानुत्पत्तेः तादृशस्थलस्यैवाप्रसिद्धत्वात् इति च वर्णनम्, तत्त्वज्ञानेन भ्रमविषयविषयकसंस्कारस्यापि नाशे नैयायिकसंमतिप्रदर्शनम्, विभिन्नज्ञानीयविषयतयोः निरूप्यनिरूपकभावे व्युत्पत्तिवादसंवादकथनम्, द्वितीयाभाववद्ध्रद इति ज्ञानस्य घटस्सन्नित्यादिबुद्धिप्रतिबन्धकत्वे सव्यभिचारदीधितिसंमतिनिरूपणञ्च, इत्येवमादिकं न्यायशास्त्रप्रक्रियाविषये निरतिशयव्युत्पत्तिसूचकं तेषां अन्तर्वाणिकुलं विस्मापयति ।

पारमार्थिकनिष्ठं यत् व्यावहारिकाभावप्रतियोगित्वं तदन्यप्रतियोगित्वमिति परिष्कारे प्रतियोगितायाः प्रतियोगिस्वरूपत्वपक्षमवलम्ब्य निरूपितस्य मिथ्यात्वात्मकप्रतियोगितायां तादृशप्रतियोगिताभेदाभावेनाव्याप्तिदोषस्य पूर्वतनेन पारमार्थिकनिष्ठत्वव्यावहारिकाभावनिरूपितत्वोभयाभावे पर्यवसानाभिधानेन विरोधात् प्रकारतापक्षकविशेष्यताविशिष्टत्वसाध्यकानुमाने पर्वतह्रदौ वह्निमन्ताविति भ्रममादायार्थान्तरस्य च पूर्वतनेन अवच्छेदकावच्छेदेन साध्यसिद्धिपक्षावलम्बनेन विरोधात् अनुत्थानं वर्णयन्तो महाराजाः केषां निर्मत्सराणां विबुधाग्रण्यां मनांसि नावर्जयन्ति ।

किं बहुना, ब्रह्मानन्दीयभावप्रकाशवाक्यानां तत्पौर्वापर्यस्य च शोधनं टिप्पणसंकलनञ्चेति सर्वमेव श्रीपरीक्षिन्महाराजप्रतिभाविलसितं केवलं लेखकोऽहमिति वस्तुगतिं सविनयं निवेदयामि ।

**ब्रह्मानन्दीयभावप्रकाशप्रणेतारश्च श्रीपञ्चापगेशशास्त्रिपादाः चोलेषु** प्रथिते **पलमानेरिग्रामे** जनिमलभन्त । तद्ग्रामाभिजनेभ्यः **श्रीसुन्दरशास्त्रिचरणेभ्यः** समधिगतन्यायवेदान्तादितन्त्राः **महामहोपाध्यायबिरुदेन राजसंमानिताः** दक्षिणभारते विद्वन्मण्डलीषु अग्रिमं स्थानमलमकार्षुः । इमे **मद्रपुरीसंस्कृतकलालये गोश्रीमहाराजकीयसंस्कृतविद्यालये मैसूरुमहाराजकीयविद्याशालायाश्च** वेदान्तदर्शनमध्यापयामासुः । एतेषामन्तेवासिनः महामहोपाध्यायादिबिरुदभूषितश्रीयुतानन्तकृष्णशास्त्रिप्रभृतयः पण्डितप्रष्ठा दिगन्तेषु विराजन्ते ।

परिशोध्य प्रकाशनीयोऽयं निबन्धः इति विज्ञाप्य स्वेनैव लिखितमिदं ग्रन्थादर्शं **श्रीकाञ्चीकामकोटिपीठाधिपतीनां जगद्गुरूणां** संनिधौ समर्प्य कीर्तिशेषं गतेषु शास्त्रिपादेषु स्वतपोबलेन सर्वानपि वैदिकमार्गप्रवणान् कुर्वतां भगवत्पादसिद्धान्तप्रचारणबद्धदीक्षाणां श्रीचरणानामभिसन्धिमनुरुध्य प्रतिभाप्रसरविस्मापितनिखिलान्तर्वाणिकुलाः विद्याशीलाभ्यामौपनिषदान् जनकादीन् स्मारयन्तः महामहिममहोन्नता **गोश्रीमहीशाः श्रीपरीक्षिन्महाराजाः** प्रबन्धस्यास्य परिशोधनप्रकाशनधुरामुदवहन् ।

आचार्यचरणैः बालभावप्रभृति करुणापाङ्गसंवर्धितोऽयं महाराजप्रेमभाजनं जनः परिशोधनकार्ये महाराजसहयोगमाचरितुमाज्ञप्तः तदा तदा महाराजसकाशं च प्रेषितः **महाराजान्तेवासिभिः ब्रह्मश्रीसंपन्नकिराङ्गाट् नारायणनम्पूदिरिपादैः** प्रियसुहृद्भिः सहितः इदंग्रन्थविचारसुखमन्वभूत् ।

न्यायादितन्त्रव्युत्पत्तिप्रकर्षप्रतिफलनभूम्या विषयपरिशुद्धिमात्रदत्तदृष्ट्या पक्षपातलेशेनाप्यनाघ्रातया महाराजानां विनोदरूपिण्या शास्त्रार्थविचारसरण्या

ग्रन्थपरिशोधने शास्त्रार्थे च संजातव्युत्पत्तिरयं जन इति वस्तुगतिं निवेदयामि ।

विद्वद्बृन्दमनोहारिणः प्रौढस्यास्य प्रबन्धस्य परिशोधनप्रकाशनाभ्यां भगवत्पादकैङ्कर्यमनुष्ठितवतां राजर्षीणां पुण्यश्लोकानां श्रीपरीक्षिन्महाराजानामधमर्णा एव समे वेदान्तदर्शनावलम्बिनः इति महाजनपरिगृहीतोऽर्थः ।

**ये मूर्तिमन्तः सनातनधर्माः यानवलम्ब्य करालेऽस्मिन् समये त्रयी निराबाधं विहरति यैरवलोकिता जनाः दुष्कृतसञ्चयेभ्यो विमुच्यन्ते येभ्यो रोचते परमेश्वरवरिवस्या समबुद्धिश्च येभ्यो विनिर्गता मधुस्फीता वाचः श्रोतृहृदयप्रविष्टाः परब्रह्मास्वादं जनयन्ति येषां पावनैः संचारैः पाविता दिगन्ताः येषाञ्चानुग्रहेण सर्वमिदं कार्यजातं निर्व्यूढं येषां श्रीमुखेनानुगृहीतोऽयं प्रबन्धः येषु चाहिंसादयः स्वानुगुणस्थानलाभहृष्टाः क्रीडन्ति तेषामुदारचरितानां मृत्युमुखान्मां समाकृष्टवतां जगद्गुरूणां चरणनलिनयोः अनन्तसाष्टाङ्गप्रणामपरम्पराः समर्पयामि ।**

स्वीयनिर्विशेषं स्वावासप्रासादेषु अवस्थाप्य महाराजैः पोषितस्याशक्तस्य मम सोदरस्नेहेन सहैवोषित्वा बहूपकृतवतां ग्रन्थपरिशोधने च स्वीयोहापोहाभ्यां बहु साहाय्यमाचरितवतां प्रियसुहृदां यजुर्वेदविनीतानां महाराजान्तेवासिनां **पण्डितराजानां किराङ्गाट् नारायणनम्पूदिरिपादानां केवलं कृतज्ञतां** निवेदयामि ।

निबन्धस्यास्य परिशोधनप्रकाशनबद्धादराः इदंग्रन्थप्रणेतॄणामन्तेवासिनः श्रीमठीयास्थानविद्वांसः **श्रीलक्ष्मीनारायणशास्त्रिणः आपत्सन्न्यासेन ब्रह्मभूयं गताः** एतत्प्रबन्धप्रकाशनेनामन्दमानन्दमनुभवन्तीति दृढं विश्वसिमि ।

विना विलम्बं पत्रपरिशोधनकार्यमूरीकृत्य विगणय्य क्लेशजातं पत्राणि शोधितवन्तः **मद्रपुरीसंस्कृतकलालयवेदान्ताध्यापकाः अस्मत्तोऽधिगत-**

**प्रमाणविद्याः ब्रह्मश्रीसंपन्नाः एस्. आर्. कृष्णमूर्तिशास्त्रिणः** विविध-श्रेयोभाजनं भूयासुरिति भगवन्तमाचार्यपादांश्चाभ्यर्थये ।

ग्रन्थमिमं समीचीनया पद्धत्या मुद्रापितवतां **भारतीविजयमुद्रणालयाधिकृतानां** हार्दीं कृतज्ञतां निवेदयामि । ग्रन्थस्यास्य मुद्रापणे बहु साहाय्यमाचरितवतां प्राध्यापकानां **डाक्टर्. वे. राघवमहोदयानामधमर्णोऽस्मि** । इदंग्रन्थपरिशोधनप्रकाशनयोः मामकीनसहयोगाङ्गीकरणेन आमुख-लेखनेन च धन्यमिमंजनमापादितवतां **राजर्षीणां संनिधौ हार्दान् धन्यवादानर्पयित्वा विधाय चानन्तप्रणतीर्जगद्गुरुपदाम्भोजयोः** विरमति लेखनदैर्घ्यकरणात् ।

सुधीजनविधेयः

**अण्णामलैनगरम्.** **पण्डितराजः. वि. सुब्रह्मण्यशास्त्री.**

श्रीगुरुभ्यो नमः

# ब्रह्मानन्दीयभावप्रकाशस्य

## विषयानुक्रमणिका



D

| क्रम-संख्या | विषयः | पुट-संख्या | पङ्क्ति-संख्या |
|---|---|---|---|
| १७ | विनाशित्वविशिष्टात्मभिन्नत्वस्य गुरुत्वेन प्रतियोगितानवच्छेदकतया तदवच्छिन्नाभावबोधासंभवः इत्याक्षेपः गुरोः प्रतियोगितावच्छेदकत्वेन पारिभाषिकावच्छिन्नत्वबोधस्वीकारेण च तत्परिहारश्च | ६५ | १०-१९ |
| १८ | विनाशित्वमुपलक्षणं असति बाधके अभावप्रतियोगिकोटावुपलक्षणतया भानं शास्त्रकारानुमतं इति निरूपणम् | ६५-६६ | २०- ३ |
| १९ | तत्र गदाधरोक्तकार्यकारणभावे व्यभिचाररूपबाधकोद्भावनं तन्निरासश्च | ६६ | ४-२२ |
| २० | दृश्यत्वेनप्रपञ्चवति आत्मभिन्नत्वेनतदभावविषयकस्योक्तश्रुतिजन्यबोधस्यानाहार्यत्वेऽपि मिथ्यात्वबोधत्वासंभवशङ्का तत्समाधिश्च | ६६-६७ | २३- ७ |
| २१ | श्रुतिजन्यः विनाशिदृश्यवति विनाशिदृश्यत्वेनाभावबोधः आहार्योऽपि तात्पर्यविषयानधिगतदृश्याभावसाधकः इति निरूपणम् | ६७ | ८-१९ |
| २२ | प्रत्यक्षबाधिते दृश्याभावे श्रुतेः प्रामाण्यायोग इत्याक्षेपः तत्परिहारः नेहेतिश्रुतिजन्यबोधविचारोपसंहारश्च | ६७-६८ | २०-२० |
| २३ | स्वप्रकारकधीविशेष्यताघटितस्य मिथ्यात्वस्य निर्विकल्पकभ्रमविषये अव्याप्तिशङ्का तस्याः त्रेधा परिहारश्च | ६८-६९ | २१-१६ |
| २४ | प्रतिपन्नेत्यादिलक्षणे त्रैकालिकत्वनिवेशवैयर्थ्याक्षेपः प्रतियोगिवैयधिकरण्यघटितस्य भेदघटितस्य वा व्यापकत्वस्य निवेशनीयतया अव्याप्यवृत्त्यभाववारणाय त्रैकालिकत्वनिवेशावश्यकता च | ६९-६० | १७-१४ |
| २५ | त्रैकालिकपदस्य निरवच्छिन्नविशेषणताघटितव्यापकतातात्पर्यग्राहकत्वम्, भावस्यापि निरवच्छिन्नविशेषणतया वृत्तिस्वीकारान्नार्थान्तरम् | ७१ | १-११ |
| २६ | निषेधपदस्यात्यन्ताभावपरतया संसर्गाभावपरतया च व्याख्यानस्य युक्तानिरूपणम् | ७१ | १२-२३ |

**शुभं भूयात्**

सूचना—टिप्पणविषयाः नात्रानुक्रान्ताः ।






॥ श्री गुरुभ्यो नमः ॥

महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिविरचितः

# ब्रह्मानन्दीयभावप्रकाशः

## टिप्पणसहितः

## प्रथमो भागः

सिंहारूढातिकृष्णा त्रिभुवनभयकृद्रूपमुग्रं वहन्ती
ज्वालावक्त्रा वसाना विकटकटितटे क्षौमवस्त्रं सुचित्रम् ।
शङ्खं शूलं दधाना निजकरयुगले भक्तरक्षैकदीक्षा
येयं प्रत्यङ्गिरा सा दिशतु मम सदा चिन्तितार्थानुकूल्यम् ॥१॥

श्रीसुन्दरार्यगुरुवर्यकटाक्षवीक्षानिक्षेपशिक्षितमतिः श्रितवेदतन्त्रः ।
सन्न्यायवादनिरतार्यपदाब्जयोःश्रीपञ्चापगेशविबुधःकुरुते प्रणामम् ॥२॥

'सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयम्' इत्यादिश्रुतिभिः ब्रह्मणः अद्वितीयत्वं निरूपितं द्वैतस्य सत्यत्वे न सिद्ध्यतीति तस्य मिथ्यात्वं निरूपणीयम् ।

तत्र मिथ्यात्वे विप्रतिपत्तिः—ब्रह्मप्रमातिरिक्ताबाध्यं सत्त्वेन प्रतीत्यर्हं चिद्भिन्नं मिथ्या न वा इति ।

---

॥ श्रीगुरुभ्यो नमः ॥

टिप्पणम्

जगद्गुरुपदाम्भोजध्याननिर्धूतकल्मषः ।
संख्यावतां प्रमोदाय करोमि लघु टिप्पणम् ॥

तत्रावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे सामानाधिकरण्येन साध्यसिद्धिरपि प्रतिबन्धिकेति मते विशेषणत्रयसार्थक्यं संभवति। तथाहि—प्रथमविशेषणानुपादाने शुक्तिरूप्ये सिद्धसाधनं स्यादिति तद्वारकतया पक्षतावच्छेदककोटौ प्रथमविशेषणम्। तुच्छे ब्रह्मणि च बाधवारणाय सत्तादात्म्यचिद्भिन्नत्वविशेषणे। उक्तञ्च **गदाधरीये सिद्धान्तपक्षताग्रन्थे** 'अत एवातिप्राचीना अवच्छेदकावच्छेदेनानुमितावप्यंशतः सिद्धसाधनस्य दोषत्वमङ्गीकुर्वन्तो ध्वनिव्यावर्तनाय शब्दानित्यत्वानुमाने वर्णात्मकत्वं पक्षे निवेशयन्ति' इति।

अवच्छेदकावच्छेदेन साध्यानुमितौ सामानाधिकरण्येन साध्यसिद्धिर्न प्रतिबन्धिकेति यदि नव्यमतमाद्रियते, तदा अबाध्यत्वान्तविशेषणं नोपादेयमेव। यदि पुनः सामानाधिकरण्येन साध्यसिद्धिरुद्देश्या, तदा अर्हान्तभिन्नान्ते नोपादेये। सामानाधिकरण्येन बाधज्ञानस्य सामानाधिकरण्येनानुमितावविरोधित्वात्।

यद्यपि शुक्तिरूप्ये सिद्धसाधनं न तार्किकेण न वा माध्वेनोद्भावयितुं शक्यम्। तार्किकमते तस्य सत्यतया उक्तविशेषणदानेऽप्यवारणात्। माध्वमते तस्यासत्त्वेन अर्हान्तविशेषणेनैव वारणात्। किन्तु **भट्टभास्करानुयायिना**। तन्मते सदसद्विलक्षणत्वरूपमिथ्यात्वसिद्ध्या तं प्रति विप्रतिपत्तौ सिद्धसाधनं स्यादिति तद्वारकतया प्रथमविशेषणं सार्थकम्। ननु **भट्टभास्करेण** सत्यं रजतं जायते इति कण्ठरवेणोक्तत्वात् कथं तस्य सद्विलक्षणत्वघटितं मिथ्यात्वमिति चेन्न। यतः तद्वाक्यघटकसत्यपदबोध्यं सत्त्वं न त्रिकालाबाध्यत्वं, न वा कालसंबन्धित्वम्। आद्ये नेदं रजतमिति बाधानुपपत्तिः। द्वितीये विधेयकोटावपि कालसंबन्धित्वभानात् घटो नीलघटः इत्यादिवत् बोधानापत्तिः। अतः अस-

---

**टि. अवारणादिति**—तार्किकमते, इदं रजतमिति भ्रमस्थले आपणस्थं सत्यमेव रजतं भासते। ब्रह्मज्ञानातिरिक्ताबाध्यश्च तद्भवति। शुक्तिरूप्यज्ञानस्यैव भ्रमत्वख्यापनरूपबाधविषयत्वं, न रजतस्य बाधः इति भावः।

**बोधानापत्तिरिति**—नवीनमते विधेयांशेऽधिकावगाहिशाब्दबोधस्य संभवेऽपि,

द्विलक्षणत्वमेव तत्र सत्त्वमित्यवश्यमङ्गीकार्यम् । तथा च न तदुक्तिविरोधः ।

एवं विप्रतिपत्तौ प्राचां प्रयोगाः—विमतं मिथ्या, दृश्यत्वात्, जडत्वात्, परिच्छिन्नत्वात् शुक्तिरूप्यवत्, इति ।

यत्तु, विमतमिति पक्षग्रहणमयुक्तम् । विमतत्वस्य संशयविषयत्वरूपस्य विषयतासंबन्धेन संशयरूपस्य वा पक्षतावच्छेदकत्वे अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे ब्रह्मतुच्छयोः बाधात् । विषयत्वमात्रस्य पक्षतावच्छेदकत्वसंभवे तत्र संशयनिरूपितत्वस्य विशेषणस्य वैयर्थ्यात् । विषयतासंबन्धेन संशयस्य पक्षतावच्छेदकत्वे संशयत्वघटकज्ञानत्वातिरिक्तभागवैयर्थ्याच्च । अत एव सामानाधिकरण्येन साध्यतापक्षोऽपि निरस्त इति । तन्न ।

साध्यतदभावप्रकारकसंशयविषयत्वस्य विषयतासंबन्धेन तादृशसंशयस्य वा पक्षतावच्छेदकत्वे दोषानवकाशात् । ननु घटो मिथ्या न वा शुक्तिरूप्यं मिथ्या इत्यांशिकसंशयविषयत्वमादाय शुक्तिरूप्ये सिद्धसाधनं दुर्वारमिति चेत् । न, साध्यतदभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यताभिन्नमुख्यविशेष्यत्वानिरूपकसंशयविषयत्वस्य, तेन संबन्धेन तादृशसंशयस्य वा पक्षतावच्छेदकत्वं स्वीक्रियते । मुख्यत्वञ्च विशेष्यतायां, प्रकारतानवच्छिन्नत्वं प्रकारतानात्मकत्वं वा । एवञ्च शुक्तिरूप्ये न सिद्धसाधनम् । एवमपि साध्यतदभावप्रकार-

---

जायते इत्यनेन आद्यक्षणसंबन्धबोधेनैव निर्वाहे पुनः सत्यपदेन सामान्यतः कालसंबन्धित्वबोधनं व्यर्थमिति बोध्यम् ।

**टि. दोषानवकाशादिति**—सर्वतान्त्रिकैः तत्र तत्र तत्तत्साध्यसाधनाय विमतमिति पक्षनिर्देशः क्रियते । विमतपदञ्च समभिव्याहृतपदोपस्थाप्यसाध्यतदभावप्रकारकसंशयविषयमेव बोधयतीति सर्वतन्त्रसिद्धोऽर्थः । एवञ्चात्रापि मिथ्यात्वसंशयविषयमेव विमतपदं बोधयतीतिभावः ।

**एवमपीति**—संशये समुच्चयज्ञानवैलक्षण्याय कोटिद्वयप्रकारतानिरूपिता एका विशेष्यता स्वीक्रियते । समुच्चये तु विशेष्यता द्वयी इत्येकः पक्षः । संशयेऽपि प्रकारताभेदेन विशेष्यता भिन्ना । परन्तु तयोर्विशेष्यतयोरवच्छेद्यावच्छेदकभावः स्वीक्रियते ।

तानिरूपितमुख्यविशेष्यतयोर्भेदे आश्रयासिद्धिरिति चेत्। न, अवच्छेद्याव-च्छेदकभावापन्नत्वस्य मुख्यविशेष्यतायां निवेशान्नाश्रयासिद्धिः। तथा च साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नसाध्याभावत्वाव-च्छिन्नप्रकारतानिरूपितमुख्यविशेष्यताभिन्नमुख्यविशेष्यत्वानिरूकसंशयविषयत्वं, साध्याभावत्वाच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नसाध्यप्रकारतानिरूपित-मुख्यविशेष्यताभिन्नमुख्यविशेष्यत्वानिरूपकसंशयविषयत्वं वा, विषयतासंबन्धेन तादृशसंशयवत्त्वं वा पर्यवसितम्।

नन्वेवमपि घटादावाश्रयासिद्धिः, संशयीयतादृशविशेष्यताभिन्न-घटत्वनिष्ठप्रकारतानिरूपितनिरवच्छिन्नविशेष्यतायाःउक्तप्रकारतानिरूपितविशे-ष्यताभिन्नायाः सत्त्वादिति चेत्। न, भेदानुयोगिविशेष्यतायां किञ्चिदवच्छि-न्नत्वस्य निवेश्यत्वात्।

एतेन ब्रह्मतुच्छयोर्बाधोक्तिः परास्ता। तयोरुक्तसंशयाविषयत्वात्। अत एव विषयत्वमात्रस्य पक्षतावच्छेदकत्वपक्षः ज्ञानत्वातिरिक्तभागवैयर्थ्यदोषश्च निरस्तः। शुक्तिरूप्ये सिद्धसाधनात्, ब्रह्मतुच्छयोर्बाधाच्च।

यद्वा विमतपदं विमतिविषयतावच्छेदकावच्छिन्नपरम्। तथा च विमतिविषयतावच्छेदकीभूतं ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्तादात्म्यवत्वे सति चिद्भिन्नत्वमेव पक्षतावच्छेदकमिति न कोऽपि दोषः।

---

समुच्चये तु नेत्यपरः पक्षः। तत्र द्वितीयपक्षे साध्यतदभावप्रकारताद्वयनिरूपितविशेष्यताया अभावेनाश्रयासिद्धिरिति शङ्काशयः।

**टि· पर्यवसितमिति**—साध्यप्रकारतानिरूपितविशेष्यत्वावच्छिन्नसाध्याभाव-प्रकारतानिरूपितविशेष्यतासंबन्धेन संशयवत्त्वस्य पक्षतावच्छेदकत्वस्वीकारोऽपि समञ्जसः। तावतापि घटो मिथ्या न वा शुक्तिरूप्यं मिथ्या इत्यांशिकसंशयमादाय दोषवारणादिति **श्रीपरीक्षिन्महाराजाः**।

**निरवच्छिन्नेति**—स्वस्य स्वधर्मितानवच्छेदकत्वेन घटत्वनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यता न घटत्वावच्छिन्नेति बोध्यम्।

यत्तु प्रपञ्चसत्यत्ववादिभिः कैरपि अनिर्वचनीयरजतस्योत्पत्त्यनभ्युपगमेन सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वेऽपि सिद्धसाधनानवतारेण प्रथमविशेषणवैयर्थ्यमित्युक्तम्। तन्न, दत्तोत्तरत्वात्। **भट्टभास्करानुयायिमतेन** सिद्धसाधनस्य पूर्वमुपपादितत्वात्।

यत्तु कश्चन वादिनं प्रकल्प्य कल्पितवादिमते सिद्धसाधनवारकतयोक्तविशेषणसार्थक्ये, ब्रह्मप्रमातिरिक्ताबाध्यमिथ्याभूतरजतवादिनोऽपि कल्पनसंभवेन तन्मते सिद्धसाधनवारणार्थं विशेषणान्तरदानप्रसङ्गेनानवस्थापात इति। तन्न। मिथ्यात्वानुमितेः प्राक् ब्रह्मप्रमातिरिक्ताबाध्यस्य बाधदर्शनरूपप्रयोजकमन्तरेण मिथ्यात्वस्य वक्तुमशक्यतया तादृशवादिन एव कल्पयितुमशक्यत्वात्। ये ब्रह्मप्रमातिरिक्ताबाध्यस्य मिथ्यात्वं वदन्ति, ते वादिनो वा तत्तुल्या वेति तान्प्रति विवादस्यैवाभावाच्च।

यद्वा, ये सर्वमेव सत्यमिति वदन्ति तान् प्रति, सच्चेन्न बाध्येत असच्चेन्न प्रतीयेत, बाध्यते प्रतीयते च रजतमिति सदसद्विलक्षणत्वमर्थापत्त्या

---

**टि. पूर्वमुपपादितत्वादिति**—"शुक्तिरूप्यं तात्कालिकमुत्पन्नं तत्रैव सदिति भास्करादिमते शुक्तिरूप्ये सिद्धसाधनवारणाय सत्यन्तं विशेषणम्। भास्करादिभिरपि भ्रमप्रमाविभागाय रजतस्य घटादिवैलक्षण्यमङ्गीकृतमेवेति तन्मतेऽपि तस्य पक्षबहिर्भावस्यावश्यं वाच्यत्वात्। तार्किकादिमते स्वमते च तदुपरक्ते साध्यसिद्धिः प्रयोजनमिति सर्वमतेऽपि सप्रयोजनं विशेषणम्" इति **न्यायामृततरङ्गिणीकारा** निरूपयन्ति।

**विवादस्यैवाभावाच्चेति**—व्याकरणादितन्त्रे प्रसिद्धया यत्समुदायघटकैकदेशः यस्याचार्यस्यानुमतः एकदेशान्तरघटिततत्समुदायः तदनुमतः इति सामान्यमुखव्याप्त्या अनुगृहीतेन बाधानुपपत्तिरूपविपक्षबाधकतर्कसचिवेन मिथ्यात्वघटकासद्विलक्षणत्वस्य स्वाचार्यानुमतत्वेन हेतुना (अनुमानेन) तद्घटकांशान्तरस्य सद्विलक्षणत्वस्यापि तदनुमतत्वं सिद्ध्यतीति मन्यमानो वादी संभाव्यते। न तथा ब्रह्मप्रमातिरिक्ताबाध्यमिथ्याभूतरजतवादी संभाव्यतेऽप्रामाणिकत्वात्। एवञ्च वादिनः क्लृप्तत्वाक्लृप्तत्वाभ्यां एकदेशाङ्गीकारसर्वाङ्गीकारनयोः संभावितत्वासंभावितत्वाभ्याञ्च विशेषसद्भावेनानवस्थाभावः इति **श्रीत्यागराजाध्वरीन्द्राः**।

रजते प्रसाध्य तद्दृष्टान्तेन द्वैतस्य मिथ्यात्वं साधनीयमिति शुक्तिरूप्ये सिद्धसाधनं स्यादिति तद्वारकतयोक्तविशेषणं सार्थकम्।

यत्तु-यद्वेत्यादिना सार्थक्योपपादनमप्ययुक्तम्। प्रातिभासिकचिद्भेदस्य ब्रह्मण्यपि संभवेन स्वसमानसत्ताकचिद्भेदवत्त्वस्यैव चिद्भिन्नत्वमित्यनेन विवक्षणीयतया प्रातिभासिके चिद्भेदस्य व्यावहारिकत्वेन स्वसमानसत्ताकचिद्भेदवत्त्वरूपपक्षतावच्छेदकाक्रान्तत्वाभावादेव वारणात्। अभावस्याधिकरणरूपत्वपक्षे सिद्धसाधनसंभवेऽपि, इदं रजतं ब्रह्मप्रमातिरिक्ताबाध्यमिति भ्रमे तादृशाबाध्यत्वविशिष्टस्यानिर्वचनीयरजतस्यैवोत्पत्त्या उक्तविशेषणेन तादृशरजतावारणात् उक्तसिद्धसाधनस्य दुर्वारतेति।

तन्न-अभावस्याधिकरणरूपतापक्षे चिद्भेदस्य प्रातिभासिकत्वेन स्वसमानसत्ताकचिद्भेदस्य प्रातिभासिकरजते सत्त्वेन सिद्धसाधनवारकतया तद्विशेषणसार्थक्यात्। नचाभावस्याधिकरणरूपत्वपक्षे ब्रह्मनिष्ठचिद्भेदस्यापि ब्रह्मरूपतया बाधो दुर्वार इति वाच्यम्। प्रातिभासिकचिद्भेदस्य ब्रह्मरूपत्वे तदात्मना ब्रह्मणोऽपि मिथ्यात्वप्रसङ्गेन शून्यवादापत्त्या ब्रह्मरूपत्वानङ्गीकारात्। व्यावहारिकत्वपक्षे अधिकरणात्मकत्वपक्षे च स्वान्यूनसत्ताकचिद्भेदवत्त्वस्य चिद्भिन्नत्वमित्यनेन विवक्षणीयतया उक्तचिद्भिन्नत्वस्य रूप्ये सत्त्वेन सिद्धसाधनवारकतया प्रथमविशेषणसार्थक्यात्।

---

**टि. विवक्षणीयतयेति**— धर्मिसत्तावृत्तितत्तत्सत्तात्वान्यतमाश्रयसत्ताकत्वरूपसमसत्ताकत्वापेक्षया धर्मिसत्तानपकृष्टसत्ताकत्वस्य लघुत्वादिति भावः।

नवीनमते, अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे सत्तादात्म्यचिद्भिन्नत्वयोरेव पक्षतावच्छेदकत्वं, सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे ब्रह्मप्रमातिरिक्ताबाध्यत्वमात्रं पक्षतावच्छेदकमिति श्रीब्रह्मानन्दसरस्वतीभिः प्रतिपादनात्, अतिप्राचीनमतानुसारेण विशेषणत्रयस्यापि पक्षतावच्छेदकत्वपक्षमाश्रित्य, चिद्भिन्नत्वविशेषणेन प्रथमविशेषणवैयर्थ्यापादनं न्यायभास्करकाराणां न संगतम्, नवीनमते चिद्भिन्नत्वस्य पक्षतावच्छेदकत्वे प्रथमविशेषणस्यैवानुपादानादिति बोध्यम्।

न चोक्ताबाध्यमिथ्याभूतरजते सिद्धसाधनं दुर्वारमिति वाच्यम् । शुक्तिनिष्ठोक्ताबाध्यत्वस्य रजते भानसंभवेन विशिष्टरजतोत्पत्त्यनभ्युपगमेन सिद्धसाधनाभावात्। नच 'अन्योन्यस्मिन् अन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य' इति भाष्येण धर्माध्यासस्यावश्यकत्वप्रतिपादनादुक्ताबाध्यत्वाध्यासानभ्युपगमे तद्भाष्यविरोधः स्यादिति वाच्यम् । उक्तभाष्यस्य तादात्म्योपहितरूपेण धर्माध्यासप्रतिपादनपरतया स्वरूपतः तदध्यासप्रतिपादनपरत्वाभावात् । शुक्तिरूप्यनिष्ठसंसर्गस्य प्रातिभासिकत्वेन अबाध्यत्वस्य व्यावहारिकत्वेन समानसत्ताकस्वरूपसंबन्धेन रजते अबाध्यत्वस्य इदन्त्ववत्स्वरूपतोऽनुत्पत्त्या स्वसमानसत्ताकविशेषणतासंबन्धेन उक्ताबाध्यत्वस्य पक्षतावच्छेदकत्वस्वीकारेण सिद्धसाधनासंभवात् । नचेदं रजतं स्वसमानसत्ताकस्वरूपसंबन्धेन ब्रह्मप्रमातिरिक्ताबाध्यत्ववदिति भ्रमसिद्धतादृशरजते सिद्धसाधनं दुर्वारमिति वाच्यम् । उक्तानवस्थाया अप्रामाणिकत्वेनादोषत्वात्। अत एव **ब्रह्मानन्दीये** अप्रामाणिकानवस्था न दोषाय इत्युक्तम्। **लोकनाथभट्टाचार्यैरुभयाभाववारकपरिष्कारे** अप्रामाणिकानवस्थाया अदोषत्वं वर्णितम् ।

अत एव लोहितः स्फटिक इत्यादौ कुसुमनिष्ठलौहित्यस्य स्फटिके भानस्य **परिभाषाकारैः** स्वीकारात् संनिकृष्टे अन्यथाख्यातिस्वीकारेण इदं रजतं ब्रह्मप्रमातिरिक्ताबाध्यमित्यत्रापि इदंपदार्थनिष्ठमबाध्यत्वं रूप्ये भासते इति न सिद्धसाधनम्। **सिद्धिकारैरपि** कर्तृत्वाध्यासविचारे अन्तःकरणनिष्ठकर्तृत्वं आत्मनि भासते इति स्वीकृतम् । नचान्यथाख्यातिस्वीकारे अनिर्वचनीयख्यात्यङ्गीकारविरोध इति वाच्यम् । अन्यथाख्यातिस्वीकारेऽपि तत्संसर्गस्य प्रातिभासिकत्वेनानिर्वचनीयख्यातिवादोपपत्तेः ।

---

प्रातिभासिकोपादानपल्लवाज्ञानस्यावच्छिन्नचिन्निष्ठत्वेन शुद्धचिन्निष्ठत्वाभावात् शुद्धे प्रातिभासिकः चिद्भेद एव न संभवतीति तद्वारकं स्वसमानसत्ताकचिद्भेदवत्त्वं न निवेशनीयमिति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः**।

किञ्च ब्रह्मज्ञानाव्यवहितपूर्ववृत्तिप्रातिभासिके सिद्धसाधनवारणय ब्रह्मप्रमातिरिक्ताबाध्येत्यनेन ब्रह्मप्रमातिरिक्तबाध्यत्वयोग्यत्वाभावस्य करणसंसर्गिदोषाप्रयुक्तत्वरूपस्य विवक्षणीयतया पूर्वोक्तरजते करणसंसर्गिदोषप्रयुक्तत्वसत्त्वेन सिद्धसाधनवारणात् । किञ्च गुरुचन्द्रिकोक्तरीत्या, शुक्तिरूप्ये सिद्धसाधनवारणाय पूर्वोक्तदोषवारणाय च पल्लवाज्ञानतत्कार्यान्यतरभिन्नत्वं पक्षतावच्छेदके निवेशनीयमिति न दोषः ।

अथवा लोकसिद्धविशेषणतासंबन्धेन उक्ताबाध्यत्वस्य पक्षतावच्छेदकतया तेन संबन्धेन तस्य निरुक्तशुक्तिरूप्ये अभावेन न सिद्धसाधनसंभवः ।

नचैवं सति ब्रह्मप्रमातिरिक्ताबाध्यत्वस्य बौद्धकल्पितब्रह्मनिष्ठक्षणिकत्वे सत्त्वेन तत्र सिद्धसाधनं दुर्वारम् । ब्रह्म क्षणिकत्वाभाववदिति ज्ञानस्य ब्रह्मप्रमात्वेन तदतिरिक्ताबाध्यत्वादिति वाच्यम् । शुद्धस्य सप्रकारकज्ञानाविषयत्वेन ब्रह्मविशेष्यकक्षणिकत्वाभावप्रकारकज्ञानस्य ब्रह्मप्रमातिरिक्तत्वेन तद्बाध्यत्वाभावात् । एवमेव ब्रह्मण्यारोपितध्वंसप्रतियोगित्वेऽपि न सिद्धसाधनम् ।

यदि ब्रह्म न ध्वंसप्रतियोगि इति ज्ञानस्य ब्रह्मप्रमात्वं स्वीकरणीयमित्याग्रहः । तदा ब्रह्मान्यविषयकज्ञानाबाध्यत्वस्य ब्रह्मप्रमातिरिक्ताबाध्येत्यनेन विवक्षणीयतया ध्वंसादेः ब्रह्मान्यतया तद्ज्ञानबाध्यत्वेनोक्तप्रतियोगित्वे न सिद्धसाधनावकाशः ।

---

टि· **पल्लवाज्ञानतत्कार्यान्यतरभिन्नत्वमिति**—प्रातिभासिकत्वरूपजातिविशेषावच्छिन्नभेदः ब्रह्मप्रमेत्यादिविशेषणेन विवक्षित इत्यपि बोध्यम् । पल्लवाज्ञानतत्कार्यान्यतरत् तादृशान्यतरभिन्नमिति ज्ञानस्याहार्यत्वेनाज्ञानाभावेन अज्ञानपरिणामभूतप्रातिभासिकस्योत्पत्त्यभावेऽपि इदं पल्लवाज्ञानतत्कार्यान्यतरभिन्नमित्यनाहार्यभ्रमसंभवेन तद्विषयप्रातिभासिके सिद्धसाधनं स्यादित्याशङ्क्याह—**अथवेति । ब्रह्मप्रमातिरिक्तत्वेनेति** । ब्रह्मप्रमापदेनात्र शुद्धब्रह्मज्ञानमेव विवक्षितम् । अन्यथा इयं शुक्तिः इत्यादिज्ञानानामपि शुक्त्यवच्छिन्नचिद्विषयकत्वेन ब्रह्मप्रमात्वात् तदतिरिक्तबाध्यत्वस्यैवाप्रसिद्ध्यापत्तेरिति भावः । क्षणिकत्वादेरतीन्द्रियपदार्थघटितत्वेनातीन्द्रियतया परोक्षेऽन्यथाख्यातेरभ्युपगमेन च न ब्रह्मणि क्षणिकत्वं प्रातिभासिकमिति संप्रदायविदः इति भट्टश्र्यम्बकशास्त्रिपादाः ।

यत्तु एवं सत्याश्रयासिद्धिः प्रपञ्चस्य ब्रह्मान्यविषयकज्ञानबाध्यत्वात्। अध्यस्तं प्रति अधिष्ठानसाक्षात्कारत्वेनैव बाधकतया इयं शुक्तिः अयं घटः इति समूहालम्बनस्य रजतादिबाधकत्ववत् अहं ब्रह्म घटो विनाशी इति समूहालम्बनस्यापि प्रपञ्चबाधकत्वे बाधकाभावात्। न हि शुक्तिरूप्यादिस्थले अधिष्ठानान्याविषयकज्ञानस्यैव बाधकत्वमिति संभवति। इयं शुक्तिरित्यसमूहालम्बनस्यापि चाक्षुषस्य शुक्तित्वतत्समानाधिकरणसंख्यापरिमाणादिविषयकत्वेनाबाधकत्वप्रसङ्गादिति।

तत्तुच्छम्। अहं ब्रह्म घटो विनाशी इति ज्ञानस्याहार्यत्वेन शुक्तित्वाभाववती इयं शुक्तिः इति ज्ञानस्येवाबाधकत्वात्। न च तादृशज्ञानस्याहार्यत्वमेव कथमिति वाच्यम्। द्वैताद्वैतविषयतयोर्विरोधात्। न च विरोध एव कुत इति वाच्यम्। अद्वितीयब्रह्मसाक्षात्कारात्पूर्वं एकमेवाद्वितीयमिति श्रुतिजन्याद्वैतत्वप्रकारकब्रह्मानुभवजन्योद्बुद्धसंस्कारस्यावश्यकत्वेन तस्यैव द्वैतविशेष्यकसत्तादात्म्यविषयताशालिधीविरोधित्वात्। यथा ह्रदे वह्निप्रकारताशालिबुद्धिं प्रति ह्रदो वह्न्यभाववानिति ज्ञानजन्योद्बुद्धसंस्कारस्य प्रतिबन्धकत्वं तद्वत्।

यत्तु द्वितीयाभावो ब्रह्मनिष्ठः इत्युद्बुद्धसंस्कारस्य द्वितीयत्वावच्छिन्ने सत्तादात्म्यावगाहिधीप्रतिबन्धकतायाः प्रामाणिकत्वेऽपि घटत्वाद्यवच्छिन्ने सत्तादात्म्यावगाहिधीविरोधित्वासंभवेनोक्तसमूहालम्बनस्यानाहार्यत्वं संभवति। न च घटाभावो ब्रह्मनिष्ठः इत्युद्बुद्धसंस्कारोऽपि पूर्वमस्तीति वाच्यम्। दृश्यत्वव्याप्या यावन्तो धर्माः प्रत्येकं तत्तदवच्छिन्नाभावविशिष्टब्रह्मविषयकसंस्कारसत्त्वे प्रमाणाभावेन यद्धर्मावच्छिन्नाभावविषयकसंस्कारः पूर्वमसिद्धः,

---

**टि तद्वदिति**—सिद्धान्ते सदन्यविषयतायाः सत्तादात्म्यविषयतानिरूपितत्वनियमात् दर्शितसमूहालम्बनस्य घटात्मकद्वैतविशेष्यकसत्तादात्म्यप्रकारकत्वेन ब्रह्मविशेष्यकद्वैताभावप्रकारकोद्बुद्धसंस्कारप्रतिबध्यतया निर्विकल्पकब्रह्मसाक्षात्कारस्य द्वैतविषयताशालित्वं न संभवतीति भावः।

2

तद्धर्मावच्छिन्नःसन् अहं ब्रह्मेति ज्ञानस्य अनाहार्यत्वसंभवात्। अत एव एकमेवाद्वितीयमिति श्रुतिजन्यस्य दृश्यत्वावच्छिन्नदृश्यविशिष्टे द्वैतत्वावच्छिन्नाभावविषयकज्ञानस्यानाहार्यत्वसमर्थनं संगच्छते इति।

तन्न। घटो गगनवान् पटो गगनवानित्यादिबुद्धिषु सर्वं गगनाभाववदिति बुद्धेः प्रतिबन्धकत्वस्येव द्वितीयाभाववद्ब्रह्मविषयकोद्बुद्धसंस्कारस्य निखिलधर्मावच्छिन्ने सत्तादात्म्यावगाहिधीविरोधित्वेनोक्तसमूहालम्बनस्यानाहार्यत्वानुपपत्तेः। स्पष्टा चेयं रीतिः सव्यभिचारदीधितौ।

यद्वा तद्धर्मावच्छिन्नवत्ताबुद्धौ तद्व्यापकतयागृहीतधर्मावच्छिन्नाभावविषयकोद्बुद्धसंस्कारस्य प्रतिबन्धकत्वेन द्वितीयत्वे घटत्वादिव्यापकताया गृहीतत्वात् द्वितीयाभावविशिष्टविषयकसंस्कारसत्त्वे व्याप्यधर्मावच्छिन्नविषयकबुद्धेरनुदयेनानाहार्यत्वानुपपत्तिर्बोध्या।

न च एकमेवेति श्रुतिजन्यबोधस्याहार्यत्वं दुर्वारमिति वाच्यम्। तद्बोधे द्वितीयत्वावच्छिन्नवति ब्रह्मणि पारमार्थिकस्य द्वितीयत्वावच्छिन्नाभावस्य विषयतया समसत्ताकयोरेव भावाभावयोर्विरोधेन तस्यानाहार्यत्वोपपत्तेः। अत एव मिथ्यात्वानुमितेः द्वैताधिकरणे पारमार्थिकाभावविषयकतया तस्य च व्यावहारिकद्वैतरूपप्रतियोग्यसमानसत्ताकत्वादनाहार्यत्वमुपपद्यते।

न च

'न बुद्धिं मर्दयन् दृष्टो घटतत्त्वस्य वेदिता।
उपमृद्नाति चेद्बुद्धिं ध्याताऽसौ न तु तत्त्ववित्॥'

---

**टि. अनाहार्यत्वानुपपत्तिरिति**। सर्वथा मुमुक्षुणा प्रपञ्चमिथ्यात्वस्य चिन्त्यमानतया यादृशयादृशधर्मावच्छिन्नस्योपस्थितियोग्यत्वं वर्तते तादृशतादृशधर्मावच्छिन्ने सर्वत्रैव मिथ्यात्वनिश्चयसंभवेन मिथ्यात्वघटकतया तत्तद्धर्मावच्छिन्नाभावस्य ब्रह्मणि निश्चयसंभवेन अखण्डब्रह्मसाक्षात्कारे उपस्थितियोग्यतादृशधर्मावच्छिन्ने सत्तादात्म्यावगाहनासंभवः इति **श्रीलक्ष्मीनृसिंहशास्त्रिपादाः**।

**अनाहार्यत्वमुपपद्यत इति**। वस्तुतस्तु स्वाप्नगजतदभावदृष्टान्तेन समसत्ताकभावाभावयोर्विरोधमुपमृद्यैव मिथ्यात्वसाधनात् सिद्धान्ते तयोर्विरोधाभावात्

इति ध्यानदीपिकायां श्रीविद्यारण्यैरुक्तम्। बुद्धेर्मर्दनं-इतरविषयकत्वविघटनम्। तच्च ध्यानोपयुक्तम्। ध्यानस्य इतरविषयकज्ञानाभावविशिष्टज्ञानधारारूपत्वात् इतरविषयकज्ञानोत्पत्तावुक्तरूपत्वानुपपत्तिप्रसङ्गात्। न तु तत्त्वज्ञानोपयुक्तम्। इतरविषयकस्यापि तत्त्वविषयकत्वसंभवेन तत्त्वज्ञानरूपत्वभङ्गाभावात्। तथा च अहं ब्रह्म घटो विनाशी इति ज्ञानस्याहार्यत्वे **श्रीविद्यारण्योक्तिविरुद्धये**तेति वाच्यम्। 'कदाचिदद्वैतदर्शनं कदाचित् द्वैतदर्शनं, न पुनर्युगपदेवोभयं, संतमसबहुलालोकयोरिव विरोधात्' इति **विवरणोक्ति**विरोधेनोदाहृतवचनस्य प्रारब्धाधीनजीवन्मुक्तव्यवहारोपयोगिज्ञानपरतया तद्विरोधाभावात्।

अथवा ज्ञानस्याज्ञानतत्कार्यध्वंसरूपतया न ब्रह्मज्ञानस्य घटादिविषयकत्वं संभवति। न च ज्ञानस्याज्ञानकार्यतया तस्य तद्ध्वंसरूपता कथमिति वाच्यम्।

---

स्वविरुद्धधर्मधर्मितावच्छेदककत्वप्रकारकत्वरूपमाहार्यत्वं न मिथ्यात्वानुमितेः संभवति। **न्यायभास्करकारैरेव** द्वितीयमिथ्यात्वविचारावसरे निरुक्तरीत्या मिथ्यात्वज्ञानस्याहार्यत्वं नास्तीति निरूपितमिति बोध्यम्॥ मिथ्यात्वघटकप्रतियोगिमात्रस्य वैज्ञानिकत्वात् स्वविरुद्धधर्मधर्मितावच्छेदककत्वघटितमाहार्यत्वं न मिथ्यात्वानुमितेरिति **श्रीविट्ठलमिश्राः**।

**जीवन्मुक्तव्यवहारोपयोगिज्ञानपरतयेति**। अद्वैतात्मनिश्चयस्य द्वैतमिथ्यात्वसिद्धिपूर्वकतया तत्त्वविदः लौकिकभोजनादिव्यवहृतिर्न स्यादिति शङ्कां निराकर्तुं प्रवृत्ते

'अपेक्षते व्यवहृतिर्न प्रपञ्चस्य सत्यताम्।
नाप्यात्मजाड्यं किन्त्वेषा साधनान्येव कांक्षति॥'

इत्यादिके सन्दर्भे प्रविष्टस्य निरुक्तपद्यस्यापि तादृशव्यवहारोपयोगिज्ञानपरतायाःस्पष्टं प्रतीतेरिति भावः।

**न ब्रह्मज्ञानस्य घटादिविषयकत्वमिति**। निर्विशेषात्मविषयकश्रवणमनननिदिध्यासनाभ्यासनिर्धूतनिखिलप्रतिबन्धकानुबन्धः चरमः फलीभूतसाक्षात्कार एव प्रपञ्चबाधक इति सर्वेषां प्राचामाचार्याणां संप्रतिपन्नम्। न च तत्र ब्रह्मान्यत् भातुमर्हति। तज्जनकीभूतनिदिध्यासने यत्नतस्तद्ध्यानस्योपमर्दितत्वात्। तत्र तदुपमर्दनस्य तत्त्वसाक्षात्कारे तदभावसंपादनैकफलत्वात्। अत एव 'तमेव विदित्वातिमृत्युमेति' इति श्रुतिरेवकारानुबद्धा ब्रह्मान्याविषयकज्ञानस्याविद्यानिवर्तकत्वं स्वरसतः प्रतिपादयन्ती साधु संगच्छत इति **श्रीत्यागराजाध्वरीन्द्राः**।

एकस्यैव रूपभेदेन प्रतियोगित्वानुयोगित्वयोः अभावाधिकरणकाभावस्थल इव संभवेन ज्ञानत्वेनानुयोगित्वे दृश्यत्वेन प्रतियोगित्वे च विरोधाभावात् ।

यदि च अहं ब्रह्म घटो विनाशीति समूहालम्बनज्ञानस्यापि प्रपञ्चबाधकत्वमित्याग्रहः, तदा ब्रह्मान्यविषयकत्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावत्त्वस्वोपादानान्यतरत्वावच्छिन्नाभावकान्यत्वमुक्तविशेषणार्थः । तथा च शुक्तिरूप्ये न सिद्धसाधनं न वा आश्रयासिद्धिः । उक्तसमूहालम्बनीयब्रह्मविषयताया एव प्रपञ्चतदुपादानान्यतरत्वावच्छिन्नाभावप्रयोजकतया घटविषयताया अतथात्वात् ।

यत्तु नानाज्ञानपक्षे उक्तविशेषणेनोक्तस्थले दोषवारणेऽपि एकाज्ञानपक्षे शुक्तिरूप्ये सिद्धसाधनं तदवस्थमेव, तत्पक्षे शुक्तिज्ञानकालेऽपि रूप्योपादानाज्ञानसत्त्वादिति ।

तन्न । एकाज्ञानपक्षे ब्रह्मान्यविषयकत्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावत्त्वाभावकान्यत्वस्यैवोक्तविशेषणार्थत्वेन रूप्याभावस्य ब्रह्मान्यशुक्तिविषयताप्रयोज्यत्वेन तदन्यत्वाभावेन सिद्धसाधनाभावात् ।

नन्वेवमपि ब्रह्मत्वोपलक्षितानुयोगिके ज्ञानत्वोपलक्षितप्रतियोगिताकभेदे ब्रह्म न ज्ञानमिति भ्रमसिद्धे सत्यादिशोधकवाक्यजन्यधीबाध्ये सिद्धसाधनं दुर्वारम् । उक्तज्ञानस्य ब्रह्मविषयकत्वेन भेदस्य तद्बाध्यत्वेऽपि उक्ताभावकान्यत्वानपायादिति चेत् । न । जीवत्वब्रह्मत्वोपलक्षितब्रह्मनिरूपितविषयिताकान्य-

---

**विरोधाभावादिति** । घटप्रागभावकार्यस्य घटस्य तद्ध्वंसरूपताया नैयायिकैरङ्गीकृतत्वात् अज्ञानकार्यस्यापि ज्ञानस्य तद्ध्वंसरूपत्वं सूपपन्नमिति **श्रीपरीक्षिन्महाराजाः** ।

**सिद्धसाधनाभावादिति** । एकाज्ञानपक्षेऽपि मूलाज्ञानावस्थाभेदरूपाणि प्रातिभासिकोपादानाज्ञानानि अवश्यमङ्गीकार्याणि । अन्यथा शुक्तिज्ञानकालेऽपि मूलाज्ञानसत्त्वादिदं रजतमिति प्रतीत्यापत्तेः । एवञ्च शुक्तिज्ञानेन प्रातिभासिकोपादानाज्ञानस्यापि निवृत्तत्वात् न सिद्धसाधनम् । नचैकाज्ञानपक्षस्य नानाज्ञानपक्षादविशेष इति शङ्कनीयम् । प्रतिजीवं मूलाज्ञानस्यैव भेदः इति **वाचस्पतिमिश्र**पक्षस्यैव नानाज्ञानपक्षत्वादित्यपि वदन्ति ।

ज्ञानाबाध्यत्वस्योक्तविशेषणार्थतया शोधकवाक्यजन्यज्ञानस्य सत्यत्वाद्युपलक्षित ब्रह्मनिरूपितविषयिताकत्वेऽपि जीवत्वब्रह्मत्वोपलक्षितब्रह्मविषयकत्वाभावेनोक्त-विषयिताकान्यतयोक्तभेदस्योक्तज्ञानबाध्यत्वेन सिद्धसाधनासंभवात् ।

यत्तु समानाकारज्ञानेषु विषयताभेदस्याप्रामाणिकतया सत्यादिवाक्यज-न्यज्ञानस्य तत्त्वमसीतिवाक्यजन्यज्ञानादविलक्षणाकारतया तदन्यज्ञानाबाध्यत्व-स्योक्तभेदे सत्त्वेन सिद्धसाधनं दुर्वारम् । अथ किन्नाम समानाकारत्वम्, समान-विशेष्यकत्वं वा समानप्रकारकत्वं वा समानसंसर्गकत्वं वा तेषां समुदायो वा । नाद्यः, घटत्वेन घटावगाहिज्ञानस्य द्रव्यत्वेन घटावगाहिज्ञानसमानाकार-तापत्तेः । न द्वितीयः, घटत्वेन घटावगाहिज्ञानस्य घटत्वेन पटावगाहिज्ञान-समानाकारतापत्तेः । नापि तृतीयः, संयोगेन घटज्ञानस्य संयोगेन पटज्ञानस-मानाकारतापत्तेः । नापि चतुर्थः, घटवत् भूतलमिति ज्ञानस्य घटवद्भूतलवान् देशः इति ज्ञानसमानाकारतापत्तेरिति चेत् । न । स्वनिरूपितमुख्यविशेष्य-तावृत्तिमुख्यविशेष्यतानिरूपकत्वं समानाकारत्वम् । मुख्यविशेष्यतायां मुख्य-विशेष्यतावृत्तित्वञ्च स्वसमनियतत्वस्वनिरूपितविषयतात्वावच्छिन्नपर्याप्त्यनुयो-गितावच्छेदकधर्मवृत्तित्वोभयसंबन्धेन । धर्मवृत्तित्वञ्च स्वनिरूपितविषयतात्वा-वच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन । स्वं ज्ञानम् । अत्र प्रथमसंबन्ध-निवेशात् घटत्वेन घटपटावगाहिज्ञानयोः समानाकारत्वव्यावृत्तिः । सामानाधि-करण्यमात्रनिवेशेनैव तद्व्यावर्तनेऽपि घटत्वेनैकघटावगाहिज्ञानस्य तादृशनाना-घटावगाहिज्ञानसमानाकारतापत्तिः । अतः तदुपेक्षणम् । समनियतत्वघटक-दलद्वयनिवेशनप्रयोजनमपि घटत्वेनैकानेकविषयकज्ञानयोः समानाकारत्वव्या-

---

टि. **जीवत्वब्रह्मत्वोपलक्षितेति** । अत्र द्वैतवादिमते जीवत्वब्रह्मत्वाद्युपलक्षित-विषयताया अप्रसिद्धिरिति **न्यायभास्करोक्तं** न शङ्कनीयम् । तादृशनिरूपितत्वद्वयाभा-ववत्त्वविषयतासामान्यकज्ञानाबाध्यत्वे उक्तविशेषणतात्पर्याभ्युपगमेन तादृशज्ञानस्य तन्मते प्रसिद्धत्वात् ॥ जीवत्वोपलक्षितनिष्ठा ब्रह्मत्वोपलक्षितनिष्ठा च या विषयता तत्त्वावच्छिन्न-प्रतियोगिताकाभावयोः ज्ञानविशेषणत्वे नाप्रसिद्धिरिति **श्रीत्यागराजाध्वरीन्द्राः** ।

वर्तनमेव। ज्ञाननिरूपितेत्यत्र विशेष्यतायां प्रथममुख्यत्वानुपादाने घटवत् भूतलमिति ज्ञानस्य घटवद्भूतलवान् देशः इति ज्ञानसमानाकारतापत्तिः। तदीयघटत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यतायां स्वनिरूपित-मुख्यविशेष्यतावत्त्वसंबन्धेनोक्तज्ञानस्य सत्त्वात्। द्वितीयविशेष्यतायां मुख्य-त्वानुपादाने दर्शितोत्तरज्ञानस्य पूर्वज्ञानसमानाकारतापत्तिः। द्वितीयसंबन्धा-निवेशे घटत्वेन घटज्ञानस्य पटत्वेन घटज्ञानस्य घटो रूपवान् घटो रसवान् इति ज्ञानयोर्वा समानाकारत्वापत्तिः। एवं समानाकारत्वस्य निर्वचनसंभवेनोक्त-सिद्धसाधनं दुर्वारमिति।

तन्न। उक्तरीत्या सविकल्पकज्ञानयोःसमानाकारत्वेऽपि निर्विकल्प-कयोस्तदनिरुक्त्या सिद्धसाधनाभावात्। न च स्वनिरूपितप्रकारताद्यन्य-विषयतावृत्तितादृशविषयतावत्त्वं समानाकारत्वम्। विषयतायां विषयतावृत्ति-त्वञ्च सामानाधिकरण्यसंबन्धेन। तथा च शोधकवाक्यजन्यमहावाक्यजन्य-ज्ञानयोः समानाकारत्वप्राप्त्या सिद्धसाधनतादवस्थ्यमिति वाच्यम्। उक्तरीत्या समानाकारत्वस्वीकारेऽपि घटवत् भूतलमिति विशिष्टवैशिष्ट्यावगाहिज्ञानविशेष्ये विशेषणमितिरीत्या जायमानज्ञानयोराकारसाम्येऽपि विषयताभेदस्य प्रामाणिक-तया तस्य च विलक्षणसामग्रीप्रयोज्यत्वेन महावाक्यशोधकवाक्यजन्यज्ञानयोः तत्तदानुपूर्वीजन्यज्ञानत्वेन शोधकवाक्यजन्यज्ञानस्य जीवत्वोपलक्षितनिरूपितत्व-ब्रह्मत्वोपलक्षितनिरूपितत्वद्वयशून्यविषयताकतयोक्तप्रातिभासिकस्योक्तज्ञानबाध्य-त्वेन तत्र सिद्धसाधनाभावात्। न च विलक्षणसामग्रीप्रयोज्यत्वं न विषयतावैलक्षण्यप्रयोजकम्। लघुचन्द्रिकायां सत्तादात्म्यविचारावसरे विषयवैल-क्षण्याद्विषयतावैलक्षण्यं तद्वैलक्षण्याच्च ज्ञानवैलक्षण्यमित्युक्तत्वादिति वाच्यम्। निरूप्यनिरूपकभाववैलक्षण्यस्यापि क्वचन विषयतावैलक्षण्यप्रयोजकताया अवश्या-भ्युपगन्तव्यत्वात्। तथा हि-घटो द्रव्यमिति घटत्वद्रव्यत्वोपलक्षितविषयकज्ञाना-

---

टि. द्वितीयसंबन्धः—स्वनिरूपितविषयतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छे-दकत्वसंबन्धः। आकारसाम्येऽपि—घटवत् भूतलमिति समानशब्दाभिलप्यत्वेऽपि।

नन्तरं घटत्वोपलक्षिते द्रव्यत्वोपलक्षितभेदज्ञानं न जन्यते। जायते च तद्व्यक्तित्वाद्युपलक्षिते घटे द्रव्यत्वोपलक्षितभेदज्ञानमित्यनुभवसिद्धम्। तदनुरोधेन विषयतावैलक्षण्यं वाच्यम्। तच्च निरूप्यनिरूपकभावमन्तरा दुर्निरूपमिति तत्रोत्तरज्ञानीयविषयतायां पूर्वज्ञानीयघटत्वविषयतानिरूपितत्वमावश्यकम्। द्वित्वनाशकालीनायां द्वे द्रव्ये इति बुद्धौ पूर्वज्ञानीयद्वित्वविषयतानिरूपितविषयतावत्त्वस्य व्युत्पत्तिवादे तृतीयाकारके इत्थंभूतलक्षणे इति सूत्रार्थविचारावसरे भट्टाचार्यैरुक्तत्वात्। तथा च सत्यादिवाक्यजन्यनिर्विकल्पकज्ञानीयविषयतायां पूर्वज्ञानीयसत्यत्वादिविषयतानिरूपितत्वस्य ज्ञानत्वोपलक्षिते सत्यत्वोपलक्षितप्रतियोगिकभेदभानापत्तिवारणाय स्वीकरणीयतया जीवत्वोपलक्षितनिरूपितत्वब्रह्मत्वोपलक्षितनिरूपितत्वद्वयशून्यविषयताशालिसत्यादिवाक्यजन्यज्ञानबाध्यत्वमुक्तभेदस्येति न सिद्धसाधनावकाशः। न च समानकालीनज्ञानविषयतयोर्निरूप्यनिरूपकभावस्य भट्टाचार्यानुमतत्वेऽपि

सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः
पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भवः।

---

टि. ज्ञानान्तरविषयतायाः ज्ञानान्तरविषयतानिरूपितत्वे **श्रीगदाधरभट्टाचार्यसंमतिमाह-द्वित्वनाशकालीनायामिति**। 'अत एव द्वित्वनाशकालीनायां द्वे द्रव्ये इति बुद्धौ न द्वित्वविषयकत्वम्, अपि तु द्वित्वविशिष्टविषयकत्वमेव, द्वित्वरूपविशेषणधीजन्यत्वादित्याचार्याः' इति **भट्टाचार्यग्रन्थः**। तत्र द्वित्वाविषयिण्यां बुद्धौ द्वित्वविशिष्टविषयत्वमुक्तम्। द्रव्यविषयतायाः द्वित्वविषयता (प्रकारता) निरूपितत्वं विना द्वित्वविशिष्टविषयत्वं न संभवति। द्वित्वविषयता च न तज्ज्ञानीयेति पूर्वज्ञानीया ग्राह्या। अतश्च ज्ञानान्तरीयविषयतानिरूपितत्वं ज्ञानान्तरीयविषयतायाः तद्ग्रन्थाभिमतमिति भावः।

एवं तत्पूर्वतनः 'अत एव संज्ञाविशिष्टसंज्ञिज्ञाने संज्ञादेर्विषयत्वमनङ्गीकुर्वतां प्राभाकराणां प्राचीननैयायिकानां च मते तटस्थज्ञानविषयतयैव विषयतावच्छेदकत्वात् संज्ञादेरप्रकारस्य ज्ञानविषयविशेषणत्वम्' इति **भट्टाचार्यग्रन्थोऽपि** प्रकृतार्थानुकूलतया अनुसन्धेयः। अख्यातिवादिभिः स्वीकृतः भ्रमस्थलाभिषिक्तस्य इदं रजतं इति ज्ञानद्वयस्य विषयतयोः निरूप्यनिरूपकभावोऽपि दृष्टान्ततयानुसन्धेयः इति **श्रीपरीक्षिन्महाराजाः**।

उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डार्थधीः
सर्वैरेव ततः पदैरयमिह ज्ञेयः क्रमः सूरिभिः ॥

इति संक्षेपशारीरकोक्तिरीत्या विशिष्टज्ञानस्य व्यवहितत्वात् विभिन्नकालीनज्ञानविषयतयोर्निरूप्यनिरूपकभावासंभव इति वाच्यम्। बाधकाभावेन विभिन्न कालीनज्ञानविषयतयोरपि निरूप्यनिरूपकभावस्य शास्त्रारम्भसमर्थने भट्टत्र्यम्बकैर्विवेचितत्वात्।

यदपि ब्रह्मान्यविशिष्टान्यत्वं ब्रह्मप्रमातिरिक्ताबाध्यत्वम्। वैशिष्ट्यञ्च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन। स्वाधिकरणता, स्वविषयकाप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वसंबन्धेन। भेदप्रतियोगितावच्छेदकता, स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धावच्छिन्ना। स्वनिष्ठावच्छेदकता, स्वपूर्वत्वस्वप्रयोजकाज्ञानसमानकालीनत्वान्यतरसंबन्धावच्छिन्नेति। तथा च शुक्तिरूप्यादेः ब्रह्मान्यशुक्त्यादिविशिष्टत्वात्, उक्तध्वंसप्रतियोगित्वादेः ध्वंसप्रतियोगित्वाभावविशिष्टब्रह्मविशिष्टत्वात्, नायं सः इति प्रतीतिसिद्धभेदस्य तत्तेदन्तोपलक्षितस्वरूपविशिष्टत्वात्, वारणमिति निरस्तम्। नानाज्ञानपक्षे उक्तरीत्या वारणेऽपि एकाज्ञानपक्षे शुक्तिरूप्ये सिद्धसाधनावारणात्। तत्पक्षे

---

**टि.** सत्यत्वाद्युपलक्षितं ब्रह्म सत्यादिवाक्यजन्यनिर्विकल्पकधीविषयः, महावाक्यजन्यधीविषयस्तु जीवत्वब्रह्मत्वाद्युपलक्षितं ब्रह्मेति विषयभेदादेव तयोर्विषयताभेदः, तत्तदुपलक्षितत्वन्तु तत्तद्विशिष्टार्थधीद्वारकतत्तद्वाक्यजन्यनिर्विकल्पकधीविषयत्वमिति न कोऽपि दोषः इति **श्रीत्यागराजाध्वरीन्द्राः**।

**ब्रह्मान्यविशिष्टान्यत्वमिति**। ब्रह्मान्यव्यापकान्यत्वमिति फलितोऽर्थः। ब्रह्मान्यशुक्तिः स्वविषयकनिश्चयत्वसंबन्धेन यत्र निश्चये वर्तते तत्र स्वपूर्वत्वस्वप्रयोजकाज्ञानसमानकालीनत्वान्यतरसंबन्धेनस्ववद्भिन्नत्वसंबन्धेन शुक्तिरूप्यं वर्तते इति तस्य व्यापकता। स्वसत्यादिसंबन्धघटकस्वाधिकरणतानियामकसंबन्धः व्याप्यतावच्छेदकसंबन्धः। भेदप्रतियोगितावच्छेदकताघटकसंबन्धः व्यापकतावच्छेदकसंबन्धः इति बोध्यम्।

**विशिष्टब्रह्मविशिष्टत्वादिति**। विशिष्टब्रह्मणश्च शुद्धब्रह्माभिन्नत्वादिति शेषः।

शुक्तिज्ञानकाले रूप्योपादानाज्ञानसत्त्वात्। नानाज्ञानपक्षेऽपि ब्रह्मत्वोपलक्षितानुयोगिके ज्ञानत्वोपलक्षितप्रतियोगिकभेदे ब्रह्म न ज्ञानमिति भ्रमसिद्धे सत्यं ज्ञानमिति शोधकवाक्यजन्यधीबाध्ये सिद्धसाधनस्य दुर्वारत्वाच्चेति।

तन्न। व्यापकताघटकतया स्वसंस्कारसमानकालीनत्वसंबन्धस्यैव निवेश्यत्वात्। तथा च पूर्वोक्तभेदप्रतियोगितावच्छेदकता स्वसंस्कारसमानकालीनत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धावच्छिन्ना पर्यवस्यति। एवञ्च शुक्तिज्ञानस्य रूप्यसंस्कारनिवर्तकतया रूप्यस्योक्तव्यापकतया तदन्यत्वाभावेन न तत्र सिद्धसाधनसंभवः, घटादेर्नाशेऽपि सर्वदा व्यवहारकाले कार्यस्य तादात्म्यापन्नं किञ्चिद्रूपमस्ति तत्त्वदर्शनं विना तदुच्छेदासंभवादिति सत्कार्यवादः सांख्यानामिवास्माकमपीति **लघुचन्द्रिको**क्तरीत्या घटज्ञानकाले घटसंस्कारसत्त्वेन व्यापकत्वासंभवेनाश्रयासिद्ध्यभावाच्च।

यदपि, ब्रह्म न ज्ञानमिति भ्रमसिद्धभेदे सिद्धसाधनवारणाय महावाक्यजन्यतानवच्छेदकविषयताविशिष्टान्यत्वमेवोक्तविशेषणार्थः। वैशिष्ट्यञ्च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन। स्वाधिकरणता स्वनिरूपकाप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वसंबन्धावच्छिन्ना। भेदप्रतियोगितावच्छेदकता स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन। स्वनिष्ठावच्छेदकता स्वपूर्वत्वस्वप्रयोजकाज्ञानसमानकालीनत्वान्यतरसंबन्धावच्छिन्ना। तथा च तादृशभेदस्योक्तसंबन्धेन महावाक्यजन्यतानवच्छेदकीभूतसत्यमित्यादिवाक्यजन्यबोधीयविषयताविशिष्टत्वाद्वारणमिति निरस्तम्। महावाक्यानां परस्परजन्यबोधे व्यभिचारवारणायाव्यवहितोत्तरत्वस्य जन्यतावच्छेदकत्वे विषयतानिवेशे प्रयोजनविरहेण महावाक्यजन्यबोधीयविषयताया अपि तादृशवाक्यजन्यतानवच्छेदकत्वेनाश्रयासिद्धेः इत्युक्तम्।

तदपि न। महावाक्यजन्यत्वाभावसमानाधिकरणविषयताविशिष्टान्यत्वस्योक्तविशेषणार्थतया विवक्षणेन उक्ताश्रयासिद्ध्यादीनां वारणसंभवात्।

यद्वा, विषयतायाः कार्यतावच्छेदककोटावनिवेशे यत्र परामर्शोत्तरमात्म-घटद्वित्वमुत्पन्नं तत्र तस्य घटेऽपि सत्त्वेन तत्र परामर्शाभावात् व्यभिचारवारणाय विषयतानिवेशनमावश्यकमेवेति **लोकनाथभट्टाचार्योक्तरीत्या** महावाक्यजन्य-बोधीयविषयताया महावाक्यजन्यतानवच्छेदकत्वाभावान्नाश्रयासिद्धिः। न च तादृशकार्यतावच्छेदककोटौ बुद्धित्वनिवेशान्न दोष इति वाच्यम्। यत्र वह्निव्याप्यधूमवान् पर्वतः, घटव्याप्यपटवान् पर्वतः, इति परामर्शे सति वह्नि-मान् पर्वतो घटवानित्यनुमितिर्न जायते, अपि तु समूहालम्बनैवानुमितिः, तत्र वह्निमान् पर्वतो घटवानित्यनुमित्यापत्तिवारणाय धर्मितावच्छेदकव्यावृत्तनि-रूप्यनिरूपकभावापन्नविषयतानिवेशस्यावश्यकतया महावाक्यजन्यबोधीयविषय-तायां महावाक्यजन्यतानवच्छेदकत्वासंभवेनाश्रयासिद्धिवारणसंभवात्।

अवच्छेदकत्वं न स्वरूपसंबन्धविशेषः। किन्तु अनतिरिक्तवृत्तित्वम्। अव्यवहितोत्तरत्वस्य कार्यताच्छेदकत्वेऽपि विषयताव्यापकत्वस्य जन्यतायां संभवेन नाश्रयासिद्धिः। यद्वा, तृणारणिमणिन्यायेनान्यतमत्वेन कारणत्वस्य परस्परजन्यबोधे व्यभिचारवारणायावश्यकतया प्रकृते महावाक्यजन्यबोधीय-विषयताया महावाक्यान्यतमजन्यतावच्छेदकतया नाश्रयासिद्धिरिति केचित्।

तन्न समञ्जसम्।

---

**टि.** एकत्र निर्णीतेनान्यत्रापि व्यवहारः इति न्यायेन परामर्शकार्यतावच्छेदककुक्षौ अव्यवहितोत्तरत्वनिवेशेऽपि विषयताया निवेशे महावाक्यजन्यतावच्छेदककोटावपि विषय-तानिवेशः सिद्ध्यतीत्याशयेनैव अत्र प्रघट्टके परामर्शकार्यतावच्छेदककुक्षौ विषयतानिवेशस्या-वश्यकत्वं युक्तिभिः प्रदर्शितं ग्रन्थकृतेति बोध्यम्।

**घटेऽपि सत्त्वेनेति।** इदमापाततः, अन्यतरकर्मणा संयोगोत्पत्तिस्थले व्यभिचार-वारणप्रकारेणात्राप्युपपत्तेरिति **श्रीपरीक्षिन्महाराजाः।**

**बुद्धित्वनिवेशान्न दोष इति।** अथ बुद्धित्वनिवेशेऽपि महावाक्योत्तरजातस्यात्मसु-खद्वित्वस्यापेक्षाबुद्धिरूपस्य व्यावृत्तिर्न संभवतीति चेत्, न। तादृशद्वित्वस्यापेक्षाबुद्धिविषय-त्वरूपत्वेन बुद्धित्वाभावात्।

प्रकारान्तरेणाश्रयासिद्धिं वारयतां मतं दूषयितुमुपन्यस्यति-अवच्छेदकत्वमिति।

परामर्शानुत्तरप्रत्यक्षादिसाधारणविषयताव्यापकत्वस्य परामर्शाव्यवहितोत्तरत्वावच्छिन्नजन्यतायामसंभवात्। किञ्च, वह्न्यभावव्याप्यजलवान् ह्रदः इतिपरामर्शोत्तरह्रदोवह्न्यभाववानित्यनुमितौ, तादृशशैवालवान् ह्रदः इति परामर्शोत्तरतादृशानुमितौ च समानाकारत्वेन विषयताभेदाभावात् तत्तत्परामर्शाव्यवहितोत्तरत्वावच्छिन्नजन्यतयोरेकस्यामपि जन्यतायां विषयताव्यापकत्वं न संभवति। न च द्वयोः परामर्शयोः वह्न्यभावत्वावच्छिन्नप्रकारताविशिष्टप्रकारताशालिनिश्चयत्वेनैकरूपेण जनकत्वं स्वीक्रियते। वैशिष्ट्यञ्च प्रकारतायां स्वनिरूपितव्यापकत्वनिष्ठप्रकारतानिरूपितप्रकारतावच्छेदकावच्छिन्नत्वस्वनिरूपितसामानाधिकरण्यविषयतानिरूपितत्वस्वनिरूपकज्ञानीयपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितत्वैतत्त्रितयसंबन्धेन। अतो न दोष इति वाच्यम्। एवमपि विभिन्नसंबन्धेन विभिन्नलिङ्गकपरामर्शस्थले दोषस्य दुर्वारत्वात्। न च प्रकारतावच्छेदकावच्छिन्नत्वस्थाने प्रकारतावैशिष्ट्यं दीयते। वैशिष्ट्यञ्च स्वावच्छेदकावच्छिन्नत्वस्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेनेति न दोष इति वाच्यम्। एवमपि व्यतिरेकपरामर्शस्य प्रतियोगिवैयधिकरण्यान्योन्याभावादिघटितपरामर्शानाञ्च पृथगेव हेतुतया अनुगतजनकताया दुर्ग्रहत्वेन निरुक्तदोषावारणात्।

नाप्यन्यतमत्वेन जनकता। अन्यतमत्वस्य भेदकूटघटितस्यावच्छेदकत्वे कूटत्वस्यैकविशिष्टापररूपतया विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुधर्मावच्छिन्नानेककारणत्वप्रसङ्गेन तथा कारणत्वासंभवात्। अन्यतमत्वस्याखण्डोपाधिरूपत्वे कूटत्वस्य विषयताविशेषरूपत्वाभ्युपगमे वा अन्यथासिद्धिनिरूपकत्वेन

---

टि. स्वनिरूपितव्यापकत्वनिष्ठप्रकारतेति। इदञ्च जलव्यापकवह्न्यभावसमानाधिकरणजलवान् ह्रदः इति ज्ञानीयाया वह्न्यभावनिष्ठायाः व्यापकत्वप्रकारतानिरूपितविशेष्यतायाः सामानाधिकरण्यविशेष्यतानिरूपितप्रकारतायाश्चैक्याभिप्रायेण, तयोर्भेदपक्षे तु स्वावच्छिन्नविशेष्यतानिरूपितव्यापकत्वनिष्ठप्रकारतेति निवेशनीयम्।

तथा कारणत्वस्य ग्रन्थकृद्भिः निराकृतत्वात् । अन्यथा कार्यतावच्छेदकावच्छिन्नं प्रत्येकेन व्यभिचारिणमनुवर्तमानेनान्यतमत्वेन कारणत्वे कार्येण कारणं नानुमीयेत । गृहीतकार्यतावच्छेदकाश्रयस्य विशेषात्मना सामान्यव्यभिचारनिरूपकादन्यतमत्वेन कारणत्वयोग्यात् बुभुत्सितप्रसिद्धकारणान्यकारणविशेषादुत्पन्नत्वेन संभावितत्वया तस्य लिङ्गत्वासंभवात् ।

किञ्च अन्यतमत्वेन कारणत्वे तत्तन्महावाक्यजन्योपस्थितिरेव तत्तदाकांक्षाज्ञानसहकारिणीति नियमानुपपत्तिः । न च तत्तदुपस्थितिविशिष्टाकांक्षाणामेवान्यतमत्वेन कारणत्वमिति वाच्यम् । तादृशोपस्थितिद्वितीयक्षणोत्पन्नाकांक्षाज्ञानस्योपस्थितिविरहिणि स्वद्वितीयक्षणेऽपि सत्त्वेन कारणतया तदव्यवहितोत्तरक्षणेऽपि शाब्दबोधापत्तेः ।

किञ्च अव्यवहितोत्तरत्वस्य कार्यतावच्छेदकत्वे आकांक्षाज्ञाने अप्रामाण्यग्रहे सति शाब्दबोधवारणाय कारणतावच्छेदककोटौ अप्रामाण्यग्रहाभाववैशिष्ट्यमवश्यं निवेश्यम् । तथा सति कार्यतावच्छेदककोटौ विषयताया अनिवेशे राजपुरुषः भूतलं घटवत् इति द्विविधाकांक्षाग्रहसत्त्वे तत्रैकत्राप्रामाण्यग्रहसत्त्वे वाक्यार्थद्वयस्यापि शाब्दबोधानुत्पत्तिः स्यादिति विषयतानिवेश आवश्यक एव ।

न च राजपुरुषः नृपपुरुषः इत्यादिद्विविधानुपूर्वीज्ञानसत्त्वे एकत्राप्रामाण्यग्रहे च विषयविशेषप्रवेशेऽपि व्यभिचारात् अप्रामाण्यग्रहाभावविशिष्टतत्तत्कारणानन्तर्यस्यैव कार्यतावच्छेदकघटकत्वेन वाच्यतया तेषामभावात् कार्यतावच्छेदके विषयतानिवेशो नावश्यक इति वाच्यम् । अप्रामाण्यग्रहे अप्रामाण्यग्रहे कार्यमुत्पद्यते तत्राप्यप्रामाण्यग्रहे नोत्पद्यते इत्यप्रामाण्यग्रहस्य तत्तद्व्यक्तित्वेनैवा-

---

टि. **निराकृतत्वादिति** । प्रामाणिकानां तथा कारणत्वेन व्यवहाराभावात् । अन्यथा दण्डत्वादीनामपि कारणतावच्छेदकत्वभङ्गप्रसङ्गः, तत्र अखण्डेनान्यतमत्वेनैव कारणत्वस्य वक्तुं शक्यत्वादिति भावः । **न चेति** । यस्या आकांक्षाज्ञानव्यक्तेरुपस्थितिवैशिष्ट्यं संभवति तस्या एवान्यतमत्वेन हेतुत्वमित्याशयः ।

भावः कारणतावच्छेदककुक्षौ प्रवेश्यः। तथा चैकविषयकशाब्दज्ञानानुकूलाकांक्षाद्वयज्ञानस्थलीयैकतराप्रामाण्यज्ञानव्यक्तेरभावो न निवेश्यः इति दोषाभावात्। न चैवं यत्र प्रथमं राजपुरुषः इत्याकांक्षाज्ञानं अनन्तरमप्रामाण्यज्ञानास्कन्दितं नृपपुरुषः इति ज्ञानं तत्र द्वितीयज्ञानतृतीयक्षणे शाब्दबोधवारणाय तदप्रामाण्यज्ञानव्यक्तेरभावस्य कारणतावच्छेदके प्रवेशनीयतया द्वितीयक्षणे शाब्दबोधानुपपत्तिवारणाय कार्यतावच्छेदकेऽपि तन्निवेशस्यावश्यकत्वमिति वाच्यम्। तदप्रामाण्यज्ञानस्य स्वोत्पत्तिद्वितीयक्षणावच्छिन्नस्यैवाभावस्य प्रवेशनीयतया अनुपपत्त्यभावात्।

न च क्षणस्य उपाधिविशेषावच्छिन्नकालस्य उपाधिरूपस्य वा अप्रामाण्यग्रहे विवक्षणीयतयोपाधीनामानन्त्येन विनिगमनाविरहात् सर्वेषां विशेषणत्वापत्त्या एकव्यक्तेरप्यनन्ताभावानां कारणतावच्छेदकत्वप्रसङ्गेन महागौरवात् कार्यतावच्छेदके अप्रामाण्यग्रहाभाववैशिष्ट्यस्यैव निवेशनमुचितमिति वाच्यम्। आकांक्षाज्ञानत्वावच्छिन्ने योग्यताज्ञानं विनापि स्वाव्यवहितोत्तरत्वरूपकार्यतावच्छेदकावच्छिन्नोपधायकतायाः सत्त्वेन स्वावच्छिन्नासमवधानप्रयुक्तफलोपधायकत्वाभाववत्तदवच्छिन्नकत्वरूपस्य तत्सहकारित्वस्य योग्यताज्ञानादिष्वसंभवेन राजपुरुषः इत्याकांक्षाज्ञानात् योग्यताज्ञानाभावेऽपि राजपुरुषविषयकशाब्दबोधप्रसङ्गात्।

न च तादृशबुद्धित्वावच्छिन्नस्यापादकाभावान्नापत्तिः ; इष्यत एवाव्यवहितोत्तरत्वावच्छिन्नस्योत्पत्तिरिति वाच्यम्। राजसंबन्धिपुरुषशाब्दबोधे योग्यताज्ञानस्य कारणत्वेन केवलादपि तस्माच्छाब्दबोधप्रसङ्गात्। न चाकांक्षाज्ञानमन्तरेण योग्यताज्ञानस्य फलानुपधायकत्वेनाकांक्षाज्ञानस्य योग्यताज्ञानसहकारित्वात् तत्संबन्धेन तत्प्रकारकस्य तत्संबन्धावच्छिन्नाधेयतासंबन्धेन किञ्चि-

---

**टि. स्वोत्पत्तिद्वितीयेति**। प्रकृताप्रामाण्यज्ञानव्यक्तेः स्वद्वितीयक्षणविशिष्टाया एव प्रतिबन्धकत्वम्। द्वितीयक्षणविशिष्टतदप्रामाण्यज्ञानव्यक्त्यभावश्च तदुत्पत्तिक्षणे वर्तते इति तदा शाब्दबोधोपपत्तिरिति भावः।

त्प्रकारकतद्विशेष्यकस्य च योग्यताज्ञानत्वेन तयोः परस्परजन्यबोधे व्यभिचारवारणाय तत्तद्योग्यताज्ञानान्यतरत्वस्यैव कारणतावच्छेदकत्वादिति वाच्यम्। यत्कार्यस्य यद्यत्कारणनिरूपितकार्यतावच्छेदकाक्रान्तत्वं तावत्कारणसमुदायादेव तत्कार्योत्पत्तिरिति नियमेन योग्यताज्ञानाद्येकतरकारणविगमे राजसंबन्धी पुरुष इति शाब्दबोधो मा जायताम्।

तथापि परत्र राजसंबन्धिपुरुषादिगोचरबोधसंक्रान्तये तादृशशब्दबोधकारणत्वज्ञानाधीना राजपुरुष इत्यादिवाक्यरचना कथं घटताम्। तादृशकारणत्वग्रहासंभवात्। तादृशशाब्दबुद्धित्वं कार्यतानवच्छेदकं सत् राजपुरुष इत्यादिवाक्यजन्यज्ञानमात्रे कथं वर्तताम्। नियामकाभावात्। शाब्दत्वस्य कार्यतानवच्छेदकत्वे गतं तत्सद्भावप्रत्याशया। साधकाभावात्। तत्तत्कारणकार्यतायां एकधर्मावच्छिन्नत्वस्य व्याप्यव्यापकभावापन्नानेकधर्मावच्छिन्नत्वस्य वा ज्ञानाधीनतया कारणसंघटनवार्तयापि गतं शाब्दबोधस्थले इत्यलमतिप्रसङ्गेन।

एवञ्च महावाक्यजन्यबोधीयविषयतायां महावाक्यजन्यतानवच्छेदकत्वाभावेन नैवाश्रयासिद्ध्यभिधानं संगच्छते।

---

टि. अव्यवहितोत्तरत्वस्य महावाक्यकार्यतावच्छेदककोटौ निवेशेऽपि विषयताविशेषस्य कार्यतावच्छेदकत्वमावश्यकम्। अन्यथा महावाक्यज्ञानाव्यवहितोत्तरत्वावच्छिन्नं प्रति अप्रामाण्यज्ञानाभावविशिष्टमहावाक्यज्ञानत्वेन कारणत्वे, यत्र महावाक्यज्ञानं स्वांशे अप्रामाण्यावगाहि घटोद्रव्यमितिवाक्यान्तरविषयकञ्च समूहालम्बनं तत्र जायमानस्य घटो द्रव्यमिति शाब्दबोधस्यापि महावाक्यज्ञानाव्यवहितोत्तरत्वरूपकार्यतावच्छेदकाक्रान्तत्वेन तत्पूर्वं अप्रामाण्यज्ञानाभावविशिष्टमहावाक्यज्ञानरूपकारणाभावेन व्यभिचारापत्तेः। न च कार्यतावच्छेदककोटावपि तत्तदप्रामाण्यज्ञानाभावविशिष्टमहावाक्यज्ञानाव्यवहितोत्तरत्वं निवेश्यते इति नोक्तव्यभिचार इति शङ्कनीयम्। अनन्ततत्तदप्रामाण्यज्ञानाभावानां कार्यतावच्छेदककोटौ निवेशापेक्षया विषयताविशेषनिवेशस्यैव लाघवेन न्याय्यत्वात् इति युक्तिसंभवमभिप्रेत्याह—**अलमतिप्रसङ्गेनेति**।

यत्तु महावाक्याजन्यज्ञानविशिष्टान्यत्वमेवोक्तविशेषणार्थः। ज्ञानवैशिष्ट्यञ्चाधेयतासंबन्धेन। आधेयता च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन। स्वनिष्ठावच्छेदकता स्वपूर्वत्वस्वप्रयोजकाज्ञानसमानकालीनत्वोभयसंबन्धावच्छिन्ना। महावाक्यत्वञ्च जीवेशाभेदतात्पर्यकत्वेनाद्वैत्यभिमतत्वम्। तथाचोक्तभेदस्य महावाक्याजन्यं यच्छोधकवाक्यजन्यं ज्ञानं उक्ताधेयतासंबन्धेन तद्विशिष्टत्वान्न सिद्धसाधनमिति समाधाय, तथा सति तत्त्वमसीत्यादिवाक्यजन्यनिर्विकल्पकधीकाले विद्यमानं यत् घटज्ञानं उक्ताधेयतासंबन्धेन प्रपञ्चस्य तद्विशिष्टत्वेनाश्रयासिद्धिरित्युक्तम्।

तदयुक्तम्। स्वप्रयोजकाज्ञानसमानकालीनत्वमात्रस्य भेदप्रतियोगितावच्छेदकसंबन्धत्वसंभवेनाश्रयासिद्ध्यभावात्। वस्तुतस्तु महावाक्यजन्यनिर्विकल्पकधीकाले घटज्ञानमेव न संभवति। ज्ञानस्याज्ञानतत्कार्यध्वंसरूपत्वस्य प्रागेवोक्ततया यौगपद्यासंभवात्।

न च तथापि महावाक्यजन्यधीकाले विद्यमानं यत् शोधकवाक्यजन्यं ज्ञानं उक्ताधेयतासंबन्धेन प्रपञ्चस्य तद्विशिष्टत्वादाश्रयासिद्धिरिति वाच्यम्। महावाक्यजन्यबोधं प्रति शोधकवाक्यजन्यनिर्विकल्पकज्ञानस्य पदार्थज्ञानविधया हेतुत्वेन पूर्वं सत्त्वेऽपि महावाक्यजन्यशाब्दबोधकाले पुनः शोधकवाक्यजन्यबोधासंभवात्। शाब्दबोधे तादृशशाब्दसिद्धेः प्रतिबन्धकत्वात्तमादायाश्रयासिद्ध्यसंभवात्।

---

**टि. स्वप्रयोजकेति।** यत्र महावाक्यजन्यनिर्विकल्पकपूर्वक्षणे नष्टघटविषयकं ज्ञानं जातं तत्र तादृशघटज्ञाने स्वोत्पत्तिक्षणावच्छेदेन स्वप्रयोजकाज्ञानसमानकालीनत्वेऽपि स्वपूर्वत्वाभावादुभयसंबन्धेन स्ववद्भेदवत्त्वमेवेति शङ्काशयः। स्वनिष्ठावच्छेदकताघटकोभयसंबन्धमध्ये प्रयोजनाभावेन स्वपूर्वत्वत्यागे स्वप्रयोजकाज्ञानसमानकालीनत्वसंबन्धेन घटवत्त्वस्यैव तादृशघटज्ञाने सत्त्वात् तादृशज्ञानविशिष्टान्यत्वं घटादावक्षतमिति नाश्रयासिद्धिरिति सिद्धान्तभावः।

यत्तु एवमपि अखण्डाकारब्रह्मज्ञानबाध्ये तदव्यवहितपूर्ववृत्तिप्रातिभासिके सिद्धसाधनं दुर्वारम् । स्वजन्यध्वंसप्रतियोग्यज्ञानप्रयुक्तत्वसंबन्धेन ध्वंसविशिष्टान्यत्वस्य पक्षविशेषणतया तद्वारणे तु अज्ञाने तदुपादाने सिद्धसाधनम् । तस्य मूलाज्ञानध्वंसजन्यध्वंसप्रतियोगिस्वप्रयुक्तत्वाभावेनोक्तध्वंसविशिष्टान्यत्वात् । स्वजन्यध्वंसप्रतियोगित्वस्वजन्यध्वंसप्रतियोग्यज्ञानप्रयुक्तत्वान्यतरसंबन्धेन ध्वंसविशिष्टान्यत्वविवक्षणेन तस्य स्वजन्यध्वंसप्रतियोगित्वसंबन्धेन ध्वंसविशिष्टतया तदन्यत्वाभावाद्वारणे च, अनादिपदार्थानां स्वजन्यध्वंसप्रतियोगित्वसंबन्धेन मूलाज्ञानध्वंसविशिष्टतया पक्षबहिर्भावापत्तिः । स्वजन्यध्वंसप्रतियोग्यज्ञानत्वस्य अन्यतरसंबन्धघटकतामभ्युपगम्य उक्तापत्तिपरिहारेऽपि, स्वप्रागभावध्वंसात्मकज्ञानजन्यध्वंसप्रतियोग्यज्ञानत्वसंबन्धेन मूलाज्ञानस्य ज्ञानात्मकध्वंसविशिष्टतया पक्षबहिर्भावापत्तिः । तद्वारणाय स्वावच्छिन्नजनकतानिरूपितजन्यतावन्नाशप्रतियोगिताविशिष्टत्वसंबन्धेन ध्वंसत्वविशिष्टान्यत्वमेव ब्रह्मप्रमेत्यादेरर्थः । प्रतियोगितावैशिष्ट्यञ्च स्वाश्रयत्वस्वाश्रयाज्ञानप्रयुक्तत्वान्यतरसंबन्धेनेति विवक्षणीयम् । अथापि नोक्तप्रातिभासिके सिद्धसाधनं वारयितुं शक्यम् । ज्ञानेनाज्ञानध्वंसस्य तेन दृश्यान्तरध्वंसस्य च सिद्धान्तेऽनङ्गीकारात् । अन्यथा तादृशध्वंसस्य नाशकाभावेन 'विद्वान्नामरूपाद्विमुक्तः' इति श्रुतिविरोधापत्तेः, ध्वंससामान्यस्यैवानङ्गीकारे आश्रयासिद्धेश्च इत्युक्तम् ।

तन्न । स्वरूपातिरिक्तध्वंसानङ्गीकारेऽपि स्वरूपात्मकस्य तस्य 'अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः' इति प्रमाणसिद्धस्याङ्गीकारेऽनुपपत्त्यभावात् । न च ध्वंसस्य ब्रह्मरूपत्वाङ्गीकारे ब्रह्मणो नित्यतया तस्याज्ञानादिध्वं-

---

**टि. तद्वारणायेति** । ध्वंसविशिष्टान्यत्वमित्यत्र ध्वंसपदेन ज्ञानान्यध्वंसविवक्षणेन ज्ञानात्मकध्वंसजन्यध्वंसप्रतियोगिमूलाज्ञानस्य पक्षबहिर्भाववारणं संभवतीति **श्रीलक्ष्मीनृसिंहशास्त्रिपादाः** ।

**स्वजन्यध्वंसेति** स्वपदेन मूलाज्ञानध्वंसस्य स्वजन्यध्वंसपदेन तूलाज्ञानध्वंसस्य च ग्रहणं बोध्यम् ।

सात्मकत्वमनुपपन्नमिति वाच्यम्। ध्वंसत्वोपलक्षितस्य शुद्धस्य नित्यत्वानपायात्। ननु शुद्धस्य नित्यत्वेऽपि दृश्यान्तरध्वंसत्वोपहितस्यानित्यतया तत्त्वज्ञानोत्तरमप्यनुवर्तमानस्य निवर्तकाभावेन 'विद्वान्नामरूपाद्विमुक्तः' इति श्रुतिबाधापत्तिरिति चेन्न। तादृशोपहितस्वरूपस्यापि क्षणिकत्वेन तदुत्तरमननुवृत्तेः। न च **अद्वैतसिद्धौ** मङ्गलश्लोके मिथ्याबन्धविधूननेनेत्यत्र तृतीया ज्ञापकहेतौ न तु कारकहेतौ इति **लघुचन्द्रिकाग्रन्थ**विरोध इति वाच्यम्। तादृशग्रन्थस्य विद्यावतः क्षणस्य अविद्यातत्कार्याश्रयकालपूर्वत्वाभावः इति नियमपक्षमवलम्ब्य प्रवृत्तत्वेन विरोधाभावात्। अथवा, स्वप्रयुक्ताभावप्रतियोग्यज्ञानत्वस्वप्रयुक्ताभावप्रतियोग्यज्ञानप्रयुक्तत्वान्यतरसंबन्धेन अभावविशिष्टान्यत्वं पक्षविशेषणम्। अतो न कस्यापि दोषस्य प्रसक्तिः।

वस्तुतस्तु ब्रह्मज्ञानाव्यवहितपूर्ववृत्तिप्रातिभासिके सिद्धसाधनवारणाय करणसंसर्गिदोषाप्रयुक्तत्वमेवोक्तविशेषणस्थाने निवेश्यमिति न कस्या अपि शङ्काया अवकाश इति बोध्यम्।

---

**टि.** (पृ. 24, पं. 19) **अनुपपत्त्यभावादिति**। भगवत्पादानां हरिमीडास्तवे 'तं संसारध्वान्तविनाशं हरिमीडे' इति ब्रह्मणः ध्वान्तनाशरूपत्वोक्तिः पक्षमिममुपोद्बलयति।

ज्ञानेनाज्ञानध्वंसस्य तेन दृश्यान्तरध्वंसस्य चानङ्गीकारपक्षे निरुक्तप्रातिभासिकवारकं ध्वंसाघटितमत्यन्ताभावघटितं विशेषणमाह—**अथवेति**।

**उक्तविशेषणस्थाने निवेश्यमिति**। ब्रह्मप्रमातिरिक्ताबाध्येत्यत्र बाध्यत्वपदेन बाधयोग्यत्वं विवक्षितम्। तच्च करणसंसर्गिदोषप्रयुक्तत्वम्। तदभाव एव ब्रह्मप्रमातिरिक्ताबाध्यत्वार्थः। स च लोकसिद्धविशेषणतासंबन्धेन पक्षविशेषणम्। प्रातिभासिकसामान्यस्य तादृशदोषप्रयुक्तत्वात्तद्वारणमिति भावः।

जीवत्वब्रह्मत्वाद्युपलक्षितब्रह्मविषयताशून्यज्ञानजन्यध्वंसप्रतियोगित्वाप्रामाण्यज्ञानानास्कन्दितजीवत्वब्रह्मत्वाद्युपलक्षितब्रह्मविषयताशालिज्ञानवत्क्षणवृत्तित्वान्यतरवदज्ञानतत्प्रयुक्तान्यत्वं विवक्षणीयम्। तथा च न ब्रह्मप्रमाऽव्यवहितपूर्वोत्पन्नप्रातिभासिके सिद्धसाधनम्। तत्प्रयोजकाज्ञानस्य ब्रह्मज्ञानासमानविषयकतया ब्रह्मज्ञानक्षणे सत्त्वेन निरुक्तविषयताशून्यज्ञानजन्यध्वंसप्रतियोगित्वविरहेऽपि तादृशब्रह्मज्ञानवत्क्षणवृत्तित्ववत्त्वेन तादृशान्यतर-

एवमसति बाधवारणाय सत्तादात्म्यमपि पक्षविशेषणम् ।

यत्तु असत्ख्यात्यनङ्गीकर्तृमते असति बाधायोगात्, तदङ्गीकारपक्षेऽपि साध्याभाववदसतो बाधत्वासंभवात्, पक्षविशेष्यकसाध्यप्रकारकप्रतीतिजनकाज्ञाननिवर्तकता यद्रूपावच्छिन्नविषयकत्वावच्छिन्ना तद्रूपावच्छिन्नत्वस्यैव बाधलक्षणत्वात् असद्विषयकाज्ञानस्य भवन्मतेऽनङ्गीकारेण तद्विषयकज्ञानस्याज्ञाननिवर्तकत्वाभावात्, सत्तादात्म्यनिवेशनं विफलमिति ।

तन्न । 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति **पातञ्जलसूत्रेण** शशविषाणं नास्तीत्याद्यनुभवेन चासत्ख्यात्यनङ्गीकारपक्षस्यायुक्तत्वात् । तदङ्गीकारपक्षे साध्याभाववदसतो बाधत्वञ्च संभवति । पक्षविशेष्यकसाध्यप्रकारकज्ञानानुत्पादप्रयोजकता तादृशज्ञानानुकूलशक्तिनाशकता वा यद्रूपावच्छिन्नविषयकत्वावच्छिन्ना तद्रूपावच्छिन्नत्वस्यैव बाधलक्षणत्वेन तस्य साध्याभाववदसति सत्त्वे बाधकाभावात् ।

---

वदज्ञानप्रयुक्ते निरुक्तप्रातिभासिके निरुक्तान्यत्वविरहात् इति **श्रीलक्ष्मीनृसिंहशास्त्रिपादाः** । अत्र ज्ञानेनाज्ञानध्वंसानङ्गीकारे ज्ञानजन्यध्वंसप्रतियोगित्वदलनिवेशः न संभवतीति न शङ्कनीयम् । तत्स्थाने जीवत्वब्रह्मत्वोपलक्षितब्रह्मविषयताशून्यज्ञानाधिकरणक्षणावृत्तित्वस्य निवेशसंभवादिति बोध्यम् ।

मूलाविद्यानिवर्तकब्रह्मज्ञानाव्यवहितपूर्ववर्तिभ्रमविषयस्य व्यावहारिकत्वमेव **श्रीब्रह्मानन्दस्वामिना**मभिमतम् । मिथ्यात्वमिथ्यात्वविचारे स्वबाधकबाध्यत्वं स्वसमानसत्ताकत्वप्रयोजकमित्यत्र 'ब्रह्मज्ञानबाध्यं शुक्तिरूप्यादिकं व्यावहारिकेण स्वाभावेन समानसत्ताकमेव ब्रह्मप्रमाबाध्यत्वस्य व्यावहारिकत्वस्योभयत्रापि संभवात्' इति तैरभिधानात् । अतस्तत्र सिद्धसाधनशङ्कैव नोन्मिषतीति **श्रीत्यागराजाध्वरीन्द्राः** ।

ब्रह्मान्यविषयकज्ञानाबाध्यत्वप्रभृतीनां दूष्यतया न्यायभास्करे लिखितानां परिष्काराणां मध्ये कस्यापि गौडपादादिगौडब्रह्मानन्दान्ताद्वैतिसार्वभौमैरनुक्ततया तद्दूषणमनुक्तोपालम्भनम् । परन्तु **गुरुचन्द्रिकायां श्रीब्रह्मानन्दस्वामिभिः** ब्रह्मप्रमातिरिक्ताबाध्यत्वं पल्लवाज्ञानतत्कार्यान्यतरभिन्नत्वं पल्लवाज्ञानानङ्गीकारे प्रातिभासिकत्वरूपजातिविशेषविशिष्टभिन्नत्वमिति निरूपितम् । तत्र दूषणमनुक्त्वा **न्यायभास्करकाराणाम**काण्डताण्डवस्तैरेवानुमोदनीयः इति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः** ।

यत्तु—यद्रूपावच्छिन्नविषयिताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नत्वमेव बाधत्वमिति तादृशलक्षणमसत्यपि संभवति इति न वक्तुं शक्यम्। भवन्मते अभावमात्रस्य केवलान्वयितया अतिप्रसङ्गेन तस्य कार्यजनकत्वासंभवेन प्रतिबन्धकतायाः कारणीभूताभावप्रतियोगितारूपत्वासंभवात् तज्जनकाज्ञाननाशकतारूपत्वस्यावश्यकत्वात्। न च मिथ्यात्वघटकाभावस्य व्यावहारिकत्वपक्षे तस्य कारणत्वं लोकसिद्धविशेषणतासंबन्धेन संभवति, अतोऽतिप्रसङ्गाभावात् कारणीभूताभावप्रतियोगित्वमेव प्रतिबन्धकत्वं बाधशरीरे निवेशयितुं शक्यत इति वाच्यम्। तथा सति पर्वतो वह्निमानित्यादौ प्रातिभासिकवह्न्यभाववत्पर्वतस्यापि बाधत्वापत्तेः, निरुक्तप्रतिबन्धकत्वाक्रान्तत्वात्तज्ज्ञानस्येति।

तन्न। कार्यानुकूलशक्तिविघटकत्वरूपप्रतिबन्धकत्वस्य दाहस्थले मणेरिव संभवेन प्रतिबन्धकत्वस्य कारणीभूताभावप्रतियोगितारूपत्वानङ्गीकारात्। अङ्गीकारेऽपि प्रातिभासिकवह्न्यभाववत्ताज्ञानव्यावहारिकवह्निमत्ताज्ञानयोः असमसत्ताकविषयकतया प्रातिभासिकवह्न्यभावस्य व्यावहारिकवह्निना विरोधाभावेन बाध्यबाधकभावासंभवेन उक्तवह्न्यभाववत्पर्वतस्य बाधत्वापत्तेः सुलभवारणत्वात्।

यद्वा, बाधलक्षणे यद्रूपे ब्रह्मान्यविषयकज्ञानाबाध्यत्वस्य करणसंसर्गिदोषाप्रयुक्तत्वस्य वा निवेशेनोक्तवह्न्यभावव्यावृत्तिः संभवति, प्रातिभासिकवह्न्यभावस्योक्तविशेषणानाक्रान्तत्वात्। न च प्रातिभासिकरजतपक्षकसत्यत्वसाध्यकस्थले व्यावहारिकमिथ्यात्ववद्रजतस्य बाधत्वानुपपत्तिः। रजतत्वस्योक्तविशेषणा-

---

टि॰ साध्याभाववत्पक्षस्येव पक्षनिष्ठाभावप्रतियोगिसाध्यस्यापि बाधस्वरूपतायास्तान्त्रिकसिद्धत्वात् प्रकृते असन्निष्ठाभावप्रतियोगिमिथ्यात्वस्य बाधत्वं संभवति, तत्र तादृशमिथ्यात्वाज्ञाननाशकताघटितलक्षणमपि संभवतीति **श्रीत्यागराजाध्वरीन्द्राः**।

नाक्रान्ततया पक्षतावच्छेदकसाध्याभावोभयपरयद्रूपपदेन ग्रहीतुमशक्यत्वादिति वाच्यम् । यद्रूपावच्छिन्नविशेष्यकयद्रूपावच्छिन्नप्रकारकज्ञानीयविषयिता प्रतिबन्धकतावच्छेदिका ब्रह्मान्यविषयकज्ञानाबाध्यत्ववत्तादृशप्रकाराश्रयत्वस्य करणसंसर्गिदोषाप्रयुक्तत्ववत्तादृशप्रकाराश्रयत्वस्य धर्म्यन्यूनसत्ताकतादृशप्रकाराश्रयत्वस्य प्रतियोग्यन्यूनसत्ताकतद्रूपवत्त्वस्य वा विवक्षणेन दोषाभावात् ।

अथवा, निर्वह्निः पर्वतो वह्निमानित्यादौ बाधे प्रतिबन्धकताघटितलक्षणस्यानुमित्यप्रसिद्ध्याऽसंभवेन यादृशपक्षसाध्यके यावन्तो दोषाः संभवन्ति तावदन्यतमत्वं हेत्वाभाससामान्यलक्षणमित्युक्तरीत्या साध्याभाववत्पक्षपक्षवृत्तिसाध्याभावपक्षवृत्त्यभावप्रतियोगिसाध्यान्यतमत्वस्य प्रतियोग्यन्यूनसत्ताकाभावघटितस्य बाधलक्षणत्वान्न कस्यापि दोषस्य प्रसक्तिः । तस्मादसति बाधवारणाय सत्तादात्म्यविशेषणमावश्यकम् ।

यत्तु-एतेन ब्रह्मणि बाधोऽपि निरस्तः, शुद्धस्य ज्ञानाविषयत्वपक्षे बाधलक्षणस्यैवासंभवादिति ।

तन्न । ज्ञानाघटितबाधलक्षणस्योक्तत्वात् , लक्षणासंभवस्य वस्तुदोषत्वाप्रयोजकत्वाच्च ।

यदपि प्रातिभासिकचिद्भेदस्य ब्रह्मण्यपि संभवेन स्वसमानसत्ताकचिद्भेदवत्त्वस्यैव चिद्भिन्नत्वमित्यनेन विवक्षणीयतया असति कस्या अपि सत्ताया अभावेन तेनैव वारणे सत्तादात्म्यं व्यर्थमिति ।

तदपि न । ब्रह्मणि बाधवारणाय व्यवहारकालाबाध्यत्वस्य धर्म्यन्यूनसत्ताकत्वस्य वा चिद्भेदे विवक्षणीयतया तस्यासत्साधारण्येन सत्तादात्म्यसार्थक्यात् ।

---

**टि. असत्साधारण्येनेति** । धर्मिन्यूनसत्ताको यो यः तद्भिन्नत्वं धर्म्यन्यूनसत्ताकत्वं विवक्षितमिति बोध्यम् । प्रातिभासिकोपादानस्याज्ञानस्यावच्छिन्नचिन्निष्ठत्वेन शुद्धचिन्निष्ठत्वाभावात् शुद्धचिति प्रातिभासिकचिद्भेद एव न संभवतीति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः** ।

यच्चोक्तं ब्रह्मतादात्म्यरूपस्य भवदभिमतसत्तादात्म्यस्य सत्यत्ववादिमते प्रपञ्चेऽस्वीकारेण तादृशविशेषणोपादानस्य संदिग्धासिद्धिसंपादकत्वाच्चेति ।

तन्न । पक्षतावच्छेदकतावच्छेदकस्य सत्तादात्म्यत्वस्य उभयसंमततया तेन रूपेण निवेशात् । अभिन्ननिमित्तोपादानत्ववादिभवन्मते ब्रह्मप्रपञ्चयोरुपादानोपादेययोः तन्तुपटयोरिवाविनाभावसंबन्धस्वीकारेण तस्योक्ततादात्म्यरूपत्वाच्च ।

यदपि प्रातिभासिकव्यावृत्तरूपेण पक्षतावच्छेदककोटौ सत्तादात्म्यं निवेश्य प्रातिभासिकसत्तादात्म्यवतः प्रातिभासिकस्य व्यावर्तनसंभवात् ब्रह्मप्रमेत्यादिविशेषणं व्यर्थम् । भवन्मते सत्तादात्म्यत्वघटत्वपटत्वादिकं त्रिविधम्—प्रातीतिकमात्रवृत्ति व्यावहारिकमात्रवृत्ति तदुभयसाधारणञ्चेति । एवञ्चोभयसाधारणसत्तादात्म्यत्वेन तन्निवेश्य प्रातिभासिके सिद्धसाधनसंपादनस्य तद्वारकविशेषणान्तरोपादानस्य च प्रक्षालनाद्धीतिन्यायेनायुक्तत्वादिति ।

तदपि न । तत्तद्वादिविप्रतिपत्तौ तत्तद्विशेषणसार्थक्यात् । न वादिभ्यां युगपद्विप्रतिपत्तिः । प्रातिभासिकव्यावृत्तसत्तादात्म्याङ्गीकर्त्रा सह विवादे सत्तादात्म्यविशेषणदाने आद्यमनुपादेयमेव । भट्टभास्करेण विवादे तु तत्सार्थक्यमनपवादम् ।

किञ्च अननुगतरूपेण सत्तादात्म्यनिवेशापेक्षया अनुगतेन सत्तादात्म्यत्वेन रूपेण लाघवेन निवेशनमेवोचितम् । न च सत्तादात्म्यत्वादीनां प्रातिभासिकव्यावहारिकसाधारण्ये प्रातीतिकरजतात् व्यावहारिककटकादिकार्यापत्तिरिति वाच्यम् । व्यावहारिकत्वविशिष्टस्यैव कारणस्य व्यावहारिककार्योत्पाद-

---

टि॰ चिद्घटोभयभेदवारणाय निवेशनीयेन प्रतियोग्यवृत्तित्वविशेषणेन प्रातिभासिकविच्छेदो वार्यते इत्याशयेन सत्तादात्म्यं निवेशितमिति **श्रीत्यागराजाध्वरीन्द्राः ।**

ब्रह्म जगतः स्वरूपतः परिणाम्युपादानमिति वदता जगत्सत्यत्ववादिना यादवमिश्रेण जगति ब्रह्मतादात्म्यस्य स्वीकृतत्वेन संदिग्धासिद्धिर्नास्तीति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः ।**

प्रयोजकत्वदर्शनेन तदन्तर्भावेणैव कारणकूटस्य फलोत्पत्तिव्याप्यतास्वीकारात्। अत एव 'प्रातीतिकं न कुत्रापि कारणं किन्तु तस्य ज्ञानं चिद्रूपम्, अत एव च यत्र प्रातीतिकविषयकात् व्यावहारिकविषयकाच्च ज्ञानादेकजातीयं कार्यं तत्रैकेनैव रूपेण तयोर्हेतुत्वस्वीकारः' इति ह्युक्तं **लघुचन्द्रिकायाम्**। न च **सिद्धौ** प्रथमपरिच्छेदान्ते सत्तात्रैविध्याङ्गीकारात्तद्विरोध इति वाच्यम्। तस्य प्रौढिवादत्वेन **लघुचन्द्रिकायां** विवृतत्वात्।

यत्तु-उभयसाधारणसत्तादात्म्यत्वेन तन्निवेशेऽपि न तुच्छव्यावृत्तिः, शशविषाणं सदिति भ्रमसंभवेन शशविषाणादावपि प्रातीतिकसत्तादात्म्यसंभवादिति।

तन्न। अनुयोगिरूपेण परिणममानाविद्याया एव तन्निष्ठसत्तादात्म्यरूपेण परिणामः इति नियमस्य शुक्तिरजतादौ दर्शनेन अलीकरूपेणाविद्याया अपरिणममानतया तन्निष्ठसत्तादात्म्यरूपेण परिणामासंभवात्। न च सत्प्रतियोगिकतादात्म्यस्योक्तनियमस्वीकारेणालीकावृत्तित्वेऽपि सदनुयोगिकतादात्म्यस्यालीकसाधारण्ये क्षतिविरह इति वाच्यम्। सदलीकमिति प्रतीत्यभावेन अविद्यायास्तादृशपरिणामे हेतुत्वाकल्पनात्। 'तन्मते भ्रमस्यासत्ख्यातित्वस्वीकारेणानिर्वचनीयख्यात्यनभ्युपगमेन तादात्म्यादिसंबन्धस्याप्यलीकस्यैव भ्रमे भानात्, अनलीकस्य भानस्वीकारे तस्य सद्रूपतापत्त्या अत्यन्ताभावप्रतियोगित्वप्रत्ययानुपपत्तेः, अलीकस्यैव तन्मतेऽभावप्रतियोगित्वात्, रूप्यादेरलीकान्यत्वापत्त्या अधिष्ठानान्यभ्रमविषयस्यालीकत्वनियमाच्च। सद्रूपस्य तादात्म्यस्य तत्र भाने अलीकरूप्यादौ तदनुयोगित्वाभावात् अलीके रूप्यादिनिष्ठतादात्म्ये सत्प्रतियोगिकत्वस्येव सद्रूपे अलीकानुयोगिकत्वस्याभावात्, सदसतोरुपरागासंभवात्' इत्यादि**लघुचन्द्रिको**क्तरीत्या सत्प्रतियोगिकतादात्म्यसमकक्षस्य सदनुयोगिकतादात्म्यस्यालीकेऽनुपपत्तेश्च।

यदपि-अनुयोगितासंबन्धेन सत्प्रतियोगिकतादात्म्यस्य पक्षतावच्छेदकघटकत्वेनैव ब्रह्मणि बाधवारणे चिद्भिन्नत्वविशेषणं व्यर्थम्। स्वस्मिन् स्वप्रतियोगि-

कतादात्म्यानुयोगित्वाभावात्। प्रतियोगितानुयोगितान्यतरसंबन्धेन तादृशतादात्म्यस्य घटकतां स्वीकृत्य ब्रह्मणि बाधसंपादनस्य तद्वारकविशेषणान्तरोपादानस्य च प्रक्षालनाद्धीतिन्यायग्रस्तत्वादिति।

तदपि न। सत्प्रतियोगिकतादात्म्यस्य संबन्धसामान्येन पक्षतावच्छेदकत्वाभिप्रायेण पक्षतावच्छेदककोटौ चिद्भिन्नत्वस्यापि निवेशात्। अनुयोगितासंबन्धेन निवेशे चिद्भिन्नत्वस्यानपेक्षितत्वाच्च। अत एवोक्तं लघुचन्द्रिकायाम्—'ननु सद्रूपं शुद्धचिदेव तत्प्रतियोगिकत्वविशिष्टतादात्म्यत्वावच्छिन्नाधिकरणत्वञ्च तस्यां नास्तीति चिद्भिन्नत्वं व्यर्थमिति चेत्। सत्यम्। उक्ताधिकरणत्वनिवेशे चिद्भिन्नत्वं न देयम्, तत्प्रतियोगिकतादात्म्यस्याधिकरणत्वमात्रनिवेशाभिप्रायेण दत्तम्' इति।

ननु सत्प्रतियोगिकतादात्म्यनिवेशे आश्रयासिद्धिः, इदंपदार्थे रजतस्येव ब्रह्मणि दृश्यमात्रस्य तादात्म्येनाध्यस्ततया इदंपदार्थे रजतप्रतियोगिकतादात्म्यस्येव ब्रह्मणि दृश्यप्रतियोगिकतादात्म्यस्योत्पत्तिसंभवेऽपि घटादिदृश्ये सद्रूपब्रह्मणोऽनध्यासात् तत्र सत्प्रतियोगिकतादात्म्यस्वीकारे प्रमाणाभावादिति चेत्।

न-इदं रजतं जानामि रजतमिदं जानामि इत्यनुभवानुरोधेन इदं रजतं रजतमिदम् इति प्रतीत्योर्वैलक्षण्यस्यावश्यकतया तस्य च भिन्नविषयकत्वप्रयोज्यत्वेन प्रथमप्रतीतेरिदमि रजततादात्म्यावगाहित्वं द्वितीयप्रतीतेः रजते इदन्तादात्म्यावगाहित्वञ्चावश्यकम्। तथा घटः सन्निति प्रतीतेः घटे सत्प्रतियोगिकतादात्म्यावगाहित्वं सन् घटः इति प्रतीतेः सति घटप्रतियोगिकतादात्म्यावगाहित्वञ्च स्वीकर्तव्यमित्युक्ताश्रयासिद्ध्यनवकाशात्। न च उपनीतं विशेषणतयैव भासते इति वदद्भिः नैयायिकादिभिः प्रथमप्रतीतिस्वीकारेऽपि द्वितीयप्रतीतेरनङ्गीकारेण दृष्टान्तासंप्रतिपत्तिरिति वाच्यम्। सिद्धान्ते उपनयस्यानुमितावतिप्रसञ्जकस्य प्रत्यक्षविषयत्वानियामकतया उक्तनियमस्यानङ्गीकारात्। नैयायिकमतेऽपि अलौकिकविषयतायामेव तस्य नियामकत्वात्। लौकिक्याञ्च

विशेषणतायामिव विशेष्यतायामपि दोषाणामेव बाधविशेषाभावादिसहकृतानां नियामकत्वात् । इदं रजतं पश्यामि रजतमिदं पश्यामीत्यनुव्यवसायद्वयानुरोधेन इदं रजतं रजतमिदमिति प्रतीत्योः तदुपपादकयोः परेणावश्यमभ्युपगन्तव्यतया दृष्टान्तासंप्रतिपत्त्यभावाच्च ।

यत्तु—विषयितावैलक्षण्येनैव ज्ञानवैलक्षण्यनिर्वाहे तदर्थं विलक्षणविषयकल्पनमयुक्तम् । अन्यथा घटवद्भूतलं घटभूतलसंयोगाः इति ज्ञानयोर्वैलक्षण्यनिर्वाहाय विलक्षणविषयकल्पनापत्तेः । न च प्रथमज्ञाने संबन्धविधया भासमानसंयोगस्य संबन्धोऽप्यधिको भासते द्वितीयज्ञाने तु स न भासते इति वाच्यम् । संयोगादिप्रतियोगिकसंबन्धमादायापि समूहालम्बनसंभवात् । न च उक्तविशिष्टबुद्धौ संयोगः स्वरूपतो भासते न तु संयोगत्वेन, सखण्डपदार्थस्यापि संबन्धविधया स्वरूपतो भानोपगमात्, समूहालम्बने च संयोगत्वेन स भासते, इति संयोगत्वरूपाधिकपदार्थभानाभानाभ्यामेव तयोर्विशेष इति वाच्यम् । एवमपि—घटवद्भूतलं संयोगश्च, घटभूतलसंयोगाः—इति ज्ञानयोर्विशेषानिर्वाहादिति ।

तन्न । संयोगसंसर्गकविशिष्टबुद्धौ स्वरूपतः घटप्रतियोगिकत्वविशिष्टतया वा भूतलघटयोः संयोगभानम्, समूहालम्बने च न तथा, त्रितयसाहित्यञ्च भासते, इत्यभ्युपगमेन विषयवैलक्षण्येनैव तयोर्वैलक्षण्यस्यावश्यकत्वात् । अत एव विशिष्टवैशिष्ट्यावगाहिज्ञानस्य विशेष्येविशेषणमितिरीत्या एकत्रद्वयमितिरीत्या च जायमानाभ्यां समानाकाराभ्यामपि ज्ञानाभ्यां विषयवैलक्षण्यादेव ज्ञानवैलक्षण्यमुक्तं **लघुचन्द्रिकायाम्** ।

---

**टि· वैलक्षण्यस्यावश्यकत्वादिति** । चार्थे द्वन्द्वविधानात् घटभूतलसंयोगाः इति वाक्यजन्यबोधे चार्थसाहित्यं भासते । अभिलापजन्यप्रतीतितुल्यत्वादभिलप्यमानप्रतीतेः तादृशशब्दाभिलप्यप्रत्यक्षप्रतीतावपि साहित्यं भासते इति वैलक्षण्यं सिद्ध्यतीति भावः ।

वस्तुतस्तु प्रत्यक्षे साहित्यभाननैयत्यस्य वक्तुमशक्यतया साहित्याविषयकसमूहालम्बनप्रत्यक्षप्रतीतितः घटवद्भूतलमिति प्रतीतेर्वैलक्षण्यं संसर्गसंसर्गस्यापि विशिष्टबुद्धौ

**अर्थेनैवेत्युदयनाचार्योक्तिश्च** संगच्छते । तथा च इदं रजतं रजतमिदमिति प्रतीतिवैलक्षण्यनिर्वाहाय तादात्म्यद्वयवत् सन् घटः घटः सन् इति प्रतीतिवैलक्षण्याय तादात्म्यद्वयमवश्यमभ्युपगन्तव्यमिति नाश्रयासिद्धिः ।

यत्तु—विषयितावैलक्षण्यात् ज्ञानवैलक्षण्येऽपि विषयितावैलक्षण्यस्य विषयवैलक्षण्याधीनतया बहिर्विषयविलोपापत्त्यनवकाशः । स्वतोऽव्यावृत्तविषयिताकल्पनस्यैव बौद्धमतप्रवेशापादकत्वात् विषयव्यावृत्तविषयिताकल्पनस्यातथात्वात् । अन्यथा भवद्भिरपि ज्ञानविषययोस्संबन्धस्य चित्तादात्म्यरूपस्य ज्ञानाद्भिन्नाभिन्नस्य विषयत्वस्य स्वीकारेण भवतामपि बौद्धमतप्रवेशापत्तेर्दुर्वारत्वात् । ज्ञानवैलक्षण्यस्य साक्षाद्विषयवैलक्षण्याधीनत्वाभावेऽपि परम्परया तदधीनत्वादेव अर्थेनैवेत्यस्योपपत्तेः । निराकारतयेत्यस्यापि स्वतोऽव्यावृत्तविषयिताशून्यतयेत्यर्थात् । न च प्रणालीकल्पनापेक्षया साक्षाद्विषयवैलक्षण्यादेव ज्ञानवैलक्षण्यमिति कल्पनमुचितमिति वाच्यम् । घटवद्भूतलं घटभूतलसंयोगाः इति ज्ञानयोरभिन्नविषयकयोर्वैलक्षण्यानुपपत्तेः । तत्र विषयतासु अखण्डं विशेष्यतात्वादिकं कल्पयित्वा ज्ञानवैलक्षण्यस्योपपादनीयत्वात् । तत्रापि विलक्षणविषयकल्पने घटपटादिनानापदार्थविषयकसमूहालम्बनविशिष्टबुद्धिभेदेनानन्तविषयकल्पनापत्तेः इत्युक्तम् ।

---

भानात् संयोगप्रतियोगित्वस्याधिकस्य भानाद्विषयवैलक्षण्येनैव सूपपादम् । न च घटभूतलसंयोगाः घटप्रतियोगिकः संयोगश्चेति समूहालम्बने प्रतियोगित्वस्यापि भानान्न विषयवैलक्षण्यमिति वाच्यम् । अत्र घटप्रतियोगिकत्वस्य संयोगे प्रकारतया भानात् तत्संसर्गोऽप्यधिको भासते न घटवद्भूतलमिति ज्ञाने इति वैलक्षण्यस्य सुवचत्वादिति **श्रीपरीक्षिन्महाराजाः**। घटवद्भूतलमिति ज्ञाने घटविशिष्टभूतलस्य विषयत्वं घटभूतलसंयोगाः इति ज्ञाने केवलभूतलस्य विषयत्वं विशिष्टकेवलयोश्च भिन्नत्वात् भिन्नविषयकत्वं संभवतीति **श्रीलक्ष्मीनृसिंहशास्त्रिपादाः** ।

**अर्थेनैवेति** । **'अर्थेनैव विशेषो हि निराकारतया धियाम्'** इत्याचार्यकारिका । धियां-घटपटादिज्ञानानां विशेषः अर्थाभिन्नः विषयितास्थानीयेनाकारेण शून्यत्वात् इति तदर्थः । विषयितावैलक्षण्येनैव ज्ञानवैलक्षण्ये बहिर्विषयं विनापि विषयितावैलक्षण्येन ज्ञानवैलक्षण्यनिर्वाहात् बौद्धस्वीकृतसाकारवादापत्तिः । अतः विषयवैलक्षण्येनैव ज्ञानवैलक्षण्यं वक्तव्यमिति भावः ।

तन्न। विशिष्टकेवलयोर्भेदस्वीकारेण दर्शितबुद्ध्योरपि विशिष्टकेवलविषयकतयैव वैलक्षण्योपपत्तेरुक्तत्वात्। ज्ञानवैलक्षण्यस्योक्तरीत्या विषयवैलक्षण्येनैवोपपत्त्या विशेष्यतात्वादीनामखण्डानामप्रामाणिकत्वात्। तत्तद्बुद्धिभेदेन विभिन्नविषयकत्वकल्पनस्य तद्वैलक्षण्यनिर्वाहकतया प्रामाणिकत्वेन गौरवस्याबाधकत्वात्। विशिष्टकेवलयोरैक्यमभ्युपगच्छतां मते तु दर्शितबुद्ध्योः वैलक्षण्यनिर्वाहाय अखण्डविशेष्यतात्वादिकल्पनस्यैव बौद्धमतप्रवेशापादकत्वात्। ज्ञानविषययोः संबन्धस्य विषयतात्वेन तादात्म्यत्वेनैव वा अनुव्यवसायेन गृह्यमाणत्वेऽपि अखण्डविशेष्यतात्वादिरूपेणागृह्यमाणत्वाच्च।

एतेन—विशिष्टवैशिष्ट्यावगाहिनः तत्क्षणविशिष्टघटवानिति ज्ञानस्य विशेष्ये विशेषणमिति रीत्या एकत्रद्वयमिति रीत्या वा जायमानात् तत्क्षणविशिष्टघटवानिति ज्ञानात् वैलक्षण्यनिर्वाहायाखण्डविशेष्यताविशेषणतात्वादिकं कल्पयित्वा प्रथमज्ञानस्यैव तत्क्षणनिष्ठविषयतायां घटनिष्ठा या प्रकारता तदवच्छेदकतात्वरूपाखण्डधर्मवत्त्वं नत्वितरस्येति वैलक्षण्योक्तिः परास्ता।

तत्क्षणविशिष्टघटवन्तं जानामीत्यनुव्यवसाये तादृशविषयतानामखण्डानां भानासंभवेन विशिष्टवैशिष्ट्यावगाहिज्ञानस्य तत्क्षणनिष्ठविशेषणतावच्छेदकतात्वरूपाखण्डधर्मवद्विषयतानिरूपकत्ववचनस्य निर्युक्तिकत्वात्। लघुचन्द्रिकोक्तविशेषणतावच्छेदकतात्वस्य सखण्डस्योक्तबुद्धिद्वयनिरूपिततत्क्षणनिष्ठविषयतासाधारण्येन विशिष्टकेवलयोर्भेदमभ्युपगम्य विषयकृतवैलक्षण्यस्यैव वाच्यत्वाच्च।

यत्तु-उक्तप्रतीत्योर्वैलक्षण्यनिर्वाहाय विशिष्टकेवलयोर्भेदस्वीकारे पदार्थानां

---

उक्तत्वादिति। स्वतोव्यावृत्तविषयितायाः क्वचिल्लाघवानुरोधेन कल्पने बहिर्विषयसामान्यस्यैवाकल्पनप्रयुक्तलाघवानुरोधेन सर्वत्रैव स्वतोव्यावृत्तविषयिताकल्पनस्य न्याय्यतया साकारवादिबौद्धमतप्रवेशापत्तिरनिवार्या। घटवद्भूतलं घटभूतलसंयोगाः इति ज्ञानयोः अर्थाविशेषेऽपि वैलक्षण्ये आचार्यकारिकायां अर्थेनैव इत्येवकारः असंगतः स्यात्। घटद्भूतलमिति ज्ञाने स्वतोव्यावृत्तविषयितां स्वीकुर्वतां न्यायभास्करकाराणां निराकारतयेत्यस्य स्वतोव्यावृत्तविषयिताशून्यतयेत्यर्थवर्णनं स्वाभ्युपगमविरुद्धमिति च बोध्यम्।

क्षणिकत्वापत्त्या बौद्धमतप्रवेशापत्तिः तत्तत्क्षणविशिष्टस्य भिन्नत्वात्। न च केवलस्य स्थिरत्वान्न दोष इति वाच्यम्। केवलस्य तत्तत्क्षणसंबन्धित्वे क्षणभेदेन भेदापत्तेः। क्षणासंबन्धित्वे कालसंबन्धित्वाभावेन तुच्छत्वापत्तेरिति।

तन्न। विशिष्टस्यातिरिक्तताया अपि **दीधितिकारानुमतत्वात्।** **सार्वभौमपरिष्कारे** 'विशिष्टस्यातिरिक्तत्वात् अनतिरेके तु विशेषणविशेष्यसंबन्धस्यैव परम्परया व्याप्यत्वात्' इत्यादिग्रन्थेनातिरिक्तत्वपक्षस्याप्युक्तत्वात्। अन्यथा गुणो गुणान्यत्वविशिष्टसत्तावानिति प्रतीत्यापत्तेः, विशिष्ट केवलयोरभेदात्। केवलस्य क्षणसंबन्धित्वे तद्भेदेन भेदस्येष्टत्वात्। अन्यथा धारावाहिज्ञानानामनधिगतत्वघटितप्रमात्वानुपपत्तेः। क्षणासंबन्धिनोऽपि कालस्य तुच्छत्वाभावेन कालासंबन्धितायास्तुच्छत्वाप्रयोजकत्वात्। सत्तादात्म्यशून्यत्वस्य ज्ञानत्वजात्याश्रयाविषयत्वस्य निस्स्वरूपत्वस्य वा तुच्छत्वरूपतया केवल - कालयोः तदन्यतमवत्त्वेन तुच्छत्वासंभवाच्च। विशिष्टकेवलयोस्तादात्म्यमभ्युपगच्छतां मते केवले विशिष्टतादात्म्यसत्त्वे विशेषणसंबन्धस्यापि नान्तरीयकतया सत्त्वेन तस्य क्षणसंबन्धित्वेनापि तुच्छत्वानापत्तेश्च। न च केवलस्य क्षणसंबन्धित्वे तत्प्रतीतौ विशेषणक्षणस्यापि भानापत्तिरिति वाच्यम्। घटस्य रूपपरिमाणादिमत्त्वेऽपि केवलघटप्रतीतौ रूपादेरभासमानत्वात्। अन्यथा तेषामपि घटप्रत्यक्षकाले प्रत्यक्षत्वव्यवहारापत्तेः। प्रत्यक्षत्वप्रयोजकशरीरे ग्रन्थकाराणां तत्तदाकारवृत्त्युपहितत्वनिवेशप्रयासवैफल्यापत्तेश्च। तत्राऽदृष्टादिप्रतिबन्धेन घटस्थमपि रूपादि न भासते इति चेत्। तुल्यं प्रकृतेऽपि। यद्वा केवले कालसंबन्धित्वविशिष्टत्वाभावेऽपि तदुपलक्षितत्वसत्त्वेन न काऽप्यनुपपत्तिः।

---

टि. **तुच्छत्वानापत्तेश्चेति।** न च शुद्धस्यापि तत्क्षणसंबन्धित्वे तस्य तत्क्षणविशिष्टाद्भेदो न स्यादिति शङ्कनीयम्। समानाधिकरणप्रतीतिनिर्वाहाय स्वीकरणीयस्य भेदस्याभेदाविरोधित्ववत् तत्क्षणविशिष्टभेदस्यापि तत्क्षणसंबन्धाविरोधित्वादिति बोध्यम्।

विशिष्टकेवलयोस्तादात्म्यस्वीकारे केवलस्य तत्क्षणविशिष्टतादात्म्यमेव तत्क्षणसंबन्धरूपमिति केवलस्य न तुच्छत्वापत्तिरिति **श्रीत्यागराजाध्वरीन्द्राः।**

यत्तु दूषणमुक्तं क्षणभेदेन घटादेर्भेदापत्तिरिति ।

तत् परमतेऽपि तुल्यम् । पूर्वक्षणवृत्तित्वविशिष्टस्यैतत्क्षणे असत्त्वेन घटादीनां भेदापत्तेः । सत्त्वे च पूर्वक्षणवृत्तित्वविशिष्टघटस्याभावः उत्तरक्षणे वर्तते इति सिद्धान्तविरोधापत्तेरिति ।

किञ्च विषयवैलक्षण्यस्य ज्ञानवैलक्षण्यप्रयोजकत्वास्वीकारे तार्किकस्य साकारवादिबौद्धमतनिराकरणं न युज्यते । पूर्वोक्तसमूहालम्बनविशिष्टबुद्ध्योः वैलक्षण्यानुपपत्तेः विषयतासु अखण्डविशेष्यतात्वादीनां कल्पने नियामकत्वासंभवस्य 'अखण्डविशेष्यतात्वादेः विषयतायां स्वीकारे तु तस्य ज्ञानवैलक्षण्यानुभवान्यथानुपपत्तिरेव कल्पिका वाच्या । सा च ज्ञानगतमेव वैलक्षण्यं कल्पयेन्न विषयतानिष्ठम् । तथा घटत्वादिकमपि ज्ञानस्यैव धर्मः, घटपटादिज्ञानानां मिथो वैलक्षण्यानुभवस्यान्यथानुपपत्तेः । तथा च ज्ञानस्य घटादिविषयैरत्यन्ताभेदापत्त्या तार्किकाणां बौद्धस्वीकृतसाकारवादापत्तिः' इत्यारभ्य प्रवृत्तेन 'तथा च ज्ञानगतस्य वैलक्षण्यस्य साकारवादिबौद्धस्वीकृतस्य कः प्रसङ्ग इति चेत् तर्हि वेदान्तिभिरेव जितम् । तार्किकस्वीकृतस्य विषयतागतस्यापि वैलक्षण्यस्य विशेष्यतात्वादेः कः प्रसङ्गः' इत्यन्तेन ग्रन्थेन **लघुचन्द्रिकायां** विस्तरेणोपपादितत्वात् ।

तस्मात् विषयतावैलक्षण्यस्य ज्ञानवैलक्षण्यकल्पकत्वे साकारवादिनिराकरणानुपपत्त्या विषयवैलक्षण्यस्यैव तत्प्रयोजकत्वावश्यकतया सन् घटः घटः सन् इति प्रतीत्योर्वैलक्षण्याय तादात्म्यद्वयमवश्यमभ्युपगन्तव्यमकामेनापीति नाश्रयासिद्ध्यवकाशः ।

न च विशिष्टकेवलयोर्भेदस्वीकारे विशिष्टसत्ता न सत्ता इति प्रयोगापत्तिरिति वाच्यम् । समानविभक्तिकप्रतियोग्यनुयोगिवाचकपदसमभिव्याहृतनञः अभेदविरोधिभेदबोधकत्वात् असमानविभक्तिकप्रतियोग्यनुयोगिवाचकपदसमभिव्याहृतनञः प्रतियोगिविरोधित्वविशिष्टात्यन्ताभावबोधकत्वाच्च विशिष्टसत्ता न सत्तेति न प्रयोगः, तत्राभेदविरोधिभेदाभावात् । न च वृक्षे न कपिसंयोगः

इति ज्ञानस्य प्रमात्वानुपपत्तिः तत्राभावे प्रतियोगिविरोधाभावादिति वाच्यम्। तत्राप्येकावच्छेदेनैकाधिकरणावृत्तित्वरूप विरोधसत्त्वात्। न चैवं नेह नानेति वाक्यजन्यबोधस्य प्रमात्वानुपपत्तिः अभावे प्रतियोगिविरोधाभावादिति वाच्यम्। तत्राप्यभावस्य व्यावहारिकत्वपक्षे विरोधस्यावश्यकत्वात्। अन्यथा स्वाप्नगज-तदभाववद्विरोधस्य दत्तजलाञ्जलित्वप्रसङ्गात्। यद्वा, समानसत्ताकभावाभावयोरयं नियमः। प्रकृते त्वभावस्य पारमार्थिकतया तादृशनियमानङ्गीकारेण दोषाभावात्।

यत्तु भेदाभेदयोर्विरोधात् विशिष्टकेवलयोर्भेदाभेदाङ्गीकारस्यायुक्तत्वमिति।

तन्न। तद्घटः तद्घटवानिति प्रतीतेः प्रमात्ववारणाय विशिष्टधीमात्रे विशेष्ये विशेषणभेदसमानाधिकरणः संबन्धो भासते इति कल्प्यते। एवञ्च तद्घटे तस्य संयोगसत्त्वेऽपि तस्य तद्भेदसामानाधिकरण्याभावात् न तद्बुद्धेः प्रमात्वम्। तथा च सत्ता विशिष्टसत्ता इत्यभेदसंसर्गकप्रत्ययेऽपि विशेषण-भेदसमानाधिकरणाभेदस्यैव संसर्गतावश्यकत्वात् विशिष्टकेवलयोर्भेदाभेद-सिद्धिः।

---

**टि. यद्वा समानसत्ताकेत्यादि।** यत्र वाक्ये नञा प्रतियोगिसमसत्ताकाभावः बोध्यते तत्रैव प्रतियोगिविरोधः संसर्गतावच्छेदकतया भासते। नेह नानेति श्रुतिबोध्यस्तु द्वैताभावः पारमार्थिकः न प्रतियोगिप्रपञ्चसमसत्ताक इति तत्र प्रतियोगिविरोधः संसर्गतावच्छेदकतया न भासते इति भावः।

स्वसमानसत्ताकप्रतियोग्यधिकरणवृत्तित्वसंबन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्त्वविशिष्टस्वरूपस्यैव नञ्समभिव्याहारस्थले संसर्गतया भानोपगमेन नेह नानेति वाक्यजन्यबोधे प्रतीयमानस्य द्वैताभावस्य पारमार्थिकत्वाङ्गीकारेण तत्प्रतियोगिनः स्वसमानसत्ताकत्वविरहेण स्वसमानसत्ताकप्रतियोग्यधिकरणवृत्तित्वस्य व्यधिकरणसंबन्धतया तत्संबन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्त्वविशिष्टस्वरूपसंबन्धस्याबाधितत्वेन नेहेति वाक्यजन्यबोधस्य भ्रमत्वापत्तिर्नेति **श्रीलक्ष्मीनृसिंहशास्त्रिपादाः।**

यत्तु विशिष्टकेवलयोर्भेदे केवलघटे तद्व्यक्तित्वविशिष्टघटभेदसत्त्वेन विशेषणभेदस्य संसर्गतावच्छेदकत्वस्वीकारेऽपि तद्घटस्तद्घटवानिति बुद्धेः प्रमात्ववारणं न संभवतीति विशेषणनिष्ठप्रतियोगितानिरूपितत्वविशिष्टानुयोगिताया विशिष्टबुद्धिनियामकत्वाङ्गीकारेणैवोक्तबुद्धेः प्रमात्वमवश्यं वारणीयम् । विशेषणभेदस्य संबन्धतावच्छेदकत्वे घटाभावो घटाभाववानिति बुद्धेः प्रमात्वानुपपत्तिश्च, घटाभावे तद्भेदविरहादिति ।

तन्न । विशेष्यतावच्छेदकावच्छिन्नानुयोगिताकविशेषणतावच्छेदकावच्छिन्नप्रतियोगिताकविशेषणभेदाधिकरणवृत्तित्वविशिष्टाभेदस्यैव विशिष्टबुद्धिनियामकत्वात् तद्घटत्वावच्छिन्ने तद्घटत्वावच्छिन्नभेदाभावेन निरुक्तबुद्धेः प्रमात्वापत्तेरसंभवात् । मामहं जानामीत्यादौ परसमवेतक्रियाजन्यफलशालित्वरूपकर्मत्वनिर्वाहाय अहमर्थे रूपान्तरेण भेदोऽवश्यं वाच्यः, तद्वत् घटाभावस्य विशेष्यस्य सुबर्थैकत्वादिविशेषितरूपेण विशेषणस्य घटविरोध्यभावत्वेन रूपेण च भानाङ्गीकारेण घटाभावो घटाभाववानिति बुद्धेः प्रमात्वस्याव्याहतत्वात् ।

यत्तु कर्मत्वशरीरे आत्यन्तिकभेदस्यैव घटकत्वम् । अन्यथा मामहं जानामीतिवत् मामहं गच्छामीति प्रयोगापत्तेः । घटाभावस्तद्वानित्यादौ प्रक्रान्तवाचितच्छब्दस्यैकत्वविशिष्टघटाभावपरामर्शकत्वसंभवेन तादृशाभावस्यैव विशेषणत्वात् विशेषणभेदस्य संसर्गतावच्छेदकत्वं न संभवति । न च प्रक्रान्तत्वं समभिव्याहृतपदोपस्थाप्यत्वम् तेन प्रत्ययान्तोपस्थाप्यैकत्वविशिष्टघटाभावस्य न तच्छब्देन परामर्शसंभव इति वाच्यम् । सुन्दरो देवदत्तः तमानयेत्यादौ सौन्दर्यविशिष्टदेवदत्तस्य तच्छब्देन परामर्शदर्शनेन समभिव्याहृतशब्दजन्यज्ञानविषयत्वस्यैव प्रक्रान्ततारूपत्वादिति ।

तन्न । कर्मत्वघटकभेदस्यात्यन्तिकत्वे मामहं जानामि चैत्रः स्वमलंकरोति इत्यादौ कर्मत्वानुपपत्त्या भेदमात्रस्य कर्मत्वशरीरे निवेशनीयत्वात् । मामहं गच्छामीति प्रयोगवारणन्तु गम्यादिसमभिव्याहारज्ञानस्य स्वकर्मकगमनादिशाब्दबोधे हेतुत्वाकल्पनात् । अन्यथा ग्रामं गच्छतीतिवत् ग्रामं स्पन्दते

इति प्रयोगापत्तेः। समभिव्याहृतपदजन्यज्ञानविषयत्वस्य प्रक्रान्ततापदार्थत्वेऽपि सर्वत्रैकरूप्यस्य वक्तुमशक्यतया घटाभावस्तद्वानित्यादौ वाक्योपस्थाप्यैकत्वविशिष्टघटाभावस्य परामर्शासंभवेन यश्चित्रगुस्तमानयेत्यादाविव तच्छब्देन केवलप्रातिपदिकार्थमात्रस्य परामर्शसंभवेनानुपपत्तेरभावात्।

यत्तु विशिष्टकेवलयोर्भेदाभेदाङ्गीकारे 'नैकस्मिन्नसंभवात्' इति सूत्रविरोधापत्त्या तयोर्भेदासंभवेनाश्रयासिद्धिरित्युक्तम्।

तन्न। तदधिकरणे हि समसत्ताकभावाभावयोर्विरोधः प्रतिपादितः। विशिष्टकेवलयोस्तु भेदस्य प्रातीतिकत्वेन अभेदस्य च व्यावहारिकत्वेन विरोधाभावात्।

किञ्च, ज्ञातो घट इति प्रतीत्या ज्ञानप्रतियोगिकविषयतारूपसंबन्धस्य घटादौ सिद्ध्या नाश्रयासिद्धिः। तथा हि—सत्तादात्म्यं हि चिद्रूपज्ञानस्य विषयतारूपं तादात्म्यम्। अत एव घटादिभेदेन तादात्म्यानन्त्यं प्रामाणिकम्। कपालनिष्ठविषयतारूपतादात्म्येनावच्छिन्नस्य कपालेघटवानितिज्ञानीयघटादिनिष्ठविषयतारूपतादात्म्यस्य तन्त्वादिनिष्ठविषयतारूपसत्तादात्म्यावच्छिन्नेन पटादिनिष्ठविषयतारूपसत्तादात्म्येनाभेदासंभवात्। न हि तार्किकादिभिरपि तत्तद्विषयतावच्छिन्नविषयतानामैक्यमुच्यते इति नाश्रयासिद्धिः।

---

**टि. प्रयोगापत्तेरिति।** प्राचीननैयायिकमते धातोर्व्यापारमात्रवाचित्वात् द्वितीयायाः फलवाचित्वात् ग्रामं गच्छतीत्यत्रेव ग्रामं स्पन्दते इत्यत्रापि ग्रामवृत्तिसंयोगजनकव्यापारबोधसंभवादिति भावः। तत्रेवात्रापि द्वितीयान्तास्मत्पदगम्यादिसमभिव्याहारस्याकांक्षात्वास्वीकार इति हृदयम्। **घटाभावस्तद्वानित्यादाविति।** घटाभावस्य एकत्वस्य च प्रकृतिप्रत्ययाभ्यां स्वातन्त्र्येणैव भानात् खलेकपोतन्यायेनैव शाब्दबोधस्वीकारात् एकत्वविशिष्टस्याप्रक्रान्तत्वेन तत्पदेन तत्परामर्शो न संभवति। सुन्दरो देवदत्तः तमानयेत्यादौ तु भिन्नाद्वाक्यात् सौन्दर्यविशिष्टदेवदत्तज्ञानं जायते इति तत्पदेन विशिष्टदेवदत्तस्य परामर्श इति बोध्यम्। तत्रापि तत्पदेन देवदत्तव्यक्तेरेव परामर्श इति **श्रीत्यागराजाध्वरीन्द्राः।**

यत्तु—वृत्तिज्ञानीयसंबन्धानां विषयनिष्ठानां विशेष्यतादिरूपत्वस्यावश्यं वाच्यतया तैरेव विषयताव्यवहारनिर्वाहात् उक्तसत्तादात्म्यानां विषयतारूपत्वकल्पने प्रमाणाभावः। न च सुखादौ साक्षिभास्ये वृत्तिविषयताविरहेण तत्र विषयताव्यवहारनिर्वाहाय सत्तादात्म्यस्य तत्कल्पनमावश्यकमिति वाच्यम्। अवच्छेदकभेदभिन्नानामनन्तानां सत्तादात्म्यानां तेषां विषयतात्वस्य च कल्पनापेक्षया सुखादावपि वृत्तिकल्पनस्यैव युक्तत्वात्। अन्यथा स्मरणानुपपत्तेः। वृत्तिनाशस्यैव संस्कारत्वात्। अनुमित्यादिवृत्तिनाशस्य सुखादिविषयकत्वेन स्मृतिहेतुतायाः कल्प्तत्वात्। सुखाद्यवच्छिन्नचिन्नाशस्य तत्संस्कारत्वतद्विषयकत्वतत्स्मृतिहेतुत्वादीनां कल्पने गौरवात्। जडत्वनिरुक्तौ सुखादिस्मृतिनिर्वाहार्थं वृत्त्यावश्यकताया भवद्भिरेव प्रतिपादितत्वाच्चेति।

तन्न। अवच्छेद्यावच्छेदकभावापन्नचित्तादात्म्यरूपविषयतयैव विषयताव्यवहारनिर्वाहे साकारवादापत्तिभिया अखण्डविशेष्यतात्वादीनां विषयताव्यवहारप्रयोजकत्वस्यायुक्तत्वात्, इदं रजतं जानामि रजतमिदं जानामि इति परस्पराध्यासानुभवादीनामेव चित्तादात्म्यविषयतायां प्रमाणत्वाच्च। तथा हि—'एकस्यां सर्वदृश्यतादात्म्यापन्नचिद्व्यक्तौ शुक्त्यादितादात्म्यावच्छेदेन रजतादितादात्म्यं पटादितादात्म्यावच्छेदेन तदभावश्च वर्तते, वृक्षे अग्रमूलावच्छेदेन संयोगतदभाववत्। तत्र अवच्छेदकीभूतचित्तादात्म्यं विशेष्यता, अवच्छेद्यचित्तादात्म्यं प्रकारता। तत्र विषयतानिष्ठावच्छेदकतानिरूपकत्वे सति तादृशनिरूपकताश्रयविषयतावच्छिन्नत्वं सांसर्गिकविषयतात्वम्। तादृशनिरूपकतावच्छेदकत्वे सति उक्तनिरूपकत्वं प्रकारतात्वम्' इत्यादिलघुचन्द्रिकोक्तप्रकारेण पूर्वोक्तानुभवस्यैव उक्ततादात्म्यस्य विषयतात्वे प्रमाणत्वात्। स्मरणान्यथानुपपत्त्या सुखादौ वृत्तिस्वीकारे तस्या अप्येवं तस्या अप्येवमित्यनवस्थापातात्। स्वस्य स्वविषयत्वाङ्गीकारेण सुखावच्छिन्नचिन्नाशादेव स्मरणोपपत्तावतिरिक्तवृत्त्यङ्गीकारस्यानुचितत्वात्। सुखादौ वृत्तिस्वीकारस्य प्रौढिवादमात्र-

त्वात् । वृत्तेरस्वीकारेऽपि विषयतायास्तादात्म्यरूपत्वस्य समर्थितत्वाच्च ।

यद्वा, तादात्म्यं विशेषणविशेष्याभ्यामतिरिक्तं पदार्थान्तरमेव नैयायिकमतसिद्धसमवायवत् ।

यत्तु तादृशतादात्म्यस्य प्रतियोग्यनुयोगिभ्यां संबन्धान्तरकल्पने तस्यापि संबन्धान्तरमेवं तस्यापीत्यनवस्थाप्रसङ्गः । संबन्धद्वये अन्योन्याश्रयः । त्रये चक्रकम् । स्वयमेव संबन्ध इत्यभ्युपगमे चात्माश्रय इति ।

तन्न । तादात्म्यमेकं संबन्धिभ्यामतिरिक्तं तथैव प्रतीयमानत्वात् कल्प्यते । तस्य चासंबद्धस्य संबन्धत्वानुपपत्त्या संबन्धान्तरोपगमे अन्योन्याश्रयादिभिया गौरवाच्च स्वत एव घटादिसंबन्धत्वमुपेयते, स्वतोऽव्यावृत्तविशेषवत् समवायवच्च । तत्र चात्माश्रयदोषो गत्यन्तराभावाल्लाघवाच्च सह्यते । अत एव **बौद्धाधिकारे शिरोमणिना** घटाभावस्य स्ववृत्तित्वस्वीकारे आत्माश्रयेऽपि लाघवमुक्तम् , इति तस्यातिरिक्तत्वे विरोधाभावात् ।

यत्तु तादात्म्यं पदार्थान्तरमभ्युपगम्य तस्य स्वतस्संबन्धत्वे आत्माश्रयस्येष्टत्वापेक्षया विशेषणस्वरूपस्यैव तथाङ्गीकारो युक्तः । विशेषणविशेष्याभ्यामतिरिक्तस्य संबन्धस्य 'समवायाभ्युपगमाच्च साम्यादनवस्थितेः' इत्यत्र सूत्रकारैरेव निराकृतत्वादिति ।

तदपि न । तादात्म्यरूपसंबन्धस्य विशेषणस्वरूपत्वे ज्ञानविषयतारूप-

---

**टि. विषयतायास्तादात्म्यरूपत्वेति ।** 'कामस्संकल्पः........धीर्भीरित्येतत्सर्वं मन एव' इति श्रुत्या घटाद्याकारधियः मनोवृत्तित्वोक्त्या घटादीनां वृत्तिविषयत्ववत् 'तस्य भासा सर्वमिदं विभाति' इति श्रुत्या चैतन्यभासा प्रकाश्यत्वोक्त्या चिद्रूपज्ञानविषयत्वमपि स्वीकरणीयमेव । एवं ज्ञाधातोः चिद्रूपज्ञाने एव मुख्यत्वात् जडायां वृत्तौ चिद्वत् प्रकाशत्वाभावेन गौणत्वात् संभवति मुख्यग्रहणे गौणग्रहणस्यान्याय्यत्वात् ज्ञातो घटः इति प्रतीतिः चिद्विषयत्वमेव तादात्म्यपर्यवसितं विषयीकरोतीति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः** ।

**स्ववृत्तित्वस्वीकारे इति ।** साधकतयेति शेषः ।

संबन्धस्यापि विशेषणस्वरूपतापत्तेः । न चेष्टापत्तिः । सर्वस्य ज्ञानस्य विषयतारूपसंबन्धस्य ज्ञानरूपत्वे ज्ञानाधिकरणकालस्यापि तत्संबन्धिनो ज्ञानविषयतापत्तिः, ज्ञाननिष्ठतत्संबन्धस्यापि तत्स्वरूपानतिरिक्तत्वात् । एवं स्वाभावेन समं प्रतियोग्यनुयोगिभावरूपस्य ज्ञानसंबन्धस्यापि ज्ञानस्वरूपानतिरिक्तत्वे घटादिज्ञानस्य घटादिविषयकत्ववत् स्वाभावविषयकत्वापत्तेः । कालादौ ज्ञानसंबन्धस्यातिरिक्तत्वे च विनिगमनाविरहेण विषयनिष्ठतत्संबन्धस्यापि अतिरिक्तत्वसिद्ध्या पूर्वोक्ततादात्म्यस्याप्यतिरिक्तत्वसिद्धेर्निष्प्रत्यूहत्वाच्च । किञ्च, उक्तसंबन्धस्य विशेषणरूपत्वं विशेष्यरूपत्वं वेत्यत्र विनिगमनाविरहादुभयरूपत्वे गौरवाच्चातिरिक्तत्वसिद्धिः । अन्यथा विशेषसमवाययोरपि तदाश्रयरूपतापत्त्या अतिरिक्तत्वसिद्धिर्न स्यात् ।

आगन्तुकदोषाजन्यचिद्भेदवत्त्वं, चित्त्वग्रहप्रतिबन्धकतावच्छेदकविषयताश्रयभेदवत्त्वं, प्रतियोग्यवृत्तिचिद्भेदवत्त्वं वा चिद्भिन्नत्वमित्यनेन विवक्षितम् । तेन ब्रह्म चिद्भिन्नमिति प्रतीतिसिद्धप्रातिभासिकचिद्भेदमादाय न दोषः ।

एतेन—विशिष्टचिद्भेदस्य शुद्धचित्साधारण्यात् चित्त्वोपलक्षितप्रतियोगिकभेदवत्त्वमेव चिद्भिन्नत्वम् । तच्च स्वपर्याप्त्यवच्छेदकताकत्वस्वावृत्तित्वोभयसंबन्धेन चित्त्वविशिष्टा या प्रतियोगिता तन्निरूपकत्वम् । तथा च विशिष्टप्रतियोगिकभेदोपलक्षितप्रतियोगिकभेदयोर्वैलक्षण्यनिर्वाहाय विशिष्टभेदीय-प्रतियोगिताया विशेषणविशेष्योभयवृत्तित्वस्वीकारादुक्तरीत्या निवेशेन तद्व्या-

---

टि. **प्रतियोग्यवृत्तिचिद्भेदवत्त्वमिति** । चिद्भिन्ने प्रातिभासिके चिद्भेदे प्रतियोगिवृत्तित्वसत्त्वेऽपि प्रतियोगिवृत्तित्वगगनोभयाभाववत्त्वं वर्तते इति तद्दोषतादवस्थ्यम् । प्रतियोगिवृत्तित्वत्वातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकाभाववत्त्वमेव प्रतियोग्यवृत्तित्वमित्युक्तौ अतिरिक्तधर्मावच्छिन्नप्रतियोगितायामेव अतिरिक्तधर्मावच्छिन्नत्वगगनोभयाभाववत्त्वरूपं तद्वर्तते इति तदव्यावृत्तिः । व्यासज्यवृत्तिधर्मानवच्छिन्नत्वनिवेशेऽपीयमेवानवस्था । अतः प्रतियोगिवृत्तित्वं नास्तीति प्रतीतिसाक्षिकानुयोगिताविशेषेण संबन्धेन प्रतियोगिवृत्तितात्वविशिष्टविशिष्टः योऽभावः तद्वत्त्वमेव चिद्भेदे निवेशनीयम् । स्पष्टा चेयं रीतिः **गदाधरीये सिद्धान्तलक्षणप्रकरणे** इति **श्रीपरीक्षिन्महाराजाः** ।

वृत्तावपि प्रातिभासिकचिद्भेदाव्यावृत्त्या ब्रह्मणि बाधतादवस्थ्यमेव। स्वसमानसत्ताकचिद्भेदनिवेशेऽपि अभावस्याधिकरणस्वरूपत्वेन पारमार्थिके ब्रह्मनिष्ठे घटादिभेदे चित्त्वावच्छिन्नप्रतियोगिताकत्वस्य, घटत्वावच्छिन्नप्रतियोगितायां वा चित्त्वावच्छिन्नत्वस्य, घटत्वनिष्ठावच्छेदकतायां वा चित्त्वपर्याप्तत्वस्य, भ्रमसंभवेन तत्तद्भ्रमविषयीभूतभेदानामव्यावृत्तेः। अभावस्याधिकरणस्वरूपत्वाभावपक्षेऽपि 'आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति तद्धर्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते' इति पञ्चपादिकावचनानुरोधेन आनन्दादीनां शुद्धस्वरूपत्वस्य तद्धर्मत्वस्य चाङ्गीकारेण तादृशधर्मे स्वसमानसत्ताके चित्त्वावच्छिन्नप्रतियोगिताकभेदत्वादिभ्रममादाय दोषसंभवात्, स्वसमानसत्ताकभेदवत्त्वनिवेशेनैव ब्रह्मव्यावृत्त्या भेदे चित्प्रतियोगिकत्वनिवेशवैयर्थ्यात्, सत्तात्रैविध्यस्य द्वैतमतासिद्धत्वेन संदिग्धासिद्धेश्च इत्युक्तं परास्तम्।

चित्त्वत्वपर्याप्तानुयोगितावच्छेदकताकपर्याप्तिकावच्छेदकताकचिन्निष्ठ - प्रतियोगिताकागन्तुकदोषाजन्यभेदवत्त्वस्य चिद्भिन्नत्वमित्यनेन विवक्षणीयतया उक्तचिद्भेदस्यागन्तुकदोषजन्यत्वेन दोषानवकाशात्॥

**इति महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिविरचिते**
**ब्रह्मानन्दीयभावप्रकाशे पक्षतावच्छेदकविचारः समाप्तः।**

---

टि. चित्त्वत्वेति। चित्त्वत्वपर्याप्ता या अनुयोगितावच्छेदकता तत्का या पर्याप्तिः तत्का या अवच्छेदकता तत्का या चिन्निष्ठप्रतियोगिता तन्निरूपकेत्यर्थः।

**इति पक्षतावच्छेदकविचारः समाप्तः**

## अथ प्रथममिथ्यात्वविचारः

प्रपञ्चः स्वरूपेण सत्यः अलीकसंसर्गप्रतियोगित्वोपहितरूपेणालीकः इति सदसद्रूपत्ववादिन्यायपेटिकाकारवाचस्पत्युक्तपक्षनिरासाय सदसद्विलक्षणत्वं मिथ्यात्वं साध्यम्।

तत्र सत्त्वं स्वप्रकारकधीविशेष्यताव्यापकीभूताभावाप्रतियोगित्वम्। तद्विलक्षणत्वञ्चोक्ताभावप्रतियोगित्वम्। असत्त्वं च क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वम्। तद्विलक्षणत्वञ्च क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वं सत्तादात्म्यपर्यवसितम्।

ननु सत्त्वेन प्रतीयमानत्वमित्यनेन कथं सत्तादात्म्यलाभ इति चेत्

इत्थम्-सत्त्वेन प्रतीयमानत्वमित्यत्र सत्त्वेन प्रतीतिः घटस्सन्नित्याकारकवृत्त्यवच्छिन्ना चित्। तद्विषयत्वञ्च सद्रूपचित्तादात्म्यम्। तादात्म्यातिरिक्तचिद्विषयतायां मानाभावादिति।

तथा च स्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्वसत्तादात्म्योभयं साध्यम्। तस्य चायमनुगमः।

---

अथ प्रथममिथ्यात्वविचारः

टि. आद्यं स्यात् पञ्चपाद्युक्तं ततो विवरणोदिते।
चित्सुखीयं चतुर्थं स्यादन्त्यमानन्दबोधजम्॥
इति पञ्चविधं प्रोक्तं मिथ्यात्वं ध्वान्तनाशनम्।

इति **श्रीब्रह्मानन्दस्वामिनां** सूक्तिः। इदानीं पञ्चपादिकाचार्योक्तमनिर्वचनीयत्वं मिथ्यात्वं परिष्कर्तुमाह **प्रपञ्च** इत्यादिना।

**उभयं साध्यमिति**। एवमुक्तिः भट्टत्र्यम्बकशास्त्रिणां मार्गानुसारेण न्यायभास्करोक्तसाध्यस्याभ्युपगमवादरूपा बोध्या। वस्तुतस्तु स्वप्रकारकधीविशेष्यताव्यापकाभावाप्रतियोगित्वरूपसत्त्वाभावस्योक्तमिथ्यात्वघटकत्वे तस्य स्वप्रकारकेत्यादिद्वितीयमिथ्यात्वे पर्यवसानेन पौनरुक्त्यापत्तिः। अत एव सद्भेदासद्भेदोभयं साध्यमिति पक्षपरिष्कारे विषय-

स्वप्रकारकधीविशेष्यताविशिष्टत्वतादात्म्योभयसंबन्धेन किञ्चिद्विशिष्टत्वं सदसद्विलक्षणत्वम्। विशेष्यतावैशिष्ट्यञ्च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन। स्वाधिकरणता स्वरूपसंबन्धावच्छिन्ना। भेदप्रतियोगितावच्छेदकता सत्तादात्म्यसमानाधिकरणस्वनिष्ठप्रतियोगिताकाभाववत्त्वसंबन्धेन। रूप्यादीनां स्वपदेनोपादानात् न दृष्टान्तपक्षयोरसिद्धिः न वा अननुगमः। द्रव्यत्वोपहितघटत्वोपहितयोरिव निरुक्तपक्षतावच्छेदकावच्छिन्ने घटत्वावच्छिन्नभेदोऽस्तीति स्वस्मिन्नपि स्वतादात्म्यं संभवति। एवञ्च मिलितसिद्धेरुद्देश्यत्वात् सद्विलक्षणत्वमात्रसिद्ध्या असद्विलक्षणत्वमात्रसिद्ध्या वा न सिद्धसाधनम्, न वा अर्थान्तरम्।

एतेन—साध्यभूतमपि मिथ्यात्वं न तावत् सदसद्विलक्षणत्वम्, सत्त्वासत्त्वयोः परस्परविरहरूपत्वेन तन्निषेधयोः रजतभिन्नत्वरजतत्वयोर्निषेधवत् परस्परव्याघातेनैकानुमितिविधेयत्वासंभवात्, इत्यारभ्य अत्यन्ताभेदे तादात्म्यसंबन्धानङ्गीकारात् इत्यन्तो ग्रन्थः परास्तः।

यद्वा, आधेयत्वप्रतियोगित्वोभयसंबन्धेन अभावविशिष्टत्वमेव सदस-

---

ताविशेषरूपसत्त्वावच्छिन्नभेद एव निविष्टो **लघुचन्द्रिकायाम्**। ईदृशसत्त्वाभावः त्रिकालाबाध्यविलक्षणत्वपदेन विवक्षितः इति च न ब्रह्मानन्दस्वामिभिरुक्तमिति बोध्यम्।

त्रिकालाबाध्यविलक्षणत्वे सति सत्त्वेन प्रतीयमानत्वमिति ग्रन्थस्य लघुचन्द्रिकाव्याख्या 'कालाद्यनवच्छिन्नं यदबाध्यत्वं तदभावः सत्तादात्म्यश्चेत्युभयवत्त्वं साध्यम्' इति। द्वितीयमिथ्यात्वविचारावसरेऽपि त्रिकालाबाध्यत्वमित्यस्य कालानवच्छिन्नं बाधकज्ञानाविषयत्वम् इति व्याख्या दृश्यते। इत्थञ्च लघुचन्द्रिकानुसारेण निरुक्तसत्त्वाभावस्यैवोक्तमिथ्यात्वघटकतया तत्र किञ्चिदपि दूषणमनुक्त्वा स्वप्रकारकेत्यादि स्वयं सद्विलक्षणत्वं निरुच्य तदुपरि दोषोद्भावनं विदुषां परिहास्यमेवेति **श्रीत्यागराजाध्वरीन्द्राः**।

**टि. आधेयत्वेति**। स्वप्रकारकधीविशेष्यताविशिष्टत्वसंबन्धेन शुक्तिरजतस्य तदभाववृत्तित्वम्। तादृशसंबन्धघटकस्वं शुक्तिरजतम्। आधेयतावच्छेदकसंबन्धप्रविष्टस्वपदेनाधेयस्य ग्राह्यत्वात्। अन्यत् सर्वं पूर्ववदिति बोध्यम्।

द्विलक्षणत्वम् । आधेयता च स्वप्रकारकधीविशेष्यताविशिष्टत्वसंबन्धावच्छिन्ना । विशेष्यतावैशिष्ट्यञ्च स्वसमानाधिकरणेत्यादिपूर्वोक्तसंबन्धेन । स्वाधिकरणता भेदप्रतियोगिता च स्वरूपसंबन्धावच्छिन्ना । तथा च नाननुगमः ।

यत्तु—एवमपि जगतो गगनादिवदवृत्तित्वमादाय साध्यपर्यवसानसंभवेन मिथ्यात्वासिद्ध्या अर्थान्तरस्य दुर्वारता । न च वृत्तिमत्त्वस्य पक्षतावच्छेदककोटौ निवेशेनार्थान्तरवारणं संभवतीति वाच्यम् । तथा सति वृत्तिमत्त्वविशेषणेनैवासद्ब्रह्मणोर्बाधवारणसंभवेन पक्षांशे सत्तादात्म्यस्य चिद्भिन्नत्वस्य च व्यर्थत्वापत्तेः । न च—स्वाधिकरणताव्यापकाभावप्रतियोगित्वसत्तादात्म्योभयस्य साध्यत्वाङ्गीकारान्नावृत्तित्वमादायार्थान्तरम्, अवृत्तेरधिकरणाप्रसिद्धेः—इति वाच्यम् । असत्त्वमादायार्थान्तरवारणायोपात्तस्य साध्यकोटिप्रविष्टसत्तादात्म्यवत्त्वस्य व्यर्थतापत्तेः, असतोऽधिकरणाप्रसिद्धेरिति ।

तन्न । आकाशवत् घटादीनामवृत्तित्वस्य इह घटः इति प्रतीत्या बाधितत्वेनार्थान्तराप्रसक्तेः तदर्थं विशेषणान्तरमुपादाय दूषणकथनस्यानुक्तोपालम्भनत्वात् । न च मिथ्यात्वानुमितेः सन् घटः इत्यादिप्रत्यक्षबाधितत्वम् । प्रत्यक्षानुमित्योर्भिन्नविषयकत्वेन विरोधाभावस्य अद्वैतसिद्ध्यादिषु स्पष्टत्वात् । सर्वस्यापि कार्यस्य कारणवृत्तित्वनियमेन 'यतो वा इमानि भूतानि जायन्ते' 'आत्मन आकाशस्संभूतः' इत्यादिश्रुत्या चाकाशस्योत्पत्तिमत्तया आधेयत्वसंभवेन 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुतेः मूर्तमात्रसंयोगित्वपरतया आभूतसंप्लवन्यायेन चिरकालस्थायित्वपरतया चोपपत्तेः दृष्टान्तेऽप्यवृत्तित्वासिद्ध्या अर्थान्तरासंभवात् ।

एतेन — स्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्वमात्रस्य साध्यत्वेऽपि नासत्त्वमादायार्थान्तरप्रसक्तिः । पक्षतावच्छेदककोटौ सत्तादात्म्यस्य प्रविष्टत्वेन तादृशसत्तादात्म्यविशिष्टे स्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्वस्यानुमित्याऽवगाहनेनासत्त्वपर्यवसानासंभवादिति वस्तुतस्तु इत्यादिकल्पोऽपि निरस्तः ।

सदसद्वादिमते पक्षतावच्छेदककोटौ सत्तादात्म्यस्य सदसत्साधारणस्य निवेशोऽपि साध्यकोटौ असद्व्यावृत्तसत्तादात्म्यनिवेशस्यासत्त्वमादायार्थान्तरवारकतयैव सार्थक्यात् ।

यद्वा, पृथिवीत्वजलत्वाद्यवच्छिन्नधर्मिकसमूहालम्बनसंशयस्य तद्व्यक्तित्वेन पक्षतावच्छेदकताकल्पे असत्त्वमादायार्थान्तरवारणेन सत्तादात्म्यं सार्थकम् ।

यत्तु—सत्तादात्म्यघटितपक्षतावच्छेदकावच्छिन्ने कस्य साध्यता। केवलस्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्वस्येति चेत्, तथा सति असति सत्त्वेन बाधाप्रसक्त्या पक्षतावच्छेदककोटौ सत्तादात्म्यविशेषणस्य बाधवारकतया सार्थक्यप्रतिपादनमनुचितम्। किन्तु केवलोक्ताभावप्रतियोगित्वस्य साध्यत्वे असत्त्वमादायार्थान्तरवारणाय पक्षकोटौ तन्निवेशनमित्येव वक्तुमुचितमिति ।

तन्न । सत्तादात्म्यघटितपक्षतावच्छेदकावच्छिन्ने ज्ञाननिवर्त्यत्वस्यैव साध्यतया विवक्षितत्वेन बाधवारकतयैव पक्षतावच्छेदककोटौ सत्तादात्म्यस्य सार्थक्यात् । विप्रतिपत्तेः पक्षतावच्छेदकत्व एव उक्तसाध्यस्य विवक्षिततया असत्त्वमादायार्थान्तरवारकतया साध्यकोटौ सत्तादात्म्यस्य सार्थक्यात् ।

सद्भेदासद्भेदोभयं वा साध्यम् । अत्र सद्भेदस्य न ज्ञानानिवर्त्यत्वरूपसत्त्वावच्छिन्नप्रतियोगिताकभेदत्वेन निवेशः। तथा सति असद्भेदस्य ज्ञाननिवर्त्यत्वेतरांशस्य वा वैयर्थ्यप्रसङ्गात् । ज्ञानोच्छेद्यत्वरूपज्ञाननिवर्त्यत्वस्य वक्ष्यमाणरीत्या सर्वसंमतस्यैकस्याभावेन तदभावस्यैकरूपत्वासंभवात् । ज्ञानानिवर्त्यरूपसद्भेदनिवेशे अस्मन्मते ब्रह्ममात्रविषयकतत्तद्धीविषयत्वस्य लघुत्वेनावच्छेदकत्वसंभवेन तत्समनियतस्य ज्ञानानिवर्त्यत्वस्य प्रतियोगितावच्छेदकत्वासंभवेन तदवच्छिन्नप्रतियोगिताकभेदाप्रसिद्धेश्च । नाप्युक्तधीविषयत्वावच्छिन्नप्रतियोगिताकभेदत्वेन । सिद्धसाधनापत्तेः । किन्तु सत्यं सर्वं वाच्यमित्याकारकस्य पराभ्युपगतस्य कस्यचित् ज्ञानस्य यद्विषयत्वं तद्व्यक्त्यवच्छिन्नप्रतियो-

साध्याप्रसिद्धिः, तादृशबोधीयविशेष्यतायाः विशेष्यभेदेन भिन्नतया घटादिनिष्ठतादृशबोधीयविषयतावच्छेदस्य पटादौ सिद्ध्या सिद्धसाधनञ्चेति वाच्यम् । ब्रह्मनिष्ठबोधीयमुख्यविशेष्यतायाः स्वरूपतोऽवच्छेदकत्वस्वीकारेण न साध्याप्रसिद्धिः । द्वैतवादिमते तादृशविषयतायाः स्वरूपतोऽवच्छेदकत्वानङ्गीकारेण सिद्धसाधनाभावश्च । अङ्गीकारेऽपि तादृशविषयतानिष्ठनिरवच्छिन्नावच्छेदकताकभेदकूटस्य साध्यत्वान्नोक्तसिद्धसाधनम् । पटादौ घटादिनिष्ठविषयतावच्छेदसत्त्वेऽपि पटनिष्ठतादृशविषयतावच्छेदाभावात् ।

न च सिद्धान्ते तादृशज्ञानीयविषयताया ऐक्येन तादृशभेदकूटाप्रसिद्धिरिति वाच्यम् । तादृशवाक्यजन्यानां बहूनां बोधानां संभवात् तत्तद्ज्ञानाविशेष्यत्वावच्छिन्नभेदकूटप्रसिद्धिसंभवात् । ऐक्येऽपि तादृशबोधीयमुख्यविशेष्यतात्वसमानाधिकरणानवच्छिन्नावच्छेदकताकभेदत्वव्यापकाधेयतानिरूपकताया एव साध्यत्वान्न सिद्धसाधनादिकम् । न च लक्षणाग्रहादिना तादृशवाक्यजन्यबोधविशेष्यत्वस्य प्रपञ्चे भवन्मतेऽपि संभवेन तादृशविशेष्यतानिष्ठनिरवच्छिन्नावच्छेदकताकभेदकूटसाधने बाधापत्तिरिति वाच्यम् । सत्यं सर्वं वाच्यमिति वाक्ये लक्षणाग्राहकाभावेन लक्षणया तादृशबोधासंभवात् । यदि कस्यचिदुक्तबोधे तात्पर्यं तदा शक्तिभ्रमादेव तादृशबोधः । यदि लक्षणयाऽपि तादृशबोधोऽङ्गीक्रियते तदा लक्षणाग्रहाजन्यत्वमुक्तबोधे निवेश्य बाधवारणं संभवत्येव । न च सत्यादिपदानां शुद्धे शक्त्यसंभवात् तद्बोधस्य लक्षणाग्रहजन्यत्वेन बाधो दुर्वार इति वाच्यम् । विशिष्टवाचकानां सत्यादिपदानां विशेषणांशपरित्यागेन विशेष्ये श्रीब्रह्मानन्दस्वामिभिः शक्तेरेव प्रतिपादनात् यत्र च शक्यतावच्छेदकभिन्नरूपेणोपस्थितिः तत्रैव लक्षणा । प्रकृते लक्ष्यस्वरूपमात्रोपस्थित्योक्तबोधस्य लक्षणाग्रहाजन्यत्वात् । न च सत्यं सर्वं वाच्यमिति सप्रकारकज्ञानीयविषयताया अप्युक्तरूपाक्रान्ततया तस्योपहितचिन्निष्ठत्वेनोपहितचिति बाधो दुर्वारः शुद्धस्य सप्रकारकज्ञानाविषयत्वादि-

वाच्यम् । सत्यंसर्वंवाच्यमितिज्ञानीयविशिष्टावृत्तिविशेष्यतानिष्ठानवच्छिन्नावच्छेदकताकभेदत्वव्यापकाधेयतानिरूपकतायाः विवक्षितत्वात् । सप्रकारकज्ञानीयविषयताया विशिष्टावृत्तित्वाभावात् । न च सत्यंसर्वंवाच्यमिति वाक्येन सति तात्पर्ये व्यावहारिकसत्यत्वोपलक्षितघटादिविषयकनिर्विकल्पकबोधस्य गन्धवती पृथिवी इति वाक्यात् सति तात्पर्ये गन्धोपलक्षितस्वरूपबोधस्येव संभवेन तादृशविषयताया घटादौ सत्त्वाद्बाध इति वाच्यम् । ब्रह्मान्यविषयकत्वनिष्प्रकारकत्वोभयाभाववत्त्वस्य तादृशवाक्यजन्यबोधे निवेशेन दोषाभावात् । न च सत्यं सर्वं वाच्यं इति वाक्यजन्यबोधीयविषयताव्यक्तेः भावरूपत्वात् ब्रह्मणश्च भावरूपधर्मानाधारत्वात् तद्भेदघटितलक्षणस्य ब्रह्मणि सत्त्वेऽपि यथा सत्यत्वोपपत्तिः तथा प्रपञ्चस्यापि सत्यत्वोपपत्त्या अर्थान्तरं दुर्वारमिति वाच्यम् । ब्रह्मणः भावरूपधर्मानधिकरणत्वेनैव भेदाधिकरणत्वस्याप्यभावेनार्थान्तराप्रसक्तेः ।

यद्वा **भामतीकारमते** शुद्धस्य वृत्तिविषयत्वाभावेऽपि **विवरणमते** शुद्धस्य वृत्तिविषयत्वाङ्गीकारेण तदनुसारेणोक्तलक्षणेऽनुपपत्त्यभावात् । न च–भावरूपधर्मानाश्रयत्वपक्षमवलम्ब्य लघुचन्द्रिकायां व्याख्यातत्वेनोक्तरीत्या निवेशे सन्दर्भविरोध इति वाच्यम् । पक्षद्वयेऽपि ब्रह्मण्यतिव्याप्तेर्वारितत्वात् । भावरूपधर्मानाश्रयत्वपक्षे तादृशविषयत्वाभावाधिकरणत्वाभावात् आश्रयत्वपक्षे निरुक्तविषयताविशेषरूपसत्यत्वस्य सत्त्वेन तदभावाभावादिति दोषवारणे कः सन्दर्भविरोधः ।

यद्वा, सद्भिन्नंसर्वमात्मभिन्नमित्याकारकज्ञानविषयत्वस्याभावः स्वमते ब्रह्मण्येव परमते प्रपञ्चेऽपीति तद्भेदघटितलक्षणे न कोऽपि दोषः । न च–तादृशवृत्तेर्विकल्परूपत्वे तद्विषयत्वाभावस्य प्रपञ्चेऽपि सत्त्वेन तदभावासंभवेन बाधः, तस्या धीरूपत्वे तद्विषयत्वाभावस्य तुच्छेऽपि सत्त्वेन तद्भेदासंभवादेवार्थान्तरवारणे असद्वैलक्षण्यांशवैयर्थ्यमिति-वाच्यम् । सद्भिन्नंसर्वमात्मभिन्न-

---

टि. **अर्थान्तराप्रसक्तेरिति** । निर्धर्मकत्वेनैवाभावरूपधर्मानधिकरणत्वाच्चेति मूलग्रन्थानुसारेण ब्रह्मण्यतिव्याप्तिः अर्थान्तरं वा नैव संभवतीति **श्रीविट्ठलमिश्राः** ।

मित्याकारकविकल्पध्यन्यतरविषयत्वाभावनिवेशेन बाधस्यासद्विलक्षणत्वविशेषण-वैयर्थ्यस्य चाभावात्। तुच्छस्य विकल्पविषयत्वेन असद्विलक्षणत्ववैयर्थ्याभावात्, प्रपञ्चस्योक्तधीविषयत्वेन तदभाववच्छेदघटितलक्षणे बाधाभावाच्च। न च सद्भिन्नं सर्वमात्मभिन्नमित्याकारकज्ञानविषयत्वाभाववच्छेदस्य तादृशविषयत्वपर्यवसितस्य भ्रममादाय प्रपञ्चेऽपि सत्त्वेन सिद्धसाधनमिति वाच्यम्। ज्ञाने प्रमात्मकत्व-निवेशेन तद्वारणसंभवात्। नचोभयसंमतं प्रमात्वं दुर्वचमिति वाच्यम्। विशेष्यावृत्तिधर्मप्रकारकत्वस्य स्वनिरूपितत्वस्वाश्रयावृत्तिनिष्ठत्वोभयसंबन्धेन विशेष्यताविशिष्टप्रकारत्वानिरूपकत्वरूपस्य साधारणस्य निर्वक्तुं शक्यतया दोषाभावात्।

सत्यंसर्वंवाच्यमितिवाक्यजन्यज्ञानस्य निरुक्तमुख्यविशेष्यतासंबन्धा-वच्छिन्नाभावस्य सद्वैलक्षण्यपदार्थत्वपक्षोऽपि समीचीन एव। तादृशबोधस्या-सार्वकालिकतया तदभावस्य प्रपञ्चे सत्त्वात् विषयतासंबन्धेन तादृशज्ञानाभावस्य कदाचित्सिद्ध्या सिद्धसाधनसंभवेऽपि निरवच्छिन्नविशेषणतासंबन्धेन तादृशा-भावस्यासिद्ध्या सिद्धसाधनासंभवात्। न च वृत्त्यनियामकसंबन्धस्याभावप्रतियोगि-तानवच्छेदकतया साध्याप्रसिद्धिरिति वाच्यम्। वृत्त्यनियामकसंबन्धस्याभावप्रति-

---

**विशेष्यावृत्तिधर्मप्रकारकत्वस्येति**। परमते अलीकमात्रविषयकस्य सद्भिन्नं सर्वमात्मभिन्नमितिज्ञानस्य निरुक्तप्रमात्वं वर्तते इति न साध्याप्रसिद्धिरिति भावः।

आगन्तुकदोषाप्रयोज्यत्वेन निरुक्तज्ञानविषयतानिष्ठप्रतियोगिताकाभाववच्छेदस्य सद्भि-न्नत्वमित्यनेन विवक्षितत्वात् नोक्तसिद्धसाधनम्। तादृशविषयतायाः सिद्धान्ते अविद्यारूपदो-षप्रयोज्यत्वेऽपि आगन्तुकदोषाप्रयोज्यत्वात् तथाविधविषयताप्रतियोगिकाभावः ब्रह्मण्यस्ति परमते च उक्तविषयत्वाभावः प्रपञ्चेऽप्यस्तीति तद्वच्छेदस्य पूर्वमसिद्धत्वात्। न च परमते प्रतियोग्यप्रसिद्धिरिति शङ्कनीयम्। तादृशाप्रयोज्यत्वेनोक्तविषयत्वाभावस्य व्यधिकरण-धर्मावच्छिन्नाभावस्य संभवादिति **श्रीत्यागराजाध्वरीन्द्राः**। **तादृशज्ञानाभावस्य कदाचित्सिद्ध्या सिद्धसाधनसंभवेऽपीति**। परमते सत्यंसर्वंवाच्यमितिबोधस्ये-श्वरीयस्य प्रपञ्चे तद्रीत्या सर्वदा सत्त्वेन सिद्धसाधनस्यैव न प्रसक्तिरिति **श्रीरामसुब्रह्म-ण्यशास्त्रिपादाः**।

योगितावच्छेदकताया राजपुरुषवादे भट्टाचार्यैः स्वीकृतत्वात् तदवच्छिन्नप्रतियोगिताकाभावप्रसिद्धेः । न च विषयतायाः विषयतात्वेन संबन्धतायाः प्रामाणिकत्वेऽपि विशेष्यतात्वादिना तस्या अप्रामाणिकतयोक्तसाध्याप्रसिद्धिरिति वाच्यम् । प्रकारतासंसर्गताभिन्नविषयताया एव विषयतात्वेन भानेन दोषाभावादिति ॥

इति महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिविरचिते
ब्रह्मानन्दीयभावप्रकाशे प्रथममिथ्यात्वविचारः समाप्तः ॥

---

**टि. राजपुरुषवादे भट्टाचार्यैः स्वीकृतत्वादिति** । 'वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वेऽपि' इति ग्रन्थेन **व्युत्पत्तिवादे राजपुरुषवादे** स पक्षः स्वीकृतः । **द्वितीयाविभक्त्यर्थविचारे** 'वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकत्वे नव्यमतेऽपि द्रव्यं गच्छति नाभावमित्यादौ गतिविरहः' इत्यादिना तत्पक्षस्यावश्यकताऽपि **भट्टाचार्यैः** निरूपितेति बोध्यम् ।

**भानेनेति** । पर्वतो वह्निमानित्यत्र वह्निप्रतियोगिकपर्वतानुयोगिकस्यैव संयोगस्य संयोगत्वेन संबन्धतया भानानुभवादिति भावः ॥

इति प्रथममिथ्यात्वविचारः समाप्तः

## अथ द्वितीयमिथ्यात्वविचारः

नेह नानेति श्रुत्यर्थे विवदमानं प्रति साध्यान्तरमुक्तं मूले प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं पारमार्थिकत्वेन वोक्तनिषेधप्रतियोगित्वमिति। प्रतिपन्नोपाधौ-स्वप्रकारकधीविशेष्ये सर्वत्र धर्मिणि त्रैकालिकस्य-सर्वदा विद्यमानस्य निषेधस्य-अत्यन्ताभावस्य प्रतियोगित्वमिति तदर्थः। येन संबन्धेन यद्रूपविशिष्टसंबन्धितया यत् ज्ञातं तत्संबन्धतद्रूपावच्छिन्नं तन्निष्ठोक्ताभावस्य प्रतियोगित्वं निवेश्यम्। अन्यथा संबन्धान्तररूपान्तरावच्छिन्नमुक्तप्रतियोगित्वमादाय सिद्धसाध्यतापत्तेः। तथा च स्वनिष्ठप्रकारताविशिष्टप्रतियोगितावत्त्वं मिथ्यात्वमिति फलितम्। प्रतियोगितायां प्रकारतावैशिष्ट्यञ्च स्वावच्छेदकधर्मसंबन्धोभयावच्छिन्नत्वस्वविशिष्टाभावीयत्वोभयसंबन्धेन। अभावे स्ववैशिष्ट्यञ्च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन। स्वाधिकरणता स्वावच्छेदकधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धावच्छिन्ना, न तु स्वनिरूपितविशेष्यतासंबन्धावच्छिन्ना। तथा निवेशे रजतशून्यशुक्त्यादिनिष्ठविशेष्यतानिरूपितरजतनिष्ठयत्किञ्चित्प्रकारतामादाय सिद्धसाध्यतापत्तेः। भेदप्रतियोगितावच्छेदकता स्वरूपसंबन्धावच्छिन्ना। अत्र च स्वपदं विशेषानुमाने रजतत्वविशिष्टपरम्। विमतं मिथ्या दृश्यत्वादित्यादिना विशेषसामान्यपक्षकानुमानयोर्विवक्षितत्वात्।

---

अथ द्वितीयमिथ्यात्वविचारः

**टि॰ विवदमानं प्रतीति**। तथा च प्रथमनिरुक्तमिथ्यात्वे कमपि दोषमभिसन्धाय न द्वितीयमिथ्यात्वनिरूपणमिति भावः।

द्वैतमिथ्यात्वमनङ्गीकुर्वाणाः 'नेह नानाऽस्ति किञ्चन' इति श्रुतिः ब्रह्मणि अवतारभेदेन नियाम्यभेदेन वा प्रसक्तं भेदं निषेधति, ब्रह्मणि न कोपि भेदोऽस्ति एकमेव ब्रह्म न नाना इति तदर्थः, इति मन्यन्ते।

सिद्धान्तिनस्तु द्वैतवति ब्रह्मणि ब्रह्मभिन्नवस्तुसामान्याभावं बोधयति निरुक्तश्रुतिरिति प्रतिपादयन्ति। **स्वनिष्ठप्रकारतेति**। स्वनिष्ठत्वं परिचायकमत्र।

वियन्मिथ्या न वा पृथिवी मिथ्या न वेति प्रत्येकं वा विप्रतिपत्तिरित्यादिना विशेषपक्षिकायाः ब्रह्मप्रमेत्यादिना सामान्यपक्षिकाया अपि विप्रतिपत्तेर्मूले दर्शितत्वात्। तत्र रजतत्वविशिष्टं तादात्म्यसंबन्धावच्छिन्नरजतत्वावच्छिन्न-प्रकारताविशिष्टप्रतियोगितावत् दृश्यत्वात् घटवदिति विशेषानुमानम्। रजत-त्वेनघटो नास्तीतिप्रतीतिसिद्धमभावमादाय तत्रैव साध्यस्य प्रसिद्धत्वात्।

ब्रह्मप्रमेत्यादिविशिष्टचिद्भिन्नत्वसमानाधिकरणं रूपं तादात्म्यसंबन्धाव-च्छिन्नप्रकारताविशिष्टप्रतियोगितासमानाधिकरणं दृश्यवृत्तित्वात् शुक्तिरूप्य-त्ववदिति सामान्यानुमानम्। प्राचां मते स्वत्वस्यानुगतत्वात् तत्पक्षमवलम्ब्य सामान्यानुमानकथनात् दृष्टान्ते शुक्तिरूप्यत्वे तदेव स्वपदेनोपादाय साध्य-निर्वाहः। पक्षे घटत्वादिकमुपादाय साध्यमुपपादनीयम्।

एवं पारमार्थिकत्वावच्छिन्नतादृशप्रतियोगित्वं मिथ्यात्वमिति कल्पेऽपि स्वनिष्ठप्रकारताविशिष्टप्रतियोगितावत्त्वमेव मिथ्यात्वम्। प्रतियोगितायां प्रकार-तावैशिष्ट्यञ्च स्वावच्छेदकसंबन्धावच्छिन्नत्वस्वावच्छेदकधर्मसमानाधिकरणत्व-स्वविशिष्टाभावीयत्वैतत्त्रितयसंबन्धेन। अभावे स्ववैशिष्ट्यं पूर्ववदेव। अत्रापि प्रातिभासिकव्यावहारिकसाधारणघटत्वावच्छिन्नं सर्वं तादात्म्यसंबन्धावच्छिन्न-घटत्वावच्छिन्नप्रकारताविशिष्टप्रतियोगितावत् दृश्यत्वात् प्रातीतिकघटवत् इति विशेषानुमानम्। व्यावहारिकमात्रवृत्तिघटत्वावच्छिन्नन्तु न पक्षः, तादृशघट-त्वसमानाधिकरणतादृशप्रतियोगितायाः प्रातीतिकघटेऽसत्त्वेनैतदनुमानात् प्राक् साध्याप्रसिद्ध्यापत्तेः। ब्रह्मप्रमेत्यादिविशेषणत्रयविशिष्टं रूपं तादात्म्यसंबन्धाव-च्छिन्नस्वावच्छिन्नप्रकारताविशिष्टपारमार्थिकत्वावच्छिन्नप्रतियोगितासमानाधिकर-णं दृश्यवृत्तित्वात् शुक्तिरूप्यत्ववदिति सामान्यानुमानञ्च बोध्यम्।

अत्र च प्रतियोगितायां प्रकारतावच्छेदकसंबन्धावच्छिन्नत्वानुपादाने कपालादौ संयोगादिसंबन्धेन घटादेर्योऽभावः तत्प्रतियोगित्वस्य घटादौ सिद्धि-मादाय घटादेः पारमार्थिकत्वेऽप्यर्थान्तरं स्यादित्यतस्तन्निवेशः। न च-पारमा-र्थिकत्वस्य घटादौ स्वीकारे तेन रूपेण कथं कपालादौ संयोगेनापि घटादेर-

भावसिद्धिः, व्यधिकरणधर्मावच्छिन्नाभाववादिनाऽपि विशेषरूपेण सामान्याभावस्वीकारेऽपि सामान्यरूपेण विशेषाभावास्वीकारादिति वाच्यम् । प्रकृतानुमानबलेनैव तादृशाभावसिद्ध्योक्तार्थान्तरापत्तेः । एवं प्रतियोगितायां प्रकारतावच्छेदकधर्मसामानाधिकरण्यानिवेशे घटादेः पारमार्थिकत्वेऽपि पारमार्थिकत्वेन शुक्तिरूप्यादेर्योऽभावः तादृशाभावमादायार्थान्तरं स्यादतस्तन्निवेश इति लघुचन्द्रिकापरिष्कारः ।

तच्च मिथ्यात्वं नेहनानेति श्रुत्या बोध्यते । तथा हि । उक्तश्रुतौ इहेत्यत्रेदंपदस्य 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' इति पूर्ववाक्ये द्वैतवत्त्वेन प्रक्रान्तं द्वैतविशिष्टं ब्रह्मार्थः । सप्तम्यर्थो निरूपितत्वम् । नानापदस्य ब्रह्मभिन्नं तदन्वितवस्तुसामान्यञ्च किञ्चनेत्यस्य अर्थः । तस्य प्रतियोगितया नञर्थाभावेऽन्वयः । असधात्वर्थ आधेयता । आख्यातार्थ आश्रयत्वम् । इहेति सप्तम्यन्तार्थस्य द्वैतवद्ब्रह्मनिरूपितत्वस्य धात्वर्थाधेयतायामन्वयः । अस्तीत्यत्र लडर्थः वर्तमानकालः प्रकृतशब्दप्रयोगाधिकरण (द्वैत) कालः । तस्यापि धात्वर्थेऽन्वयः । तस्य चाख्यातार्थाश्रयत्वे तस्य च नञर्थाभावे अन्वयः । तथा च द्वैतवद्ब्रह्मनिरूपितवर्तमान(द्वैत) कालावच्छिन्नाधेयताश्रयः ब्रह्मभिन्नवस्तुसामान्याभावः इति बोधः । उद्देश्यतावच्छेदककालावच्छिन्नत्वेन विधेयभानस्य व्युत्पत्तिसिद्धत्वात् उद्देश्यतावच्छेदकद्वैतवत्त्वकालावच्छिन्नत्वेनाधेयता भासते । स कालः वर्तमानकालश्चाभिन्नः ।

अत्र इहेत्यत्र सप्तम्यर्थ आधेयता विधेयतयाऽन्वेतीति तु न संभवति । एकसुब्न्तघटकपदार्थयोरिव प्रकृतिप्रत्ययार्थयोरप्युद्देश्यविधेयभावेनान्वयबोधस्याव्युत्पन्नत्वात् । तादृशतात्पर्येण पदानां प्रयोगे एकप्रसरताभङ्ग इति शाब्दिका वदन्ति । एकप्रसरता-एकविशिष्टोपस्थापकता । तस्याश्चैकार्थीभाववादिमते स्वीकारात् । तत्र पूर्वोत्तरपदार्थयोरुद्देश्यविधेयभावस्य पृथगुपस्थितिनियतस्योपगमे तस्या भङ्गप्रसङ्गः । अत एव 'वषट्कर्तुः प्रथमभक्षः' इत्यत्र भक्षणो-

टि. आधेयतेति । अस्तित्वविशिष्टः अभावः ब्रह्मवृत्तिरिति बोधः ।

देशेन प्राथम्यविधानं दूषयित्वा प्राथम्यविशिष्टभक्षणविधानं मीमांसकाः स्वीकुर्वन्ति। अत एवालंकारिकाः इमं दोषमविमृष्टविधेयांशरूपं व्यवहरन्तः 'द्वितीयमौर्वीमिव कार्मुकस्य' इत्यादौ मौर्वीं द्वितीयामिव कार्मुकस्येति कल्पनामनुमन्यन्ते। अत एव च स्वत्वपक्षकनिरूपितत्वसंसर्गकराजसाध्यकन्याये राज्ञः इति प्रतिज्ञा अनुकूलतासंबन्धेन पाकसाध्यकक्रुतिपक्षकन्याये पचति इति प्रतिज्ञा च न संप्रदायसिद्धेति नैयायिका वर्णयन्ति। अतः सप्तम्या आधेयत्वार्थकत्वं परित्याज्यम्।

चन्द्रिकायामिहेति सप्तम्यन्तार्थब्रह्मनिरूपितत्वस्योद्देश्यत्वं असधात्वर्थान्वितारुयातार्थाश्रयत्वस्य च विधेयत्वमङ्गीकृत्य सुप्तिङन्तान्यतरपदार्थे सुप्तिङन्तान्यतरार्थस्यैव विधेयतेत्यभिप्रेत्य अर्थो निरूपितः। आधेयत्वाश्रयत्वस्य स्वरूपसंबन्धविशेषस्याधेयत्वरूपत्वादाश्रयत्वे न ब्रह्मनिरूपितत्वस्य बाधः।

यद्वा, कारकविभक्त्यर्थस्य धात्वर्थेनैवान्वयस्य व्युत्पन्नतया आधेयत्वे ब्रह्मनिरूपितत्वान्वयः। तथा च तयोरेवोद्देश्यविधेयभाव इति।

न च मिथ्यात्वघटकाभावस्यावच्छिन्नवृत्तिकान्यत्वेन द्वैतकालावच्छिन्नवृत्तित्वस्य भाने बाध इति वाच्यम्। प्रकृते निरवच्छिन्नविशेषणतासंबन्धावच्छिन्नाधेयतैवासधात्वर्थः। कालावच्छिन्नत्वञ्च न भासते। इत्थञ्च स्वाश्रयब्रह्मनिरूपितनिरवच्छिन्नविशेषणतासंबन्धावच्छिन्नवृत्तिताश्रयब्रह्मभिन्नवस्तुसामान्यप्रतियोगिकाभावकत्वं मिथ्यात्वमुक्तश्रुत्या बोध्यत इति न कोऽपि दोषः।

एतेन—उक्तश्रुत्या ब्रह्मणि प्रपञ्चाभावबोधनेऽपि तादृशाभावे प्रतियोग्यवच्छेदकदेशकालावच्छिन्नत्वावच्छिन्नवृत्तिकान्यत्वयोरन्यतरस्य प्रपञ्चसामानाधिकरण्यस्य प्रपञ्चान्यूनसत्ताकत्वस्य च बोधनासंभव इति परास्तम्।

गन्धप्रागभाववान् घटो गन्धवानिति वाक्यप्रामाण्यापत्तिभियोद्देश्यतावच्छे-

**टि· असधात्वर्थ इति।** यद्यपि सप्तम्याः निरवच्छिन्नविशेषणतासंबन्धावच्छिन्नाधेयत्वार्थकत्वं संभवति। तथाऽपि अस्तिपदसार्थक्याय निरूपितत्वार्थकत्वमेव सप्तम्यामुक्तमिति बोध्यम्।

दककालावच्छिन्नत्वेन विधेयबोधस्यौत्सर्गिकत्वात्। द्वैतानधिकरणकालावच्छेदेन द्वैतवद्ब्रह्मणि द्वैताभावबोधस्य 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इति श्रुत्या जातत्वेनैतद्वाक्यवैयर्थ्यापत्त्या द्वैतवत्कालावच्छेदेनैव द्वैताभावभानस्यावश्यकत्वात्, अस्तीत्यत्र लटा वर्तमान (द्वैत) कालिकत्वस्य बोधनाच्च। अभावस्य कालानवच्छिन्नत्वपक्षे निरवच्छिन्नविशेषणतासंबन्धावच्छिन्नाधेयताया असधातुना बोधनसंभवात्। 'यस्मिन् पञ्च पञ्चजनाः' इति पूर्ववाक्यानुसारेण दृश्यवद्ब्रह्मण एवेदंपदार्थत्वेनाभावे प्रपञ्चसामानाधिकरण्यस्य लाभात्। दृश्यवति दृश्याभावः अप्रातिभासिकः श्रुतिप्रमितत्वादित्यनुमानेनाभावे प्रपञ्चान्यूनसत्ताकत्वस्य लाभाच्च।

यत्तु—नञसमभिव्याहृतयादृशवाक्यात् यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नप्रकारकबोधोऽनुभवसिद्धः नञ्समभिव्याहृततादृशवाक्यात् तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्नाभावबोधस्य प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमाविति न्यायसिद्धतया उक्तश्रुत्या ब्रह्मवृत्तित्वाभावस्य द्वैते बोधस्य प्रामाणिकत्वेनाभावविशेष्यकबोधस्यायुक्तत्वात्। नञर्थविशेष्यकबोधोपगमे पृथिव्यां गन्धो न जले इत्यादिवाक्यात् गन्धाद्येकविशेष्यकबोधानुपपत्तिरिति।

तन्न। **चिन्तामणौ अभाववादे** 'इह भूतले घटो नास्तीत्याधाराधेयभावप्रतीतेश्च' इति ग्रन्थेन घटाभावविशेष्यकबोधस्य तद्वाक्यजन्यस्य प्रतिपादनात्। सामान्यादौ समवायेन घटो नास्तीत्यत्र सामान्यनिरूपितसमवायसंबन्धावच्छिन्नाधेयत्वस्याप्रसिद्ध्या तदभावबोधासंभवेन समवायसंबन्धावच्छिन्नप्रतियोगिताकघटाभावे सामान्यवृत्तित्वबोधस्यैवाङ्गीकरणीयतया प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ इति न्यायस्यासार्वत्रिकत्वात्।

---

**टि॰ चिन्तामणाविति।** **व्युत्पत्तिवादे** तादृशवाक्यात् नञर्थविशेष्यकबोधः स्पष्टं प्रतिपादित इति बोध्यम्।

**असार्वत्रिकत्वादिति।** न च-सामान्यादौ समवायेन घटो नास्तीत्यत्र घटपदस्य घटसमवाये लक्षणा, समवायेनेति पदं तात्पर्यग्राहकम्, तथा च घटसमवाये सामान्य-

विधिवादे च गदाधरीये 'न कलञ्जं भक्षयेदित्यादौ बलवदनिष्टासाधनत्वस्य क्रियायामभावबोधोपगमे व्युत्पत्त्यन्तरस्य कल्पनीयतया गौरवात् नञर्थाभावे इष्टसाधनताबोधकताव्युत्पत्तेरभावविधिस्थले भवत आवश्यकत्वात्' इति ग्रन्थेन प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमाविति न्यायस्यासार्वत्रिकतायाः प्रतीतेश्च ।

एतेन पृथिव्यां गन्धो न जले इत्यादावेकगन्धविशेष्यकत्वानुपपत्तिरिति परास्तम् । पृथिव्यां गन्धो न समवाये इत्यत्रानुपपत्त्योक्तनियमाभावात् ।

यत्तु घटोनास्तीत्यत्राभावस्य भूतलास्तित्वविशेष्यत्वे तादृशाभावस्यैकत्वेन घटौ न स्तः घटा न सन्ति इत्यादौ द्विवचनाद्यनुपपत्तिरिति ।

तन्न । भवन्मते घटौ न स्त इत्यत्राख्यातार्थविशेष्यताया घटेऽभावेऽपि विशेषणपदस्य स्वार्थविशेष्यपदेनेव स्वार्थान्वय्यर्थविशेष्यपदेनापि समानवचनकत्वनियमकल्पनवत् अस्माभिरप्याख्यातस्य नञर्थभूताभावविशेषणताशाल्यर्थबोधकपदसमानवचनकत्वनियमकल्पनात् ।

किञ्च, भवन्मतेऽपि एकघटवति भूतले घटौ न स्तः घटा न सन्ति इति प्रत्ययानुपपत्तिः । एकघटे एतद्देशास्तित्वसत्त्वेन द्वित्वावच्छिन्ने तत्र तदभावासंभवात् । न च द्वित्वावच्छिन्ने तत्र तदसत्त्वेनोक्तप्रतीतिनिर्वाह इति वाच्यम् । विशेष्यवृत्तेः पदार्थस्य विशिष्टानुयोगिकाभावानभ्युपगमेन तत्र तदभावस्यासत्त्वात् । विशिष्टस्यातिरिक्ततावादिमते गुणे विशिष्टसत्ता नास्तीति व्यवहारस्य

---

वृत्तित्वाभावो बोधयितुं शक्यत इति—वाच्यम् । लक्षणाग्रहरहितस्यापि तद्वाक्याच्छाब्दबोधस्यानुभवसिद्धत्वेन नञर्थाभावविशेष्यकबोधस्यैव स्वीकर्तुमुचितत्वात् । न च भूतले न घट इत्यत्र घटे भूतलवृत्तित्वाभावबोधानङ्गीकारे तद्वाक्यजन्यबोधस्य भूतले घट इति वाक्यजन्यबोधप्रतिबन्धकत्वं न स्यादिति वाच्यम् । ह्रदो वह्निमानित्यत्र वह्न्यभाववद्ध्रदस्यैव ह्रदावृत्तिवह्नेः ह्रदनिष्ठाभावप्रतियोगिवह्नेश्च बाधताया ग्रन्थकारैरुक्तत्वेन तज्ज्ञानानां ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकत्वस्यैव असमानप्रकारकस्यापि घटाभावे भूतलवृत्तित्वबोधस्य घटे भूतलवृत्तित्वप्रकारकबोधप्रतिबन्धकत्वसंभवादिति बोध्यम् ।

नानुपपत्तिः, भवन्मते तदनुपपत्तिश्च।

यत्तु—प्रातिभासिकमनङ्गीकुर्वतां नैयायिकानां मते कपाले समवायेन घटः न सामान्यादौ इत्यादिवाक्यादभावविशेष्यकबोधस्वीकारेऽपि भवतां स नावश्यकः। सामान्यादिनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वस्य प्रातिभासिकस्य प्रसिद्धिसंभवात्। भूतले घटो नास्तीति वाक्यात् कदाचिदभावविशेष्यकस्य भूतलवृत्तित्वप्रकारकस्य कदाचित् घटविशेष्यकभूतलवृत्तित्वाभावप्रकारकस्य च बोधस्य स्वीकारे तादृशसमभिव्याहारज्ञानादीनां कारणताद्वयापत्त्या गौरवम्। उभयसाधारणकार्यतावच्छेदकैक्यस्य कथञ्चित्संभवेऽपि तादृशवाक्यधर्मिकद्विविधतात्पर्यज्ञानस्य पृथक्कारणत्वेन तदाधिक्यस्य दुर्वारत्वादिति।

तन्न। सामान्ये न किञ्चित्समवैतीति विशेषदर्शिनां समवायेन घटः कपाले न सामान्यादौ इति वाक्यजन्यबोधस्य प्रातिभासिकसामान्यसमवेतत्वाभावविषयकत्वासंभवात् अभावविशेष्यकबोधस्यैव स्वीकरणीयत्वात्। अभावप्रतियोगितायाः संबन्धावच्छिन्नत्वमेव नास्तीति पक्षेऽपि विशेषदर्शिनां शाब्दबोधः सामान्यनिरूपितत्वेन समवायाभावमवगाहते, व्यधिकरणधर्मावच्छिन्नाभावस्वीकारात्।

किञ्चोक्तगौरवं भवतामेव दुर्वारम्, कपाले समवायेन घटः न सामान्यादौ इत्यादिवाक्यादभावविशेष्यकबोधस्यावश्यकत्वात्। अस्माभिस्तु सर्वत्राभावविशेष्यकबोधस्यैव स्वीकारेण न तात्पर्यज्ञानकारणताद्वयकल्पनागौरवम्।

यत्तु द्वैताभावे द्वैतवद्ब्रह्मवृत्तित्वस्य बोधेऽपि संबन्धान्तरावच्छिन्नद्वैताभावविषयकतया तादृशबोधनिर्वाहान्नोक्तमिथ्यात्वबोधसंभव इति।

---

**टि. भवन्मते तदनुपपत्तिश्चेति**। पूर्वं विशिष्टस्यातिरिक्तत्वं क्षणभङ्गवादस्वीकारापत्त्या स्वयं दूषयित्वा, अत्र विशिष्टस्यातिरिक्तापक्षमवलम्ब्य गुणे न विशिष्टसत्तेति वाक्यस्य प्रामाण्यनिरूपणं न्यायभास्करकाराणां स्वोक्तिपराहतमिति मन्तव्यम्।

**गौरवमिति**। अत्रेदं बोध्यम्। भूतले न घटः इत्यादौ तात्पर्यानुरोधात् घटविशेष्यकभूतलवृत्तित्वाभावप्रकारकबोधः घटाभावविशेष्यकभूतलवृत्तित्वप्रकारकबोधश्च स्वीकरणीय इति **नञर्थवादे भट्टाचार्यैः** प्रतिपादितम्। ततश्च कार्यकारणभावद्वयकल्प-

तन्न। घटसंयुक्ते समवायेन घटो नास्तीति प्रतीतेः घटसमवायाभावविषयकतया तत्संबन्धेन तद्वत्ताबुद्धौ तत्संबन्धावच्छिन्नप्रतियोगिताकतदभाववत्ताबुद्धित्वेन प्रतिबन्धकत्वापेक्षया लाघवात्तदीयतत्संबन्धाभाववत्ताबुद्धित्वेन प्रतिबन्धकत्वौचित्येनाभावस्य संबन्धावच्छिन्नप्रतियोगिताकत्वे मानाभावेन व्यधिकरणसंबन्धावच्छिन्नाभावबोधानवकाशात्। प्रतियोगितायाः संबन्धावच्छिन्नत्वस्वीकारेऽपि निषेधस्य प्रसक्तिपूर्वकत्वेन 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' इति वाक्ये तादात्म्यसंबन्धावच्छिन्नवृत्तित्वबोधकप्रतिष्ठितपदेन तादात्म्यसंबन्धेन द्वैतस्य प्रसक्तत्वात् तत्संबन्धावच्छिन्नप्रतियोगिताकाभावस्य बोध एवोक्तवाक्यतात्पर्यविषय इति न संबन्धान्तरावच्छिन्नाभावबोधसंभवः।

एतेन—तात्पर्यविषयबोधनिर्वाहाय तादात्म्येनेतिपदमध्याहर्तव्यमिति कृत्वा, तादात्म्येन द्वैताभाव इत्यत्र तृतीयार्थावच्छिन्नत्वस्याभावसंसर्गतया भासमानप्रतियोगित्वेऽन्वयासंभवेन तादात्म्यावच्छिन्नप्रतियोगिताकत्वस्याभावविशेषणत्वेन कालिकसंबन्धावच्छिन्नद्वैताभावस्य च कालिकसंबन्धावच्छिन्नद्वैताधिकरणस्य तादात्म्यसंबन्धावच्छिन्नाभावाभिन्नतया कालिकसंबन्धावच्छिन्नप्रतियोगिताकाभावाव्यावृत्तिरिति दूषणम्, परास्तम्।

तादात्म्यसंबन्धावच्छिन्नद्वैतत्वावच्छिन्नप्रतियोगितासंबन्धेन द्वैतस्याभावविशेषणतयोक्ताभावव्यावर्तनात्।

यत्तु—पञ्चजनशब्दस्य द्वैतसामान्यलक्षकत्ववर्णनमप्ययुक्तम्, पञ्चेत्यस्यानन्वयप्रसङ्गात् आकाशश्चेति पृथगुक्तिवैयर्थ्यात् प्राणादयो वाक्यशेषादिति सूत्रे पञ्चजनशब्दस्य प्राणादिपरत्ववर्णनेन तद्विरोधाच्चेति।

तन्न। न संख्योपसंग्रहादिति सूत्रे यस्मिन्पञ्चेति मन्त्रेण पञ्चविंशति-

---

नागौरवं न दोषः। **न्यायभास्करेऽपि** एतद्विचारावसरे 'तात्पर्यवशात्तादृशबोधाङ्गीकारसंभवेऽपि' इत्यादिना ग्रन्थेनेमं विचारं परित्यज्य विषयान्तरसंचारोऽकारि।

**अभावविशेषणत्वेनेति**। अभावान्वयि अवच्छिन्नप्रतियोगिताकत्वं तृतीयार्थ इति भावः।

**अभिन्नतयेति**। समनियताभावानामैक्यादिति भावः।

तत्त्वप्रतिपादनात् सांख्यकल्पितं प्रधानं श्रौतमित्याशङ्कायां 'यस्मिन् पञ्च पञ्च-जना आकाशश्च प्रतिष्ठितः। तमेव मन्ये आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्' इति वाक्यं न सांख्यतत्त्वाभिप्रायकं किन्तु निर्विशेषब्रह्मपरमिति सिद्धान्तितम्। अस्यार्थः—प्राणचक्षुश्श्रोत्रान्नमनांसि वाक्यशेषस्थाः पञ्चजनाः पञ्च। तत्र चत्वारः सूत्रम्। अन्नं विराट्। तयोः कारणमव्याकृताकाशश्च यस्मिन्नध्यस्तः तमेवात्मानं अमृतं ब्रह्म मन्ये। तस्मान्मननाद्विद्वानहं अमृतोऽस्मि इति। एवञ्च पञ्चशब्दो नापरपञ्चपदार्थसंख्यान्वयी। पञ्चजनशब्दो रूढः। 'स्युः पुमांसः पञ्चजनाः' इति कोशात्। के ते पञ्चजना इत्याकांक्षायां प्राणस्य प्राणमिति वाक्यशेषगताः प्राणादयः पञ्चेति प्रतिपादनेन पञ्चपदसमभिव्याहृतपञ्चजनशब्दस्य चेतनसामान्योपलक्षकतया आकाशशब्दाभावे अव्याकृतस्य ब्रह्मवृत्तित्वालाभेन आकाशपदेनाव्याकृताकाशस्य चकारेणेतरस्य च बोधनात् चेतनाचेतनात्मकप्रपञ्चसामान्यलाभेन न काचिदनुपपत्तिः।

केचित्तु देवाः पितरो गन्धर्वा असुरा रक्षांसि पञ्च पञ्चजना इत्याहुः।

अन्ये तु चत्वारो वर्णा निषादपञ्चमा इति। क्वचित् पाञ्चजन्यया विशा इति प्रजापरः प्रयोग इति।

सर्वथाऽपि ब्रह्मणोऽधिष्ठानत्वे न काऽप्यनुपपत्तिः।

अत्रायं सूत्रकारनिगूढाशयः। वाक्यशेषपर्यालोचनया अर्थनिर्णये सति न प्रकरणान्तरगतमन्त्रानुसार एष्टव्यः इति। एवञ्च पञ्चजनशब्देनैको वर्गः, आकाशशब्देनाव्याकृतम्, चकारेणान्यत्सर्वं ग्राह्यमिति॥

---

**टि.** चेतनसामान्योपलक्षकतया—चेतनसामान्यबोधकतया।

**ग्राह्यमिति**। अत्र पञ्च पञ्चजना इत्यनेन चेतनसामान्यलाभः। समष्टिस्थूलाभिमानिनि विराट्पुरुषे समष्टिसूक्ष्माभिमानिनि सूत्रात्मनि च चेतनसामान्यान्तर्भावात्। आकाशपदेन अव्याकृताकाशशब्दितमायायाः अनुक्तसमुच्चयार्थकचकारेण तत्कार्यस्य च लाभः। इत्थञ्च सर्वद्वैतप्रपञ्चाधारता ब्रह्मणः प्रतिपादिता भवति। चेत-

न च—अथर्ववेदीयतृतीयकाण्डे पञ्चमानुवाके समाम्नायते ‘यं त्वा होतारं मनसाऽभिसंविदः त्रयोदश भौवनाः पञ्च मानवाः वर्चोधसे यशसे सूनृता पदे तेभ्योऽग्निभ्यो हुतमस्तु तत्’ इति। अस्यार्थो वेदभाष्ये दर्शितः। अग्ने त्वा-त्वां होतारं-देवानामाह्वातारं मनसा अभिसंविदः-सम्यग् जानन्ति, के, त्रयोदश भौवनाः—भुवनस्य महर्षेः पुत्राः त्रयोदशसंख्याकाः ‘विश्वकर्मा भौवनः स्वात्मनि सर्वाणि भूतानि जुहवाञ्चकार’ इति श्रुत्यन्तरप्रसिद्धा विश्वकर्मप्रभृतयः। पञ्च मानवाः—निषादपञ्चमाश्चत्वारो वर्णाः। गन्धर्वा देवाः पितरो रक्षांस्यसुराः इत्येके। यं त्वां मनसा अभिसंविदः तस्मै वर्चोधसे—तेजोधराय यशसे-यशस्विने सूनृतापदे-प्रियहितवचनयुक्ताय तेभ्यः—प्रागुक्तेभ्यः भगवद्विभूतिभ्यः अग्निभ्यः अपि हुतमेतद्धविरस्तु इति। ‘यमाय हर्म्यमवपन् पञ्च मानवाः’ ‘वैवस्वतो न तृप्यति पञ्चभिर्मानवैर्यमः’ इत्यादौ वेदान्तरगतेऽपि मन्त्रभागे पञ्च मानवाः चत्वारो वर्णा निषादपञ्चमा इति। एषु सर्वेष्वपि, मनुष्येषु रूढस्य मानवशब्दस्य श्रवणात्, तेषां पञ्चत्वं बुद्धिपरिकल्पितैरुपाधिभिः स्वीकृतम्। तथेहाप्यस्तु। एवञ्चात्र पञ्चजनशब्दस्य मन्त्रान्तरगतमानवपदैकार्थ्यमपि लभ्यते। ‘यत्पाञ्चजन्यया विशेन्द्रघोषा असृक्षत’ इति। विशां तृतीयवर्णानाम्। इन्द्रविषयं घोषं शृण्वताम्। पाञ्चजन्यया इति पदेन पञ्चजनोत्पन्नत्वकीर्तनात् मनुष्याः पञ्चजनशब्देन विवक्षिता इति योग्यतया

---

नाचेतनसामान्याधारता ब्रह्मणः मन्त्रेणानेन बोध्यते इति **अनुभूतिप्रकाशादौ श्रीविद्यारण्यस्वामिचरणानां** सूक्तिरप्यनुसृता वर्तते। पञ्चजनादिपदस्य न कुत्रापि लक्षणा। ततश्च नेतरपदवैयर्थ्यं न चेतरपदार्थानन्वयः न वा सूत्रविरोध इति सर्वं रमणीयम्।

गभीरायां नद्यां घोष इत्यत्र नदीपदस्यैव गभीरनदीतीरे लक्षणेति पक्षे गभीरपदस्य तात्पर्यग्राहकत्वमात्रं न तदर्थस्य वाक्यार्थान्वयः। तथैव पञ्चजनशब्दस्य द्वैतसामान्यलक्षणापक्षे पञ्चेत्यादीनां तात्पर्यग्राहकाणां वाक्यार्थानन्वय इष्टः। आकाशशब्देन विवक्षिताव्याकृताकाशरूपमायायाः सर्वद्वयमूलत्वेनाभ्यर्हितत्वादाकाशपदेन पृथगुक्तिः, सर्वे ब्राह्मणा आहूयन्तां वसिष्ठोऽप्याहूयतामित्यत्राभ्यर्हितत्वात् वसिष्ठस्येव। वाक्यलक्षणापक्षादरे

अवधार्यते। तदनुसारेणात्रापि पञ्चजनशब्दस्य तदर्थकत्वमेव युक्तमिति प्राणादयो वाक्यशेषादिति सूत्रमभ्युपगम्यवादमात्रमिति—वाच्यम्।

वाक्यशेषस्य पूर्ववाक्यस्थपदविशेषशक्तिग्राहकत्वं सर्वतान्त्रिकाभिमतमिति अभ्युपगम्यवादोक्तेरसंगतत्वात्।

एतेन प्राणादयो वाक्यशेषादिति सूत्रविरोधो निरस्तः।

किञ्च 'प्राणान्नशब्दौ द्वौ, चक्षुश्श्रोत्रमनश्शब्दास्त्रयः, तदनुगुणतया प्राणान्नशब्दयोरपि इन्द्रियपरत्वात् प्राणादयः इन्द्रियाणीति त एव पञ्चजना इत्यर्थः' इति श्रुतप्रकाशिकावाक्ये प्राणान्नशब्दद्वयेनेन्द्रियत्रयलाभाभावात् लक्षणाकल्पनस्यावश्यकतया तदपेक्षया प्राणपदशक्यार्थघटितसूत्रस्यैव ग्रहणं युक्ततरमिति बोध्यम्।

यत्तु—एवमप्रातिभासिकत्वसाधकानुमानमप्ययुक्तम्, अजामेकामिति मन्त्रे प्रातिभासिकाजात्वकल्पनस्य 'कल्पनोपदेशाच्च मध्वादिवदविरोधः' इति सूत्रे 'असौ वाऽऽदित्यो देवमधु' इत्यादौ मधुत्वकल्पनस्य च स्वीकृतत्वेन तत्र व्यभिचारात्, स्वाप्निकपदार्थानां 'अथ रथान्' इति श्रुतिप्रमितत्वेन तत्र व्यभिचाराच्चेत्युक्तम्।

---

तु पञ्चेत्यादेरनन्वयदोषस्य प्रसक्तिरेव नेति, परोक्तं लक्षणापक्षमभ्युपगम्य दूषणमुद्धरन्ति **श्रीत्यागराजमखीन्द्राः।**

**टि.** स्वसमानाधिकरणस्वान्यूनसत्ताकाभावप्रतियोगित्वमित्यस्य प्रातिभासिकनिष्ठं यत् स्वसमानाधिकरणाभावप्रतियोगित्वं विनाशिनिष्ठं यदप्रातिभासिकस्य स्वसमानाधिकरणाभावस्य प्रतियोगित्वं तयोरन्यतरवत्त्वमिति निष्कर्ष उक्तः। तद्घटकद्वितीयदलार्थस्य निरुक्तश्रुतितात्पर्यविषयत्वनिरूपणावसरे 'विनाशिदृश्यवति विनाशिदृश्याभावस्य चोक्तश्रुतिप्रमितत्वेनैवाप्रातिभासिकत्वानुमितिसंभवात् विनाशिदृश्यत्वावच्छेदेनाप्रातिभासिकस्वसमानाधिकरणाभावप्रतियोगित्वनिश्चयस्यानुमितिद्वारोक्तश्रुतितात्पर्यविषयत्वसंभवात्' इति लघुचन्द्रिकाग्रन्थो दृश्यते। तत्र विनाशिदृश्यवति तादृशदृश्याभावः अप्रातिभासिकः श्रुतिप्रमितत्वात् यागादिधर्मवत् ब्रह्मवच्चेत्यनुमानं विवक्षितम्। परोक्तं तदनुमानदूषणमुद्धर्तुमनुवदति-**यत्त्विति।**

तन्न। लघुचन्द्रिकायां हि विनाशिदृश्यसामान्यं स्वसमानाधिकरणाप्रातिभासिकाभावप्रतियोगि इत्युक्तम्। अजास्वाप्नपदार्थादौ स्वसमानाधिकरणाप्रातिभासिकाभावप्रतियोगित्वरूपसाध्यसत्त्वान्न व्यभिचारः। विनाशिदृश्यवत्त्वावच्छेदेन विनाशिदृश्याभावे अप्रातिभासिकत्वसाधनेऽपि न दोषः। स्वाप्नपदार्थे श्रुतिप्रमितत्वाभावात्। श्रुतिप्रमितत्वं तज्जन्यज्ञाने व्यवहारकालाबाध्यतया विषयत्वम्, प्रकृते तदभावात्। अजात्वमधुत्वादेः अप्रातिभासिकत्वेन साध्याभावाभावान्न तयोर्व्यभिचारः। नेह नानेति श्रुतौ किञ्चनेत्यस्य अतोऽन्यदार्तमित्यादिश्रुतिमानेन विनाशितयाप्रमितंदृश्यमित्यर्थकत्वेनोक्तप्रतियोगितायां विनाशिनिष्ठत्वलाभादुक्तमिथ्यात्वबोधनिर्वाहः।

यत्तु विनाशित्वविशिष्टात्मभिन्नत्वापेक्षया विनाशित्वस्य लघुतया तत्समनियतोक्तविशिष्टधर्मस्य प्रतियोगितावच्छेदकत्वासंभवादुक्तबोधानिर्वाह इति।

तन्न। गौरवप्रतिसन्धानदशायामपि कम्बुग्रीवादिमत्त्वे प्रतियोगितावच्छेदकत्वमवगाहमानायाः कम्बुग्रीवादिमान्नास्तीतिप्रतीतेर्बलात् 'गुरुरपि धर्मोऽवच्छेदकः प्रतियोगितायाः' इति दीधितिकारैरुक्तत्वात् गुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वस्वीकारेणोक्तबोधे बाधकाभावात्। गुरोरवच्छेदकत्वस्य स्वरूपसंबन्धरूपस्यानङ्गीकारेऽपि स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छिन्नत्वरूपस्य पारिभाषिकस्य गदाधरादिसंमतस्य विनाशित्वविशिष्टात्मभिन्नत्वावच्छिन्नत्वस्य नञर्थाभावे संसर्गतया भासमानायां प्रतियोगितायां भानसंभवात्।

यद्वा विनाशित्वमुपलक्षणतया आत्मभिन्नत्वमवच्छेदकतया च भासत इति नोक्तानुपपत्तिः। न च प्रतियोगितासंसर्गकविशिष्टबुद्धौ उपलक्षणतया भानस्य शास्त्रकारैरनङ्गीकारादिदमनुचितमिति वाच्यम्। यादृशाभावप्रत्यये यस्य धर्मस्योपलक्षणतया भानेऽतिप्रसङ्गादिकमस्ति तत्र तदनभ्युपगमेऽपि यत्र बाधकं नास्ति तत्र तदभ्युपगमात्। अत एव जात्यवच्छिन्नप्रतियोगिताको-

---

**टि. अप्रातिभासिकत्वेनेति।** अजात्वरूपणस्य मधुत्वकल्पनस्य चाहार्यत्वात् आहार्यस्थले चाज्ञानाभावेन तत्कार्यानिर्वचनीयपदार्थोत्पत्तेः सिद्धान्तेऽनङ्गीकारादिति भावः

ऽभावः द्रव्यत्वेन धूमो नास्तीत्यादौ जातित्वद्रव्यत्वादेरुपलक्षणतया भानमङ्गीकुर्वन्ति। एवञ्च स्वसमानाधिकरणविनाशित्वोपलक्षितात्मभिन्नत्वावच्छिन्नप्रतियोगिताकाभावकत्वस्य मिथ्यात्वरूपत्वे बाधकाभावात्तत्सिद्धिः।

न च—स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धावच्छिन्नधर्म्यन्तरनिरूपित-प्रकारत्वानवच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारतानिरूपितसंसर्गतासंबन्धेन ज्ञानं प्रति अभावीयानुयोगिताविशेषभेदस्य कारणतायाः गदाधरादिभिः प्रतियोगिकोटावुपलक्षणतया भानवारणाय स्वीकृततया तादृशकार्यकारणभावव्यभिचाररूपबाधकं नीलो घटो नास्तीत्यादाविव प्रतियोगिकोटावुपलक्षणतया भानं यत्र तत्र सर्वत्र समानम्। यथा हि स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धावच्छिन्नाभावविशेष्यतानिरूपितप्रकारत्वानवच्छिन्ना या नैल्यादिप्रकारता तन्निरूपितविशेष्यत्वावच्छिन्नघटादिप्रकारतानिरूपितसंसर्गतासंबन्धेन ज्ञानमनुयोगितायां न जायते, तत्रानुयोगिताभेदरूपकारणविरहात्; तथा तादृशसंबन्धावच्छिन्नप्रकारत्वानवच्छिन्नविनाशित्वप्रकारतानिरूपितविशेष्यत्वावच्छिन्नात्मभिन्ननिष्ठप्रकारतानिरूपितसंसर्गतासंबन्धेन ज्ञानं न जन्यते इति समानमेवेति—वाच्यम्।

द्रव्यत्वेन धूमो नास्तीत्यादौ द्रव्यत्वस्योपलक्षणतया भानस्य भट्टाचार्यैरेव कण्ठत उक्त्या निरुक्तकार्यकारणभावसंकोचः अवश्यं स्वीकरणीय इति तद्व्यभिचारस्य बाधकतयाऽनुद्भावनीयत्वात्।

यत्तु—विनाशिनिष्ठं यत् स्वसमानाधिकरणाप्रातिभासिकाभावप्रतियोगित्वं तस्य मिथ्यात्वरूपत्वासंभवः, द्वैतस्य पारमार्थिकत्वेऽपि विनाशित्वसंभवादिति।

तन्न। विनाशिनः पारमार्थिकत्वे स्वसमानाधिकरणाप्रातिभासिकाभावप्रतियोगित्वरूपदलान्तराभावादुक्तरूपस्य मिथ्यात्वरूपत्वसंभवात्।

एतेन—उक्तश्रुतिजन्यबोधस्य द्वैतवति द्वैताभावविषयकस्य, इदम्पदेन दृश्यत्वेन प्रपञ्चस्य नञा चात्मभिन्नत्वेनाभावस्य बोधनेनाहार्यत्वासंभवेऽपि, येन

---

टि. प्रपञ्चस्येति। ब्रह्मविशेषणतयेति शेषः।

रूपेण यद्वत्त्वेन प्रतीयमाननिष्ठाभावीयतद्रूपावच्छिन्नतन्निष्ठप्रतियोगिताया एव मिथ्यात्वरूपत्वात् उक्तश्रुत्या मिथ्यात्वबोधनस्यासंभवः इति परास्तम्।

येन रूपेण यद्वत्तया प्रतीयमाननिष्ठाभावीयतद्रूपतद्रूपव्यापकधर्मान्यतरावच्छिन्नतन्निष्ठप्रतियोगिताया मिथ्यात्वरूपत्वात् दृश्यत्वावच्छिन्नवति ब्रह्मणि दृश्यत्वव्यापकात्मभिन्नत्वावच्छिन्नाभावविषयकस्योक्तश्रुतिजन्यबोधस्य मिथ्यात्वविषयकत्वात्। मिथ्यात्वघटकाभावस्याधिकसत्ताकत्वेन वा श्रुतिजन्यबोधस्यानुमितेश्चानाहार्यत्वसंभवेन सत्यत्वज्ञानबाधकत्वे विरोधाभावात्।

किञ्च, श्रुतिजन्यबोधस्याहार्यत्वस्वीकारेण विनाशिदृश्यत्वस्य प्रतियोगितावच्छेदकतयोक्तमिथ्यात्वलाभः। न च—विनाशिदृश्यवद्ब्रह्मणि विनाशिदृश्यं नास्तीति बोधस्य भ्रमत्वात् कथं ब्रह्मणि विनाशिदृश्यत्वावच्छिन्नाभावसाधकत्वम्, तत्त्वे वा विनाशिदृश्यत्वावच्छिन्नमपि साधयेदिति—वाच्यम्। श्रुतेस्तात्पर्यविषयानधिगतार्थे प्रमाणतया तत्साधकत्वम्। विनाशिदृश्यत्वावच्छिन्नञ्च ब्रह्मणि नानधिगतम्, नापि श्रुतितात्पर्यविषयः, लोकसिद्धत्वात्, किन्तु तदभाव एव, लोकासिद्धत्वात्। तथा चोक्तज्ञानमभावस्यैव साधकं न प्रतियोगिन इत्यस्य युक्तत्वात्। न च–उक्तश्रुतेर्बाधितार्थग्राहितया अप्रामाण्यं दुर्वारमेव, तथा चोक्तं दीधितौ 'बाधेन हि शाब्दज्ञानं न प्रतिबध्यते किन्तूत्पन्ने तत्राप्रामाण्यं गृह्यते' इति–इति वाच्यम्। लौकिकमानापेक्षया श्रुतेस्तत्परत्वेन प्राबल्यस्य सिद्धान्तसिद्धत्वात्, स्वापेक्षया प्रबलप्रमाणबाधितार्थग्राहिताया एवाप्रामाण्यप्रयोजकत्वात्।

यत्तु—प्रत्यक्षप्राप्त इव प्रत्यक्षबाधितेऽपि श्रुतेस्तात्पर्याभावेनोक्तश्रुतेर्द्वैता-

---

**अधिकसत्ताकत्वेन वेति**। स्वसमानाधिकरणस्वाधिकसत्ताकाभावप्रतियोगित्वं मिथ्यात्वमिति पक्षे उक्तश्रुतिजन्यबोधे प्रपञ्चाधिकसत्ताकस्य पारमार्थिकस्य तदभावस्य भानात् समानसत्ताकभावाभावयोरेव विरोधात् स्वविरुद्धेत्यादिकमाहार्यत्वं न संभवतीति भावः। अन्यूनसत्ताकाभावघटितं मिथ्यात्वमिति पक्षेऽपि सिद्धान्ते ब्रह्मणि प्रपञ्चतदभावयोर्विरोधाभावेन बोधस्याहार्यत्वं न संभवतीति बोध्यम्।

भावसाधकत्वायोगः, प्रत्यक्षबाधितेऽपि श्रुतेः प्रामाण्ये 'आदित्यो यूपः' 'यजमानः प्रस्तरः' इत्यादौ मीमांसकानां लक्षणाकल्पनस्य भवतामपि प्रत्यक्षाविरोधाय तत्त्वमसीत्यादौ लक्षणाकल्पनस्य चायुक्तत्वापत्तेरिति ।

तन्न । प्रत्यक्षसामान्यस्यागमापेक्षया प्राबल्ये चन्द्रप्रादेशिकत्वादिप्रत्यक्षस्य अधिकपरिमाणवत्त्वबोधकागमानुमानापेक्षया इदंरजतमितिप्रत्यक्षस्य नेदंरजतमित्यनुमानापेक्षया च प्राबल्यापत्त्या परीक्षितस्यैव प्रत्यक्षस्य प्राबल्येन दोषाभावपरीक्षायाः स्वतस्संभावितदोषे प्रत्यक्षेऽसंभवेन स्वतस्सिद्धप्रमाणभावश्रुत्यपेक्षया दौर्बल्यात् । यदि च, परीक्षितप्रत्यक्षस्थले तस्यागमबाधकत्वमनपवादम्, अन्यथा 'आदित्यो यूपः' 'यजमानः प्रस्तरः' इत्यादावन्वयानुपपत्तिप्रसक्तेरभावाल्लक्षणाकल्पनमनुचितं स्यात् इत्युच्यते ; तदाऽपि व्यवहारदशायां परीक्षितप्रत्यक्षस्यागमबाधकत्वेन 'आदित्यो यूपः' इत्यादौ लक्षणा आवश्यकी । सत्त्वप्रत्यक्षस्य परीक्षया व्यवहारकालाबाध्यविषयकत्वरूपप्रामाण्यसिद्धावपि त्रिकालाबाध्यविषयकत्वरूपप्रामाण्यासिद्ध्या तादृशप्रत्यक्षेण मिथ्यात्वागमबाधाभाव एव । एवं तत्त्वमसीत्यत्रापि तात्पर्यविषयीभूतैक्यप्रतीतिनिर्वाहाय लक्षणाश्रयणम्, न प्रत्यक्षविरोधपरिहाराय । वस्तुतः उपक्रमादितात्पर्यग्राहकलिङ्गोपेतत्वेनाद्वैतपरमतात्पर्यवत्त्वात् अपच्छेदन्यायेन परत्वाच्च आगमस्यैव द्वैतप्रत्यक्षबाधकत्वमित्यवगन्तव्यम् ।

इत्थञ्च नेहनानेतिश्रुत्या प्रपञ्चमिथ्यात्वबोधने न काऽप्यनुपपत्तिः । उक्तश्रुतिसिद्धं मिथ्यात्वं 'विमतं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि' इत्यनुमानमप्युपोद्बलयति ।

यत्तु—प्रतिपन्नपदस्य स्वप्रकारकधीविशेष्यार्थकत्वे निर्विकल्पकधीमात्रविषयीभूते सोऽयं ककार इति वाक्यजन्यभ्रमविषयप्रातिभासिके नायं स इति ज्ञानबाध्येऽव्याप्तिः । सोऽयं देवदत्त इति वाक्यादिवोक्तवाक्यादपि निर्विकल्पकबोधसंभवात् । न च—अव्याप्तिर्लक्षणस्यैव दूषणं न साध्यनिर्वचनस्य, प्रातिभासिकसामान्यस्य पक्षबहिर्भूतत्वेन बाधानवतारादिति वाच्यम् । प्रतिपन्नेत्यादेः

सकलमिथ्यासाधारणलक्षणरूपत्वस्यापि भवद्भिः प्रपञ्चितत्वात्। साध्यनिर्वचनरूपत्वेऽपि तादृशप्रातिभासिके निरुक्तसाध्याभावेन व्यभिचारस्य दुर्वारत्वादिति।

तन्न। प्रातिभासिकस्य सप्रकारकज्ञानविषयतायाः शुक्तिरजतादौ दृष्टत्वेन सोऽयं ककार इतिभ्रमविषयप्रातिभासिकस्यापि भवन्मत इव निर्विकल्पकविषयत्वे मानाभावेन सप्रकारकज्ञानविषयत्वमादाय लक्षणसाध्यनिर्वचनयोरनुपपत्त्यभावात्। अन्यथा प्रातिभासिकस्थले पञ्चपदार्थोत्पत्तिप्रतिपादनस्यानुपपत्तेः। न च सोऽयं देवदत्त इतिवाक्यान्निर्विकल्पकसिद्धिर्न स्यादिति वाच्यम्। निवर्तकज्ञानस्य निर्विकल्पकत्वेऽपि प्रातिभासिकज्ञानस्य भवन्मते ज्ञानसामान्यस्येव निर्विकल्पकत्वानङ्गीकारात्।

यद्वा, स्वनिष्ठप्रकारताभिन्नप्रकारत्वानिरूपितविषयताव्यापकाभाव-प्रतियोगित्वं प्रतिपन्नेत्यादेरर्थः। सोऽयं ककारः इतिभ्रमे ककारादिवृत्तिप्रकारतातिरिक्तप्रकारत्वानिरूपकत्वेन लक्षणसाध्यनिर्वचनयोर्नानुपपत्तिः। यद्वा, सर्वं सदिति ज्ञाने सत् तादात्म्येन सर्ववस्तुमत् इति ज्ञाने च सर्ववस्त्वन्तर्गतनिरुक्तप्रातिभासिकस्यापि प्रकारत्वात् तादृशज्ञानीयप्रकारतामादाय तत्र लक्षणं संगमनीयम्।

यत्तु—सर्वंसदित्यादिज्ञाने सर्वत्वेन तादृशप्रातिभासिकस्यापि प्रकारत्वोपगमेनोक्ताव्याप्तिपरिहारेऽपि अत्र लक्षणे त्रैकालिकत्वनिवेशनं व्यर्थम्। अव्याप्यवृत्त्यभावस्य स्वप्रकारकधीविशेष्यतासमानाधिकरणात्यन्ताभावाप्रतियोगित्वरूपव्यापकत्वाभावादेव वारणेन तमादायार्थान्तरानवकाशात्। भेदघटितव्यापकतानिवेशमङ्गीकृत्य तादृशाभावमादाय दोषसंपादनस्य तद्वारकविशेषणान्तरोपादानस्य च प्रक्षालनाद्धीतिन्यायेनायुक्तत्वादिति।

---

**टि**· 'अध्यासो नाम अतस्मिन् तद्बुद्धिः' इति भाष्यपर्यालोचनायां निर्विकल्पकभ्रमो नास्तीति प्रतीयते इति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः**।

**यद्वा स्वनिष्ठप्रकारतेत्यादि**। स्वनिष्ठप्रकारताभिन्नप्रकारत्वानिरूपितत्वं तादृश-

तन्न। सिद्धान्ते सर्वत्र सर्वाभावसत्त्वेन प्रतियोगिवैयधिकरण्याघटित-व्यापकताया असंभवात् प्रतियोगिवैयधिकरण्यघटितव्यापकताया एव निवेशनीयतया तादृशव्यापकताश्रयाव्याप्यवृत्त्यभावप्रतियोगितामादायार्थान्तरवारणेन त्रैकालिकत्वनिवेशनस्य सार्थकत्वात्।

यद्वा, लाघवेन स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वस्यैव निवेशात् तादृशव्यापकताश्रयाव्याप्यवृत्त्यभावमादायार्थान्तरवारणाय तत्। न च संयोगाभाववत्यपि अयं संयोगाभाववानिति समानाधिकरणप्रतीतिबलात् संयोगाभाववद्भेदस्य सत्त्वेन भेदघटितव्यापकत्वमपि दुर्घटमिति वाच्यम्। शुक्तिरूप्याभावस्यापि समानाधिकरणप्रतीतिविषयभेदमादाय व्यापकत्वासंभवेन अभेदविरोधिभेदस्यैव व्यापकताशरीरे निवेशनीयत्वात्, समानाधिकरणप्रतीतिविषयभेदस्याभेदाविरोधित्वात्।

एतेन—भेदे अनौपाधिकत्वं निवेश्य व्यापकत्वनिर्वचनेऽपि अयं भेदः औपाधिकः इतिप्रतीत्या औपाधिकभेदेऽप्यनौपाधिकत्वसंभवेन व्यापकत्वं दुर्वचमिति परास्तम्। उक्तयुक्तेः।

---

निरूपितत्वसंबन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्त्वम्। इत्थञ्च निर्विकल्पकभ्रमस्थले स्वनिष्ठप्रकारताया अप्रसिद्धत्वेऽपि संबन्धस्य व्यधिकरणत्वेन नाप्रसिद्धिः। इदं रजतमिति भ्रमे रजतप्रकारतानिरूपितविशेष्यतायाः रजतत्वप्रकारतानिरूपितविशेष्यतया अवच्छिन्नत्वमेव नाभेदः इति नान्यप्रकारत्वानिरूपितत्वस्य क्षतिरिति बोध्यम्।

स्वनिष्ठतादात्म्यसंबन्धावच्छिन्नप्रकारतानिरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्वनिष्ठविषयतानिरूपितत्वोभयाभाववद्विषयताव्यापकाभावप्रतियोगित्वमित्यपि सुवचमिति **श्रीपरीक्षिन्महाराजाः**।

**लाघवेनेति**। भेदप्रतियोगितायां संबन्धविशेषावच्छिन्नत्वानिवेशेन लाघवं बोध्यम्।

**उक्तयुक्तेरिति**। अभेदविरोधी औपाधिकप्रतियोगिकः भेदः अनौपाधिकत्वपदेन विवक्षित इति भावः। नञुल्लेख्यप्रतीतिविषयत्वयोग्यभेदनिवेशेन व्यापकत्वं सुवचमिति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः**।

न च—स्वाप्नगजादावव्याप्तिः, तदभावस्य प्रातीतिकत्वेन कालत्रयसंबन्धित्वरूपत्रैकालिकत्वाभावादिति वाच्यम्। त्रैकालिकपदस्य निरवच्छिन्नविशेषणताघटितव्यापकत्वतात्पर्यग्राहकतया अव्याप्यवृत्त्यभावस्य तादृशव्यापकत्वासंभवेन तमादायार्थान्तरानवकाशात्। स्वाप्नगजादेः निरवच्छिन्नविशेषणताघटितव्यापकताश्रयाभावप्रतियोगित्वेन तत्राव्याप्तेरप्यनवकाशात्। न च भावस्य निरवच्छिन्नविशेषणतासंबन्धेन वृत्तेरप्रसिद्ध्या तेन संबन्धेन घटादिमद्भेदस्य प्रतियोग्यप्रसिद्ध्याऽप्रसिद्धत्वेन घटाभावप्रकारकधीविशेष्यतानिरूपितनिरवच्छिन्नविशेषणताघटितव्यापकत्वाश्रयाभावप्रतियोगित्वेऽपि घटाभावस्य यथा न मिथ्यात्वं तद्वदेव प्रपञ्चस्यामिथ्यात्वमादायार्थान्तरं दुर्वारमिति वाच्यम्। भावस्य निरवच्छिन्नविशेषणतासंबन्धेन वृत्तितायाः **चतुर्दशलक्षण्यां कूटघटितलक्षणे गदाधरभट्टाचार्यैः** व्यवस्थापितत्वेनोक्तार्थान्तराभावात्।

यत्तु—एवं निषेधपदस्यात्यन्ताभावपरतया व्याख्यानमपि न युक्तम्, भेदप्रतियोगितायाः भेदसहिष्णुतादात्म्यावच्छिन्नत्वाभावात् भेदासहिष्णुतादात्म्यस्य चानङ्गीकारात् तादृशप्रतियोगितामादायार्थान्तरानवकाशादित्युक्तम्।

तन्न। तादृशप्रतियोगितायाः स्वमते अप्रसिद्धत्वेऽपि मतान्तरप्रसिद्ध्या अर्थान्तरसंभवात्।

एवं निषेधपदस्य संसर्गाभावपरतया व्याख्यानमपि युक्तमेव। न च ध्वंसप्रागभावप्रतियोगितामादायार्थान्तरमिति वाच्यम्। तत्प्रतियोगितायाः संबन्धावच्छिन्नत्वाभावात्।

यत्तु प्रकृतानुमानबलेन तत्प्रतियोगितायाः संबन्धावच्छिन्नत्वसिद्धिमादायार्थान्तरं दुर्वारमिति।

तन्न। ध्वंसप्रागभावप्रतियोगितयोः संबन्धावच्छिन्नत्वानङ्गीकारेणानुभवविरुद्धां तत्प्रतियोगितामादायार्थान्तरानवकाशात्।

---

**टि.** अवच्छिन्नवृत्तिकान्यत्वपर्यवसितत्रैकालिकत्वविशेषणेनापि ध्वंसप्रागभावव्याप्तिः संभवति। स्पष्टञ्चैतत् **विट्ठलमिश्रीये**। न च प्रकृतानुमानबलेनैव त्रैकालिकत्व-

एवं प्रतियोगितायां संबन्धावच्छिन्नत्वनिवेशनमपि युक्तमेव। न च—रजतत्वविशिष्टपक्षकविशेषानुमाने दृष्टान्ते घटे साध्यवैकल्यम्, रजतत्वेन घटाभावीयप्रतियोगितायाः व्यधिकरणधर्मावच्छिन्नायाः संबन्धावच्छिन्नत्वासंभवादिति वाच्यम्। घटत्वेनपटज्ञान—घटत्वेनपटाभावज्ञानयोः प्रतिबध्यप्रतिबन्धकभावस्य संबन्धविशेषनियन्त्रितत्वानुरोधेन तत्प्रतियोगिताया अपि संबन्धावच्छिन्नत्वसंभवात्। एतच्च **दीधितिकारानुमतम्**। तेन **बाधग्रन्थे** लाघवोपनीतकाञ्चनमयत्वादिना वह्न्यनुमितिविरोधितया काञ्चनमयत्वावच्छिन्नवह्न्यभावस्य हेत्वाभासत्वोक्तेः।

यत्तु—उक्तयुक्त्या व्यधिकरणधर्मावच्छिन्नप्रतियोगितायाः संबन्धावच्छिन्नत्वस्य **गदाधरादिभिः** व्यवस्थापितत्वेऽपि तादृशयुक्तिर्भवत्सिद्धान्तविरुद्धा। भवत्सिद्धान्ते हि घटत्वविशिष्टपटज्ञानं काञ्चनमयवह्निज्ञानञ्च प्रातिभासिकविषयकमेव। अन्यथाख्यात्यनङ्गीकारात्। तादृशज्ञानयोश्च प्रातिभासिकाभावज्ञानस्यैव प्रतिबन्धकत्वं युक्तं नोक्तव्यधिकरणधर्मावच्छिन्नाभावज्ञानस्येति।

तन्न। घटत्वपटत्वोभयावच्छिन्नप्रकारताशालिबुद्धिं प्रति घटत्वावच्छिन्नपटनिष्ठप्रतियोगिताकाभावज्ञानत्वेन प्रतिबन्धकतया व्यधिकरणधर्मावच्छिन्नाभावज्ञानस्यापि उक्तप्रतिबन्धकतावच्छेदकरूपाक्रान्तत्वेन प्रतिबन्धकत्वस्य दुर्वारत्वात्। न च—घटत्वेन पटवानिति बुद्धौ घटत्वेन पटजलोभयंनास्तीति ज्ञानस्य प्रतिबन्धकत्वापत्तिवारणाय तदुभयावच्छिन्नप्रकारताशालिबुद्धौ तदुभयपर्याप्तावच्छेदकताकप्रतियोगिताकाभावज्ञानस्यैव प्रतिबन्धकत्वस्य वक्तव्यतया व्यधिकरणधर्मावच्छिन्नाभावज्ञानव्यावृत्तिः, घटत्वेन पटाभावस्य घटत्वमात्रावच्छिन्नप्रतियोगिताकत्वादिति—वाच्यम्। तादृशव्यधिकरणधर्मावच्छिन्नाभावस्यापि तदु-

---

विशिष्टध्वंसप्रतियोगित्वसिद्ध्याऽर्थान्तरमिति न्यायभास्करोक्तिर्युक्ता। तथाऽर्थान्तरकथनस्य कथकसंप्रदायविरुद्धत्वात्। न हि मीमांसकोक्ते शक्तिसाधके, वह्निः दाहानुकूलाद्विष्ठातीन्द्रियधर्मसमवायी इत्यनुमाने, साध्ये संयोगवारके अद्विष्ठत्वविशेषणे दत्तेऽपि प्रकृतानुमानबलेनैवाद्विष्ठत्वविशिष्टसंयोगसिद्धिमादायार्थान्तरं वदन्ति नैयायिकाः।

भयपर्याप्तावच्छेदकताकप्रतियोगिताकत्वमावश्यकम्। अन्यथा तज्ज्ञानस्य प्रतिबन्धकत्वानुपपत्त्या तद्विषयस्य हेत्वाभासत्वानुपपत्तेः। तथा च व्यधिकरणधर्मावच्छिन्नाभावज्ञानस्य प्रतिबन्धकत्वात् तादृशप्रतिबध्यप्रतिबन्धकभावस्य संबन्धविशेषनियन्त्रितत्वानुरोधेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताया अपि संबन्धावच्छिन्नत्वसिद्ध्या न साध्यवैकल्यम्।

यत्त्वेवमपि साध्यवैकल्यं दुर्वारमेव, रजतघटोभयाभावमादाय रजतादौ सिद्धसाधनवारणाय प्रकारतावच्छेदकपर्याप्तावच्छेदकताकत्वस्यैव प्रतियोगितायां निवेशनीयतया रजतत्वेनघटाभावीयप्रतियोगिताव्यावर्तनात्। तादृशप्रतियोगिताया रजतत्वघटत्वोभयावच्छिन्नत्वेन तादृशप्रकारतावच्छेदकरजतत्वपर्याप्तावच्छेदकताकत्वाभावात्। एतेन स्वावच्छेदकसंबन्धावच्छिन्नत्वस्थाने स्वानवच्छेदकसंबन्धानवच्छिन्नत्वं निवेश्य पूर्वोक्तसाध्यवैकल्यपरिहारेऽपि न निस्तारः इति।

तन्न। रजतघटोभयाभावमादाय दोषवारणायाभावे व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वस्य निवेश्यतया रजतघटोभयाभावस्योक्तप्रतियोगिताकत्वाभावेन सिद्धसाधनसाध्यवैकल्ययोरभावात्।

यद्वा, प्रकारतावच्छेदकधर्मापर्याप्तत्वप्रतियोगिताव्यधिकरणावृत्तित्वोभयाभाववदवच्छेदकताकप्रतियोगिताकत्वनिवेशेन साध्यवैकल्यानवकाशः।

---

**टि. हेत्वाभासत्वानुपपत्तेरिति।** समानाधिकरणधर्मस्य तादृशाभावप्रतियोगितानवच्छेदकत्वे घटत्वप्रकारकज्ञानमन्तरेणापि रजतत्वेन घटो नास्तीति प्रतीत्यापत्तिरपि बोध्या।

साध्यीभूतप्रतियोगितायामव्यासज्यवृत्तित्वविशेषणेन पर्याप्तेः साध्यतावच्छेदकसंबन्धतास्वीकारेण वा उभयाभावप्रतियोगितामादाय दोषवारणं संभवति, साध्यवैकल्यमपि न भवति, स्पष्टा चेयं रीतिः विप्रतिपत्तिव्याख्यानावसरे **विट्ठलमिश्रीये**।

**यद्वा प्रकारतावच्छेदकेति।** रजतत्वेनघटाभावप्रतियोगितावच्छेदकतायां प्रकारतावच्छेदकधर्मापर्याप्तत्वस्य प्रतियोगिताव्यधिकरणावृत्तित्वस्य चाभावादुभयाभाव इति न साध्यवैकल्यम्। रजतं नास्तीति प्रतीतिसिद्धाभावप्रतियोगितावच्छेदकतायां प्रकारतावच्छेदकधर्मापर्याप्तत्वाभावात् उभयाभाव इति पक्षे साध्यपर्यवसानम्। रजत-

अथवा, रजतघटोभयाभावमादाय सिद्धसाधनवारणाय प्रकारतावच्छेदकधर्मभिन्नत्वस्वसमानाधिकरणत्वोभयाभाववद्धर्मावच्छिन्नत्वस्य प्रतियोगितायां निवेशेनोक्तप्रतियोगितायाः प्रकारतावच्छेदकरजतत्वभिन्नसमानाधिकरणीभूतोभयत्वावच्छिन्नत्वेन दोषाभावः ।

यत्तु—पारमार्थिकत्वघटितसाध्यकल्पे अन्योन्याश्रयः, पारमार्थिकत्वस्य मिथ्यात्वाभावरूपत्वात् । पारमार्थिकत्वस्यापि पारमार्थिकत्वाकारेण निषेधे अनवस्थापत्तिश्च । अन्यथा आरोपितपारमार्थिकत्वस्य प्रपञ्चेऽभ्युपगतत्वेन तत्र तदभावस्य दुरुपपादत्वात् । येन रूपेण येन संबन्धेन यत्र यत् संबध्यते तत्र तेन रूपेण तत्संबन्धावच्छिन्नाभावानङ्गीकारपक्षे व्यधिकरणधर्मावच्छिन्नाभावमादाय साध्योपपादनार्थमुक्तपक्षावलम्बनात् आरोपितपारमार्थिकत्ववति प्रपञ्चे स्वरूपेण तदभावासंभवादिति ।

तन्न । पारमार्थिकत्वं हि प्रकृते न मिथ्यात्वाभावः, किन्तु ज्ञानानिवर्त्यमात्रविशेष्यकधीः । तथा च विषयतासंबन्धेन तदवच्छिन्नस्य प्रतियोगित्वस्य निवेशान्नान्योन्याश्रयः । पारमार्थिकत्वस्य तद्घटितमिथ्यात्वाघटितत्वात् ।

एवञ्च ज्ञानानिवर्त्यविशेष्यकधीरूपपारमार्थिकत्वनिष्ठविषयतासंबन्धावच्छिन्ननिरवच्छिन्नावच्छेदकताकप्रतियोगित्वं साध्यं पर्यवसितम् ।

न च प्रपञ्चसत्यतामतेऽपि पटघटादिविशेष्यकधीरूपाणामुक्तपारमार्थिकत्वानां भिन्नभिन्नतया चालिनीन्यायेन घटादिविशेष्यकधीरूपपारमार्थिकत्वेन पटाद्यभावमादाय सिद्धसाधनमिति वाच्यम् । तत्तद्धियामननुगतत्वेऽपि ज्ञानानिवर्त्यमात्रविशेष्यकधीत्वेनानुगमसंभवात् उपलक्षणविधया तादृशधीत्वावच्छिन्नावच्छेदकताकप्रतियोगित्वस्यैव साध्यत्वाङ्गीकारान्न सिद्धसाधनम् ।

---

घटोभयाभावप्रतियोगितावच्छेदकतायां तु उक्तापर्याप्तत्वनिरुक्तावृत्तित्वोभयसत्त्वात् तदभावो नास्तीति तद्वारणं बोध्यम् । **अथवेति** । पूर्वमवच्छेदकतायामुभयाभावो निविष्टः, अत्र तु धर्मे इति विशेषः ।

**न सिद्धसाधनमिति** । वस्तुतस्तु ज्ञानानिवर्त्यमात्रविशेष्यकधीपदेन सत्यं

यद्वा, तादृशधीत्वव्यापकनिरवच्छिन्नावच्छेदकताकत्वं पारमार्थिकत्वावच्छिन्नत्वम्। तथा च पटादेः घटादिविशेष्यकधीरूपयत्किञ्चित्पारमार्थिकत्वेनाभावमादाय सिद्धसाधनानवकाशः। तदीयप्रतियोगितायाः पारमार्थिकत्वसामान्यानवच्छिन्नत्वेन तादृशधीत्वव्यापकावच्छेदकताकत्वाभावात्। पारमार्थिकत्वसामान्येन पटाद्यभावस्य च सत्यत्ववादिमतेऽसिद्धत्वात्। न च—अवच्छेदकानुगमकरूपाभावे भिन्नभिन्नावच्छेदकव्यक्तीनां स्वरूपत एकावच्छेदकताश्रयत्वासंभवः, तथा च स्वमतेऽपि ज्ञानानिवर्त्यभूतब्रह्ममात्रविषयकधियामपि बहुत्वेन तादृशधीत्वव्यापकनिरवच्छिन्नावच्छेदकत्वाप्रसिद्ध्या साध्याप्रसिद्धिरिति वाच्यम्। उपलक्षणीभूतेनानुगतनानाव्यक्तीनामपि एकावच्छेदकताया अनुभवसिद्धत्वेनादोषात्।

एतेन—एवमपि घटगतपारमार्थिकत्वतदन्यगतपारमार्थिकत्वोभाभ्यां प्रमेयसामान्याभावमादाय सिद्धसाधनं दुर्वारम्, घटादावेकैकपारमार्थिकत्वसत्त्वेऽपि यावत्पारमार्थिकत्वाभावेन यावत्पारमार्थिकत्वावच्छिन्नप्रतियोगितायाः तादृशधीत्वव्यापकनिरवच्छिन्नावच्छेदकताकत्वस्यापि संभवादिति परास्तम्।

तादृशावच्छेदकतायामुभयावृत्तित्वविशेषणेन वारणात्। उक्तप्रमेयसामान्याभावीयप्रतियोगितायामुभयावच्छिन्नत्वात्।

यद्वा, यावन्ति पारमार्थिकत्वानि तत्तदवच्छिन्नस्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगिताकूटवत्त्वस्य साध्यत्वान्नोक्तसिद्धसाधनावसरः। पटादिगतपारमार्थिकत्वेन कपालादौ घटादेरभावस्य प्रसिद्धावपि घटगतपारमार्थिकत्वावच्छिन्नतादृशप्रतियोगित्वस्यापि कूटान्तर्गतत्वेन तस्य घटादौ सत्यत्ववादिभिरनङ्गीकारात्। तथा च तादृशधीत्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वमेवोक्तसाध्यं पर्यवसितम्। भेदप्रतियोगितावच्छेदकता च स्वनिष्ठतादृश-

---

सर्वं वाच्यमिति धीविशेषस्यैव विवक्षितत्वात् तादृशधीविशेषावच्छिन्नप्रतियोगित्वस्यैव साध्यत्वान्न सिद्धसाधनावकाशः, स्पष्टा चेयं रीतिः **विट्ठलमिश्रीये** इति बोध्यम्।

**न्यायभास्कर**प्रदर्शितरीतिमनुसृत्याह—**यद्वेति**।

प्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकत्वसंबन्धावच्छिन्ना। न च—एवमपि सविकल्पकधियामेव ज्ञानानिवर्त्यमात्रविशेष्यकधीत्वरूपानुगतरूपाक्रान्ततया निर्विकल्पकस्य तदनाक्रान्तत्वेन उपहितचैतन्ये बाधापत्तिः, तादृशधीरूपपारमार्थिकत्वस्य उपहितचित्येव संभवादिति वाच्यम्। ज्ञानानिवर्त्यमात्रनिष्ठप्रकारतासंसर्गताभिन्नविषयतानिरूपकत्वरूपस्य ज्ञानानिवर्त्यमात्रविशेष्यकत्वस्य निर्विकल्पकसाधारणत्वेन उपहितचिति बाधानुपपत्तेः।

यद्वा, ज्ञानानिवर्त्यमात्रविशेष्यकत्वस्य ज्ञाननिवर्त्याविषयकत्वरूपस्य सिद्धान्ते निर्विकल्पकमात्रवृत्तित्वेनोपहितचिति बाधवारणसंभवः। न च ज्ञानं सर्वं स्वविषयकमिति वादिनां मते ज्ञानमात्रस्य ज्ञाननिवर्त्यस्वविषयकत्वेन ज्ञाननिवर्त्याविषयकधियोऽप्रसिद्ध्या साध्याप्रसिद्धिरिति वाच्यम्। स्वविषयकत्वस्वभिन्नत्वोभयसंबन्धावच्छिन्नज्ञाननिवर्त्यनिष्ठप्रतियोगिताकाभावविशिष्टधीत्वेन तादृशोभयसंबन्धावच्छिन्नज्ञाननिवर्त्यनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्धीत्वेन वा उपलक्षितधीनिष्ठनिरवच्छिन्नावच्छेदकताकतादृशप्रतियोगित्वस्य साध्यत्वाङ्गीकारान्न साध्याप्रसिद्धिः। न च—एवमपि तादृशधीरूपपारमार्थिकत्वे पक्षतावच्छेदकाक्रान्ते बाधो दुर्वारः, तादृशधीरूपपारमार्थिकत्वस्य स्वस्मिन् विषयतासंबन्धेन सत्त्वेन तदवच्छिन्नोक्तप्रतियोगित्वस्य कूटान्तर्गतस्य तत्राभावादिति वाच्यम्। स्वभिन्नधीत्वव्यापकत्वस्य साध्यत्वात् स्वभिन्नधीरूपपारमार्थिकत्वस्य स्वस्मिन्नभावेन तदवच्छिन्नप्रतियोगित्वस्य तत्र सत्त्वात्। न चैवं सत्यननुगमापत्तिः पक्षीभूतघटादिव्यक्तीनामेव स्वपदेनोपादेयत्वादिति वाच्यम्। स्वत्वस्यानुगतत्वात्।

यद्वा, तादृशधीत्वव्यापकत्वं साध्यम्। व्यापकताघटकभेदप्रतियोगितावच्छेदकता स्वनिष्ठतादृशप्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकत्वाभावस्वभिन्नत्वोभयाभाववत्त्वसंबन्धेन। तथा च स्वभिन्नधीरूपपारमार्थिकत्वे स्वनिष्ठतादृशप्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकत्वाभावाभावेन स्वात्मकपारमार्थिकत्वे स्वभिन्नत्वाभावेनोक्तोभयाभावसत्त्वान्नानुपपत्तिः। न चैवमपि तादृश-

पारमार्थिकत्वात्मकधियामेकस्या अन्यया तस्या अप्यन्यया निषेधप्रतियोगित्वस्य वाच्यत्वेनानुमितिविषयानवस्थापत्तिरिति वाच्यम्। पूर्वोक्तानुगमेन वारणात्।

यद्वा, ज्ञानानिवर्त्यत्वमेव पारमार्थिकत्वम्। अस्य च विशेषणतासंबन्धेनाप्यसत्त्वेन विशेषणतासंबन्धावच्छिन्नपारमार्थिकत्वावच्छिन्नप्रतियोगित्वस्य स्वस्वेतरसकलदृश्यसाधारणत्वात् लाघवात्तदेव निवेश्यते। न च ज्ञाननिवर्त्यत्वस्य मिथ्यात्ववादिनां ज्ञाननिवर्त्यः प्रपञ्चः इति प्रतीतेः भेदाभेदनियतत्वञ्च स्वीकुर्वाणानां ज्ञाननिवर्त्यत्वाभावस्य ज्ञाननिवर्त्यभेदस्य वा प्रपञ्चेऽपि सत्त्वेन पारमार्थिकत्वस्य व्यधिकरणतयाऽवच्छेदकत्वासंभव इति वाच्यम्। ज्ञाननिवर्त्यत्वान्यूनसत्ताकज्ञाननिवर्त्यभेदस्य पारमार्थिकत्वस्य प्रपञ्चेऽभावेन व्यधिकरणतयाऽवच्छेदकत्वसंभवात्। अयं ज्ञाननिवर्त्यः इतिप्रतीतिसिद्धभेदस्य प्रातिभासिकतायाः 'कार्यात्मना तु नानात्वमभेदः कारणात्मना' इति कारिकाव्याख्यानावसरे **ब्रह्मानन्दसरस्वतीभामतीकारादिभिः** व्यवस्थापितत्वेनोक्तभेदस्य न्यूनसत्ताकत्वात्।

यद्वा, ज्ञानानिवर्त्यत्वघटकभेदे अनौपाधिकत्वं निवेश्यते। तथा च

---

टि. '**अभेदोपादाना भेदकल्पना**' इति **भामत्युक्तेः** समानाधिकरणप्रतीतिविषयाभेदस्य व्यावहारिकत्वं भेदस्य प्रातिभासिकत्वमिति **लघुचन्द्रिकायां ब्रह्मानन्दस्वामिनः**।

अत्र येन रूपेण येन च संबन्धेन यत्र यत् संबध्यते तत्र तेन रूपेण तेन संबन्धेन च तदभावो न संभवति विरोधात् इति मन्वानं वादिनं प्रति पारमार्थिकत्वावच्छिन्नप्रतियोगिताघटितकल्प आरब्धः। न च तत्कल्पे ज्ञाननिवर्त्यत्ववति प्रपञ्चे ज्ञाननिवर्त्यत्वत्वावच्छिन्नाभावः संभवति। अपि तु ब्रह्मण्येव। एवञ्च ब्रह्ममात्रनिष्ठस्य ज्ञाननिवर्त्यत्वत्वावच्छिन्नाभावस्य प्रपञ्चनिष्ठप्रतियोगितायां व्यधिकरणतयाऽवच्छेदकत्वसंभवात् उक्तरीत्या मिथ्यात्वन्यायेन ज्ञाननिवर्त्यत्वाभावस्य प्रपञ्चनिष्ठत्वेन व्यधिकरणतयाऽवच्छेदकत्वासंभवकथनं **न्यायभास्करकाराणा**मनुचितमिति **श्रीत्यागराजाध्वरीन्द्राः**।

ज्ञाननिवर्त्यप्रतियोगिकानौपाधिकभेदः पारमार्थिकत्वम् । अनौपाधिकत्वञ्च उपाध्योर्यो भेदः तदन्यो यः तदुपहितयोर्भेदः तत्त्वम् । प्रकृते च भेदस्यौपाधिकत्वान्नानुपपत्तिः ।

यद्वा, प्रतियोग्यनधिकरणवृत्तित्वोपलक्षितज्ञाननिवर्त्यत्वाभावः पारमार्थिकत्वम् । तस्य च प्रपञ्चेऽभावात् व्यधिकरणत्वोपपत्तिः । न च प्रतियोग्यधिकरणत्वाभावस्य तदवच्छिन्नभेदस्य वा प्रपञ्चेऽपि सत्त्वेन व्यधिकरणतयाऽवच्छेदकत्वं न संभवतीति वाच्यम् । प्रतियोग्यधिकरणभेदस्य प्रतियोग्यधिकरणत्वान्यूनसत्ताकाभावरूपस्य विवक्षणेन दोषाभावात् ।

यत्तूक्तं पूर्वक्षणवृत्तित्वविशिष्टज्ञाननिवर्त्यत्वाभावमादाय दोषवारणाय ज्ञाननिवर्त्यत्वाभावस्य स्वरूपतोऽवच्छेदकत्वस्य वाच्यत्वेन प्रतियोग्यनधिकरणवृत्तित्वविशिष्टतादृशाभावत्वेन व्यधिकरणतयाऽवच्छेदकत्वसंभवेऽपि स्वरूपतस्तदसंभव इति ।

तन्न । विशिष्टाभावस्य वैशिष्ट्यानवच्छिन्नप्रतियोगिताकत्वनिवेशेन वारणसंभवात् ।

यद्वा, प्रतियोग्यनधिकरणवृत्तित्वातिरिक्तधर्मानवच्छिन्नज्ञाननिवर्त्यत्वाभावनिष्ठावच्छेदकताकप्रतियोगित्वं मिथ्यात्वमिति परिष्कारे उक्ताभावस्य स्वरूपतोऽवच्छेदकत्वेन तस्य प्रपञ्चेऽसत्त्वेन पूर्वोक्तदोषाभावात् ।

यद्वा, विशिष्टस्यातिरिक्ततामते प्रतियोग्यनधिकरणीभूतब्रह्मवृत्तित्वविशिष्टाभावस्य प्रपञ्चेऽभावात् स्वरूपत एव व्यधिकरणतयाऽवच्छेदकत्वसंभवः ।

---

**टि. भेदस्यौपाधिकत्वादिति ।** अत्रापि अयं भेद औपाधिक इतिप्रतीतिसिद्धभेदमादाय दोषवारणाय अनौपाधिकत्वघटकभेदे नञुल्लेख्यत्वं अभेदविरोधित्वं वा निवेशनीयम् । एवं अनौपाधिकत्वमनिवेश्य ज्ञाननिवर्त्यभेदे नञुल्लेख्यत्वं अभेदविरोधित्वं वा निवेशयितुमुचितम् ।

**स्वरूपतोऽवच्छेदकत्वेनेति ।** प्रतियोग्यनधिकरणवृत्तित्वातिरिक्तज्ञाननिवर्त्यत्वाभावत्वादिधर्मानवच्छिन्नत्वमेव स्वरूपतोऽवच्छेदकत्वं विवक्षितम् ।

यत्तु—तथा सति घटादिवृत्तित्वविशिष्टतादृशाभावस्य पटादिप्रतियोगितायामवच्छेदकत्वसंभवेन पूर्वोक्तरीत्या सिद्धसाधनवारणाय तादृशाभावावच्छिन्नप्रतियोगिताकूटवत्त्वस्यैव साध्यीकर्तव्यत्वेन बाधतादवस्थ्यमिति ।

तन्न । ज्ञाननिवर्त्यत्वाभावत्वव्यापकावच्छेदकताकप्रतियोगित्वस्य साध्यतया तस्य च पटादावसिद्ध्या सिद्धसाधनाभावेन कूटघटितपरिष्कारे प्रयोजनाभावेन बाधोक्तेरयुक्तेः ।

यदपि—पारमार्थिकत्वघटत्वोभाभ्यां पटाद्यभावमादाय सिद्धसाधनं दुष्परिहरम्, पारमार्थिकत्वपर्याप्तावच्छेदकताकप्रतियोगित्वस्य साध्यत्वे साध्याप्रसिद्धिः, प्रतियोगिविशेषणतापन्नधर्मस्यापि व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगिताऽवच्छेदकताया गदाधरादिभिर्व्यवस्थापितत्वादिति ।

तदपि न । पारमार्थिकत्वपर्याप्तप्रतियोगिताव्यधिकरणनिष्ठावच्छेदकताकप्रतियोगित्वस्य साध्यीकर्तव्यत्वेन व्यधिकरणपारमार्थिकत्वावच्छिन्नपटनिष्ठप्रतियोगितायां प्रतियोगिविशेषणतापन्नपटत्वस्य सामानाधिकरण्येनावच्छेदकत्वेऽपि वैयधिकरण्येनावच्छेदकत्वाभावान्न साध्याप्रसिद्धिः ।

यद्वा, पारमार्थिकत्वेन किञ्चिद्धर्मविशिष्टवत्ताग्रहप्रतिबन्धकतावच्छेदकीभूतविषयताश्रयाभावनिरूपितप्रतियोगित्वस्य साध्यतया पारमार्थिकत्वघटत्वोभाभ्यां पटाभावज्ञानस्य पारमार्थिकत्वेन किञ्चिद्विशिष्टवत्ताज्ञानाविरोधितया तादृशप्रतियोगितायाश्चोक्तप्रतिबन्धकतावच्छेदकविषयताश्रयाभावानिरूपिततया सिद्धसाधनाप्रसिद्ध्योरप्रसक्तिः ।

---

**टि.** पारमार्थिकत्वघटत्वोभाभ्यां पटाभावप्रतियोगितावच्छेदकतायाः पारमार्थिकत्वनिष्ठाया उभयत्वावच्छिन्नत्वेन निरवच्छिन्नत्वाभावेन पारमार्थिकत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगितारूपसाध्यस्यासिद्धत्वेन सिद्धसाधनासंभवः । वस्तुतः प्रपञ्चसत्यत्वमते पारमार्थिकत्वस्याव्यावर्तकत्वेन द्रव्यत्वेन धूमो नास्तीत्यत्र द्रव्यत्वस्येव पारमार्थिकत्वघटत्वोभाभ्यां पटाभावप्रतियोगितायामुपलक्षणत्वेनावच्छेदकत्वस्यैवाभाव इति बोध्यमिति **श्रीत्यागराजाध्वरीन्द्राः ।**

प्रतिपन्नोपाधावित्यादेः स्वसमानाधिकरणस्वान्यूनसत्ताकाभावप्रतियोगित्वमर्थः। अभावस्य प्रतियोगिन्यूनसत्ताकत्वञ्च प्रातिभासिकनिष्ठं व्यावहारिकपारमार्थिकान्यतरप्रतियोगिकत्वं व्यावहारिकनिष्ठं पारमार्थिकप्रतियोगिकत्वञ्चेत्यन्यतरवत्त्वम्। तथा च व्यावहारिकपारमार्थिकान्यतरनिष्ठं यत् प्रातिभासिकाभावप्रतियोगित्वं यच्च पारमार्थिकनिष्ठं व्यावहारिकाभावप्रतियोगित्वं तदन्यत् यत् स्वसमानाधिकरणाभावप्रतियोगित्वं तदेव मिथ्यात्वम्। व्यावहारिकः पारमार्थिको वा अयं घटः स्वसमानाधिकरणप्रातिभासिकाभावप्रतियोगीति ज्ञानकाले मिथ्यात्वव्यवहाराभावात् पारमार्थिकमिदं पारमार्थिकान्यस्य स्वसमानाधिकरणाभावस्य प्रतियोगीति ज्ञानकाले इदं मिथ्येति व्यवहाराभावाच्च तदन्यदित्यन्तं प्रतियोगित्वविशेषणम्। अत्र पारमार्थिकत्वं ज्ञानानिवर्त्यत्वम्। अस्मिन् कल्पे धूमप्रागभावादेरिव न ज्ञाननिवर्त्यत्वेतरांशवैयर्थ्यम्। अविनाशित्वं वा पारमार्थिकत्वम्। तथा च प्रातिभासिकनिष्ठं यत् स्वसमानाधिकरणाभावप्रतियोगित्वं विनाशिनिष्ठं यत् स्वसमानाधिकरणप्रातिभासिकाभावप्रतियोगित्वं तयोरन्यतरवत्त्वं मिथ्यात्वमिति निष्कर्षः।

न च पारमार्थिके ब्रह्मणि प्रातिभासिकाभावप्रतियोगित्वमादाय मिथ्यात्वापत्तिवारणाय प्रातिभासिकाभावप्रतियोगिताभेदनिवेशस्यावश्यकत्वेऽपि तादृशप्रतियोगितायां निष्ठान्तविशेषणवैयर्थ्यमिति वाच्यम्। निष्ठान्तानुपादाने स्वाप्नगजादौ मिथ्यात्वव्यवहारानुपपत्तिः, दृश्यत्वहेतोः तत्र व्यभिचारापत्तिश्च। स्वप्ने प्रतीतं प्रातिभासिकाभावमादायैव मिथ्यात्वस्य वक्तव्यत्वात् स्वप्ने च व्यावहारिकाभावस्य प्रत्यक्षादिना ज्ञानासंभवात् इन्द्रियाणामुपरतत्वात् अनुभूयमानप्रत्यक्षापलापे स्मरणादेर्वक्तुमशक्यत्वात् 'अथ रथान्' इति श्रुतेश्च स्वाप्नगजतदभावयोरुभयोरपि प्रातिभासिकत्वावश्यकत्वात्।

न च—स्वाप्नगजादौ विद्यमाने प्रातिभासिकाभावप्रतियोगित्वे प्रातिभासिकाभावप्रतियोगिताभिन्नत्वस्य व्यावहारिकस्याभावेऽपि तादृशप्रतियोगिताभेदस्य प्रातिभासिकस्यैव सत्त्वेन प्रातिभासिकाभावप्रतियोगिताभेदविशिष्ट-

प्रातिभासिकाभावप्रतियोगित्वज्ञानादेव तद्दशायां मिथ्यात्वव्यवहारनिर्वाहः, अन्यथा व्यावहारिकपारमार्थिकान्यतरनिष्ठत्वं निवेश्य तादृशविशेषणविशिष्ट-प्रातिभासिकाभावप्रतियोगिताभेदस्य व्यावहारिकस्यैव मिथ्यात्वलक्षणघटकत्वे स्वप्ने इन्द्रियाणामुपरतत्वेन तादृशव्यावहारिकभेदघटितमिथ्यात्वस्य प्रत्यक्षा-संभवेन मिथ्यात्वव्यवहारानिर्वाहात्, जाग्रत्कालिकव्यवहारस्य व्यावहारिका-भावघटितमिथ्यात्वेन निर्वाहः—इति वाच्यम्। प्रातिभासिकं प्रातिभासिकाभाव-प्रतियोगिताभेदमादाय स्वाप्नमिथ्यात्वोपपादने ब्रह्मणोऽपि तादृशप्रतियोगिता-मादाय मिथ्यात्वापत्तेः। जाग्रत्कालिकस्वाप्नाभावव्यवहारस्य व्यावहारिकाभाव-विषयकत्वे 'अथ रथान्' इतिश्रुतिविरोधापत्तेः स्वाप्नगजादीनामतिरिक्त-व्यावहारिकाभावकल्पने गौरवाच्च जाग्रद्दशायामपि प्रातिभासिकपरस्परात्मका-भावघटितमेव मिथ्यात्वं प्रतीयत इति स्वाप्ने मिथ्यात्वव्यवहारनिर्वाहाय निष्ठा-न्तोपादानस्यावश्यकत्वात्।

यत्तु—जागरे इहेदानींस्वाप्नोगजोनास्तीतिप्रत्यये स्वाप्नो गजाभावो न भासते, तस्यानैन्द्रियकत्वेनेन्द्रियजन्यज्ञाने भानानर्हत्वात् तस्य जाग्रत्काले बाधप्रसङ्गेन तद्बुद्धेः भ्रमत्वापत्तेश्चेति।

---

टि· **तादृशप्रतियोगितामिति**। प्रातिभासिकेन प्रातिभासिकाभावप्रतियो-गिताभेदेन विशिष्टां प्रातिभासिकाभावप्रतियोगितामित्यर्थः। प्रातिभासिकाभावप्रतियोगि-ताभेदाज्ञानदशायां तादृशभेदस्य प्रातिभासिकत्वासंभवेन केवलं स्वाप्नगजे स्वसमानाधि-करणाभावप्रतियोगित्वज्ञानदशायां मिथ्यात्वव्यवहारानुपपत्तिरिति **श्रीत्यागराजा-ध्वरीन्द्राः**।

**भानानर्हत्वादिति**। स्वाप्नगजाभावस्य स्वाप्नस्य प्रातिभासिकस्य जाग्रत्काले इन्द्रियजन्यप्रत्यक्षविषयत्वासंभवेऽपि साक्षिवेद्यत्वावश्यकतया साक्षिप्रत्यक्षमादाय स्वाप्नगजादेः जागरे प्रातिभासिकाभावघटितमिथ्यात्वव्यवहारस्योपपत्तिः; साक्षिणः प्रत्यक्षत्वात् वर्त-मानमात्रविषयत्वे तु स्वाप्नगजाभावप्रत्ययस्य स्मृतित्वसंभवेन तमादाय मिथ्यात्वव्यवहार-सिद्धिः, इति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः**।

एवमपि यस्य चैत्रत्वादिजातिविशेषस्य जाग्रत्काले न प्रत्यक्षं किन्तु स्वप्न एव नानाव्यक्तिषु तदवच्छिन्नाभावस्य व्यावहारिकत्वेनाक्लृप्तत्वात् व्यावहारिकतत्कल्पने गौरवेण प्रातिभासिकाभावघटितस्यैव मिथ्यात्वस्य वक्तव्यतया प्रतियोगितायां निष्ठान्तानुपादाने तादृशचैत्रत्वादिजात्यवच्छिन्ने दृश्यत्वस्य व्यभिचार इति तद्वारणाय निष्ठान्तम् ।

यत्तु—तत्रापि द्रव्यत्वादिसामान्यधर्मावच्छिन्नाभावस्य व्यावहारिकस्य क्लृप्तत्वेन तादृशाभावमादायैव मिथ्यात्वं सूपपादमिति ।

तन्न । तादृशजात्यवच्छिन्ने द्रव्यत्वादिसामान्यस्याप्यज्ञाने तत्र तत्सत्त्वे मानाभावेन सामान्याभावस्य न तत्प्रतियोगिकत्वमिति मिथ्यात्वोपपादनस्यासंभवात् ।

यत्तु सत्तादात्म्यस्य तत्राभाने अपसिद्धान्तप्रसङ्गेन तादृशधर्मावच्छिन्नाभावमादायैव तत्र मिथ्यात्वोपपादनसंभव इति ।

अत्र ब्रूमः । येन रूपेण येन संबन्धेन येन चावच्छेदकविशेषेण यदधिकरणतया यत् प्रतिपन्नं तेन रूपेण तेन संबन्धविशेषेण तेन चावच्छेदकविशेषेण तदधिकरणकात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वमिति वदतां तद्व्यापकधर्मावच्छिन्नाभावप्रतियोगित्वस्य मिथ्यात्वरूपत्वासंभवात् घटत्वविशिष्टवति सत्तादात्म्यावच्छिन्नाभावघटितमिथ्यात्वस्याप्यसंभवात् निरुक्तचैत्रत्वादिजात्यवच्छिन्नस्य प्रातिभासिकाभावघटितमिथ्यात्वस्यैव वक्तव्यतया निष्ठान्तानुपादाने तत्र व्यभिचारापत्त्या तदुपादानमावश्यकमिति ।

यच्च—पारमार्थिकनिष्ठं व्यावहारिकाभावप्रतियोगित्वं तदन्यदित्यप्यसंगतम् , भवन्मते पारमार्थिकनिष्ठव्यावहारिकाभावप्रतियोगित्वस्याप्रसिद्ध्या साध्याप्रसिद्धेरिति ।

---

**टि. मिथ्यात्वस्याप्यसंभवादिति** । तथा च तादृशजातिविशेषरूपेण मिथ्यात्वव्यवहारो न सिद्ध्यतीति भावः ।

'इह सन्न' इति प्रत्ययाभावात् व्यावहारिकः सत्तादात्म्यावच्छिन्नाभाव एवाप्रसिद्ध इति **श्रीत्यागराजाध्वरीन्द्राः** ।

तन्न । पारमार्थिकस्यापि संबन्धान्तरावच्छिन्नाभावप्रतियोगित्वस्य प्रसिद्धेः ।

यद्वा, व्यावहारिकनिरूपितत्वपारमार्थिकनिष्ठत्वोभयाभाववत्त्वमन्यान्तेन विवक्षितमिति नाप्रसिद्धिः ।

न च—प्रतियोगितायाः प्रतियोगिस्वरूपत्वपक्षे साध्याप्रसिद्धिर्दुर्वारा, घटादिनिष्ठव्यावहारिकाभावप्रतियोगित्वप्रातिभासिकाभावप्रतियोगित्वयोरैक्येन भेदद्वयविशिष्टत्वस्य तादृशप्रतियोगितायामसत्त्वात् ; प्रतियोगितायाः प्रतियोगितावच्छेदकरूपत्वपक्षेऽपि साध्याप्रसिद्धिरेव, प्रातिभासिकव्यावहारिकाभावप्रतियोगित्वयोरपि तदवच्छेदकरजतत्वरूपत्वेनाभिन्नत्वादिति—वाच्यम् । प्रतियोगितायाः प्रतियोगिरूपत्वानङ्गीकारात् । किन्तु प्रतियोग्यपेक्षया अतिरिक्तः कश्चन धर्मविशेषः प्रतियोगिता । प्रतियोगिस्वरूपत्वेऽपि तस्या निरूप्यनिरूपकभावापन्नप्रतियोगितात्वेन व्यावहारिकप्रातिभासिकाभावप्रतियोगित्वयोर्भेद आवश्यक

---

**टि. संबन्धान्तरावच्छिन्नाभावेति** । पारमार्थिकनिष्ठत्वं वैज्ञानिकं न तु वास्तविकम् , एतत्सूचनायैव लघुचन्द्रिकायां घटादेः पारमार्थिकत्वग्रहदशायां घटादावतिव्याप्तिवारकतया निष्ठान्तसार्थक्यमुपपादितम् , तथा च नाप्रसिद्धिरिति **श्रीविठ्ठलमिश्राः** ।

पारमार्थिकनिष्ठत्वमित्यत्र पारमार्थिकपदेन पारमार्थिकत्वेन ज्ञायमानमेव विवक्षितमिति नाप्रसिद्धिरिति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः** ।

अनवच्छिन्नानन्दस्य ब्रह्मणःप्रत्यग्रूपत्वेऽपि मम निरतिशयानन्दो नास्ति इति लोकप्रतीतिसिद्धमविद्यामूलकं व्यावहारिकाभावं प्रति प्रतियोगित्वं प्रसिद्ध्यतीति **श्रीत्यागराजाध्वरीन्द्राः** ।

**साध्याप्रसिद्धिर्दुर्वारेति** । व्यावहारिकपारमार्थिकान्यतरनिष्ठत्वप्रातिभासिकनिरूपितत्वोभयाभाववत्त्वे सति पारमार्थिकनिष्ठत्वव्यावहारिकनिरूपितत्वोभयाभाववती या स्वसमानाधिकरणाभावप्रतियोगिता तद्वत्त्वमिति परिष्कारे प्रतियोगितायां प्रतियोगिताविशेषभेदानिवेशेन साध्याप्रसिद्धिर्न संभवतीति विभावनीयम् ।

**प्रतियोगित्वयोर्भेद आवश्यक इति** । स्वसमानाधिकरणाभावप्रतियोगिता-

एव । अन्यथा ध्वंसात्यन्ताभावादिप्रतियोगितानामैक्यापत्त्या घटो ध्वस्त इति धीकाले घटः अत्यन्ताभावप्रतियोगी न वेति संशयानापत्तेः । प्रतियोगितावच्छेदकरूपत्वेऽप्युक्तापत्तिर्दुर्वारैव ।

यत्तु—एवमेतत्पक्षे भेदस्याव्याप्यवृत्तित्वे सिद्धसाधनं दुर्वारम् । प्रातिभासिकाभावप्रतियोगितायामपि प्रातिभासिकव्यावहारिकोभयनिष्ठायां प्रातिभासिकावच्छेदेन व्यावहारिकपारमार्थिकान्यतरनिष्ठप्रातिभासिकाभावप्रतियोगितात्वावच्छिन्नभेदसंभवात् । भवद्भिर्भेदस्याव्याप्यवृत्तित्वानङ्गीकारेऽपि प्रकृतानुमानबलेनैव तादृशभेदविशिष्टप्रातिभासिकाभावप्रतियोगितासिद्धिमादायार्थान्तरस्य दुर्वारत्वादिति ।

तन्न—भेदस्याव्याप्यवृत्तित्वानङ्गीकारात् ।

यद्वा, उक्तभेदद्वयावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्य साध्यत्वान्नार्थान्तरम् । न च पारमार्थिकनिष्ठत्वावच्छिन्नप्रतियोगिताकभेदावच्छिन्नाधेयतानिरूपिताधिकरणत्वमात्रस्य साध्यत्वसंभवेन शेषवैयर्थ्यमिति वाच्यम् । तस्य

---

त्वविशिष्टानुयोगिकः तादृशप्रातिभासिकप्रतियोगितात्वविशिष्टप्रतियोगिताकभेदो निविष्टः । स चास्त्येव प्रतियोगितायां घटे द्रव्ये घटत्वद्रव्यत्वाभ्यां भेद इवेति भावः ।

**संशयानापत्तेरिति** । परमाणुः न ध्वंसप्रतियोगीति ज्ञानकाले परमाणुर्नास्तीति प्रतीत्यनुपपत्तिरपि बोध्या ।

**भेदस्याव्याप्यवृत्तित्वानङ्गीकारादिति** । भेदस्याव्याप्यवृत्तित्वपक्षेऽपि निरवच्छिन्नविशेषणतासंबन्धेन प्रातिभासिकाभावप्रतियोगिताभेदवत्त्वस्य स्वसमानाधिकरणाभावप्रतियोगितायां निवेशान्न प्रातिभासिकावच्छेदेन निरुक्तप्रतियोगिताभेदमादाय सिद्धसाधनं संभवति । प्रातिभासिकाभावप्रतियोगिता तादृशप्रतियोगिताभेदवती नेति प्रतीतिबाधात् प्रकृतानुमानबलेनैव तादृशभेदविशिष्टप्रातिभासिकाभावप्रतियोगितासिद्धिमादाय नार्थान्तरमिति बोध्यम् ।

**नार्थान्तरमिति** । प्रातिभासिकावच्छेदेन तादृशाभावप्रतियोगितायामुक्तभेदसत्त्वेऽपि तद्विशिष्टाधिकरणत्वस्य व्यावहारिकघटादावसंभवादिति भावः ।

लक्षणान्तरत्वात्, अखण्डाभावघटकतया शेषसार्थक्याच्च।

यत्तु अखण्डाभावघटकतया कथञ्चिदितरांशस्य सार्थक्यसंभवेऽपि प्रातिभासिकाभावप्रतियोगितायामपि प्रातिभासिकाभावप्रतियोगितात्वावच्छिन्नभेदस्य व्याप्यवृत्तेरेव प्रकृतानुमानबलेन सिद्धिमादायार्थान्तरं दुर्वारमिति।

तन्न। दत्तोत्तरत्वात्।

यत्तु—घटाद्यधिकरणे तदत्यन्ताभावासिद्धावपि घटाभावाधिकरण एव घटाद्यधिकरणतासिद्धिमादायार्थान्तरम्। न च स्वाधिकरणताव्यापकाभावप्रतियोगित्वं विवक्षितमिति नार्थान्तरमिति वाच्यम्। स्वाधिकरणे तदत्यन्ताभावासिद्धावपि स्वाधिकरणतासमानाधिकरणभेदप्रतियोगितावच्छेदकेऽप्यभावे तादृशभेदप्रतियोगितावच्छेदकत्वावच्छिन्नभेदसिद्धिमादायार्थान्तरस्य दुर्वारत्वादिति।

तन्न। स्वाधिकरणतासमानाधिकरणभेदप्रतियोगितावच्छेदके तद्भेदस्यौपाधिकस्य संभवेऽपि अनौपाधिकस्य अवच्छेदकत्वविरोधिनो वा भेदस्यासंभवान्नार्थान्तरप्रसक्तिः। अयमर्थः पूर्वमेव सम्यङ्निरूपितः।

अत एव—एतेन प्रातिभासिकनिष्ठं यत् स्वसमानाधिकरणाभावप्रतियोगित्वं विनाशिनिष्ठं यदप्रातिभासिकस्य स्वसमानाधिकरणाभावस्य प्रतियोगित्वं तयोरन्यतरवत्त्वं मिथ्यात्वमिति निष्कर्षः इत्यपि निरस्तम्, प्रातिभासिकनिष्ठप्रातिभासिकाभावप्रतियोगिताया घटादौ सिद्धिमादायार्थान्तरस्यानायासेन संभवादिति—परास्तम्।

---

**टि॰ भेदस्यासंभवादिति।** साध्यकोटौ अनौपाधिकोऽवच्छेदकत्वविरोधी वा भेदो निविष्ट इति भावः।

उक्तभेदप्रतियोगितावच्छेदकत्ववद्विशेष्यकतदवच्छिन्नप्रतियोगिताकभेदप्रकारकज्ञानस्य घटो न घट इति ज्ञानस्येवाहार्यत्वापत्त्या अनुमितित्वायोगः। घटाभावत्वावच्छिन्ने घटाधिकरणतासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वावच्छिन्नभेदग्रहः अनाहार्यस्संभवतीति यद्युच्यते, तदा प्रकृतानुमित्या घटाभावत्वावच्छिन्ने तादृशभेदप्रतियोगितानवच्छेदकत्वावगाहने मिथ्यात्वं सिद्धमितीष्टापत्तिः। यत्र विशिष्टपदार्थः साध्यते तत्र तद्घटकविशेषणांशे यत्कि-

प्रातिभासिकवृत्तिप्रतियोगितायाः पक्षे व्यावहारिके असंभवात् ।

यत्तु—एवं घटादेर्ज्ञानबाध्यत्वाभावरूपपारमार्थिकत्वसद्भावेऽपि विनाशित्वाङ्गीकारमात्रेण निरुक्तसाध्यसिद्ध्या अर्थान्तरं दुर्वारमित्युक्तम् ।

तन्न । विनाशिनिष्ठं यत् स्वसमानाधिकरणाप्रातिभासिकाभावप्रतियोगित्वं तदेव मिथ्यात्वम् । न तु विनाशित्वमात्रम् । एवञ्च तत्सिद्धौ नार्थान्तरम् । न च-विनाशिनिष्ठत्वं व्यर्थम्, तदविशेषितस्यापि निरुक्तप्रतियोगित्वस्य प्रपञ्चे सत्यत्ववादिना अनङ्गीकारादिति—वाच्यम् । लक्षणत्वपक्षे ब्रह्मण्यतिव्याप्तिवारकतया साध्यत्वे ब्रह्मवत् सत्यत्वविरोधिमिथ्यात्वासिद्ध्या अर्थान्तरवारकतया च सार्थक्यात् ।

एतेन—यदि च स्वमते मिथ्यात्वव्यवहारप्रयोजकं यद्रूपं तदेव साध्यम्, तादृशाभावप्रतियोगित्वमात्रं न तादृशम्, प्रतियोगिनि पारमार्थिकत्वज्ञानदशायां तादृशाभावप्रतियोगित्वज्ञानेऽपि मिथ्यात्वव्यवहाराभावात् इत्युच्यते, तदा विनाशिनिष्ठत्वविशेषितमपि तत्तथैव । विनाशित्वज्ञानेऽपि पारमार्थिकत्वज्ञानसंभवात्, ज्ञानबाध्यत्वाभावरूपपारमार्थिकत्वेन विनाशित्वस्याविरोधादिति परास्तम् ।

मिथ्यात्वघटकाभावो व्यावहारिकः पारमार्थिको वेत्यद्वैतिनां सिद्धान्तः ।

---

श्चित्सिद्धिमादायार्थान्तरकथनं न कुत्रापि दृष्टचरम् । न हि वह्निः अद्विष्ठातीन्द्रियधर्मसमवायी इत्यनुमाने भर्जनकपालस्थवह्निसंयोग एवाद्विष्ठत्वसिद्धिमादायार्थान्तरं कथयन्ति प्रामाणिकाः इति **श्रीत्यागराजाध्वरीन्द्राः** ।

**असंभवादिति** । तथा च बाधितत्वान्न तादृशप्रतियोगितामादायार्थान्तरम् । अत एव इदं पृथिवीत्वाभावद्रव्यत्वाभावान्यतरवत् जलत्वात् इत्यनुमाने नैयायिकसंमते पक्षे जले बाधितद्रव्यत्वाभावसिद्धिमादाय नार्थान्तरमुद्भाव्यते । प्रातिभासिकान्यत्वपर्यवसित ब्रह्मप्रमातिरिक्ताबाध्यत्वरूपपक्षतावच्छेदकविशिष्टे प्रातिभासिकवृत्तिप्रातिभासिकाभावप्रतियोगितासिद्धिर्नैवोक्तानुमित्या भवितुमर्हतीति बोध्यम् ।

**अर्थान्तरमिति** । विनाशित्वे सति तन्निष्ठप्रतियोगिता विशेष्येऽपि सिद्ध्यतीत्यभिमानेनेदम् ।

यत्तु—तत्राद्यपक्षोऽनुपपन्नः, प्रपञ्चाभावस्य व्यावहारिकत्वे तादृशाभावस्यापि प्रकृतानुमानेनात्यन्ताभावबोधनात् तादृशाभावप्रतियोगिनि प्रपञ्चे निषेधापेक्षयाऽधिकसत्ताकत्वापत्तेः। यत् यद्धर्मिकस्वाभावाभावबोधकप्रमाणकं तत् तद्धर्मिकस्वाभावसत्ताधिकसत्ताकमिति व्याप्तेः। यथा रजते नेदं रजतमिति भ्रमोत्तरं इदंनारजतमिति प्रत्यक्षप्रमित्युत्पत्तौ रजतत्वं रजतधर्मिकस्वाभावाभावबोधकप्रमाणकं रजतधर्मिकरजतत्वाभावगतप्रातिभासिकसत्तापेक्षयाऽधिकसत्ताकम्। इत्थञ्च प्रपञ्चापेक्षया तन्निषेधस्य न्यूनसत्ताकत्वान्नान्यूनसत्ताकाभावघटितमिथ्यात्वसंभव इति।

तन्न युज्यते। घटध्वंससमये कपाले घटस्य तत्प्रागभावस्य च निषेधेऽपि घटस्य तत्प्रागभावापेक्षया अधिकसत्ताकत्वाभावेन व्यभिचारात्। यदि व्याप्तावत्यन्ताभाव एव निविष्ट इत्युच्यते, तदाऽपि ध्वंसप्रागभावाधिकरणे अत्यन्ताभावमनङ्गीकुर्वतां प्राचां मते ध्वंसावच्छिन्नकपालनिष्ठप्रातिभासिकघटे पूर्वोक्तव्याप्तेर्व्यभिचारात्। तादृशकपाले घटात्यन्ताभावस्याभावेन तादृशकपालनिष्ठप्रातिभासिकघटे तद्धर्मिकस्वाभावाभावबोधकप्रमाणकत्वसत्त्वेऽपि तद्धर्मिकस्वाभावाधिकसत्ताकत्वाभावात्। तत्र व्यभिचारवारणाय स्वाभावाबोधकत्वे सति स्वाभावाभावबोधकत्वरूपं स्वाभावाभावमात्रबोधकत्वमापादककोटौ निवेशनीयम्। तथा च घटध्वंसावच्छिन्नकपाले घटतदत्यन्ताभावान्यतरत्वावच्छिन्नाभावग्राहकप्रत्यक्षादिप्रमाणस्य घटाभावग्राहकत्वेन घटाभावाभावमात्रग्राहकत्वाभावान्न व्यभिचारः। एवञ्च मिथ्यात्वानुमानपक्षतावच्छेदकस्य प्रपञ्चतदभावोभयसाधारणतया उभयोः मिथ्यात्वसाधकमनुमानं प्रपञ्चाभावाभावमात्रबोधकं न भवतीति न प्रपञ्चस्याधिकसत्ताकत्वापत्तिः।

यत्तु—उक्तरीत्या मात्रपदार्थस्यापादककोटौ निवेशेऽपि उक्तघटे व्यभिचारवारणं न संभवति। तादृशाभावाग्राहकस्य घटाभावाभावमात्रग्राहकस्य घटाभावोनास्तीत्याकारकस्यापि प्रत्यक्षस्य संभवात्। एवं ब्रह्मणि आकाशाभावो नास्ति इत्याकारकस्य प्रमाणस्य संभवात् प्रपञ्चस्य निषेधापेक्षयाऽधिकसत्ताकत्वापत्तिरिति।

तन्न। यो यन्निष्ठविशेष्यतानिरूपितस्वाभावनिष्ठप्रकारताशालिप्रमिति-कान्यत्वे सति यन्निष्ठविशेष्यतानिरूपितस्वाभावाभावनिष्ठप्रकारताशालिप्रमितिकः सः तन्निष्ठस्वाभावापेक्षयाऽधिकसत्ताकः इति व्याप्तौ व्यभिचाराभावात्। तादृश-कपालनिष्ठघटस्य कपालधर्मिकस्वाभावप्रकारकप्रमितिकत्वात्। वियदादेश्च ब्रह्म-धर्मिकस्वाभावप्रकारकप्रमितिकत्वेन तदन्यत्वाभावात् न स्वाभावापेक्षया अधिक-सत्ताकत्वापत्तिः। न च—उक्तव्याप्त्यसिद्धिः, रजते नेदंरजतमितिभ्रमोत्तरं इदं-नारजतमितिप्रमितिस्थलेऽपि रजतत्वस्य रजतधर्मिकस्वाभावप्रकारकप्रमितिका-न्यत्वं न संभवति, रजतेऽपि संबन्धान्तरावच्छिन्नप्रतियोगिताकरजतत्वाभाव-प्रकारकप्रमितिसत्त्वादिति—वाच्यम्। यो यन्निष्ठविशेष्यतानिरूपितयत्संबन्धा-वच्छिन्नस्वनिष्ठप्रतियोगिताकाभावनिष्ठप्रकारताशालिप्रमितिकान्यः तत्त्वस्या-पादककुक्षौ निवेशात्। रजते संबन्धान्तरावच्छिन्नप्रतियोगिताकरजतत्वाभाव-प्रकारकप्रमितिसत्त्वेऽपि समवायसंबन्धावच्छिन्नप्रतियोगिताकस्वाभावनिष्ठप्रकार-ताशालिप्रमित्यसत्त्वेन नाप्रसिद्धिः।

यद्वा, पूर्वोक्तस्थले व्यभिचारवारणाय यत् यद्धर्मिकयदपेक्षन्यूनसत्ताका-भावाभावबोधकप्रमाणकं तत् तद्धर्मिकतदभावापेक्षया अधिकसत्ताकमिति व्याप्तिः स्वीक्रियते। रजते नेदंरजतमितिज्ञानानन्तरं इदंनारजतमितिज्ञानेन रजत-त्वसिद्धिस्थले रजतत्वापेक्षया निषेधस्य न्यूनसत्ताकत्वान्न रजतत्वस्याधिकसत्ता-कत्वानुपपत्तिः।

---

**टि. न रजतत्वस्याधिकसत्ताकत्वानुपपत्तिरिति।** अभावस्य स्वप्रति-योगिन्यूनसत्ताकत्वग्राहकञ्च प्रतियोगिमिथ्यात्वग्राहकप्रमाणशून्यत्वे सति अभावमिथ्यात्व-ग्राहकं प्रमाणम्। घटध्वंसावच्छिन्नकपालनिष्ठः घटात्यन्ताभावः न घटन्यूनसत्ताकः, घटो नास्तीतिप्रतीतिरूपस्य प्रतियोगिमिथ्यात्वग्राहकप्रमाणस्य सत्त्वेन तच्छून्यत्वाभावात्। किन्तु घटसमसत्ताकः (प्रातिभासिकः)। तथा च घटाभावाधिकसत्ताकत्वाभाववति तादृशघटे घटन्यूनसत्ताकाभावाभावबोधकप्रमाणकत्वहेतोरभावान्न व्यभिचारः। आकाशमिथ्यात्व-ग्राहकस्य प्रमाणस्य सत्त्वेन आकाशाभावस्य न्यूनसत्ताकत्वाभावेन तदभावबोधकप्रमाण-कत्वेऽपि आकाशस्य नाकाशाभावाधिकसत्ताकत्वमिति बोध्यम्।

एतेन — स्वावच्छिन्नयत्संबन्धावच्छिन्नाभावत्वावच्छिन्नाभावप्रकारक-यद्धर्मिकप्रमितिको यो धर्मः स तन्निष्ठतत्संबन्धावच्छिन्नस्वावच्छिन्नाभावापेक्षयाऽधिकसत्ताकवस्तुवृत्तिरिति नियमे न कोऽपि दोषः। रजतधर्मिकसमवायावच्छिन्नरजतत्वाभावाभावप्रकारकप्रमितिकत्वस्य रजतत्वाभावाधिकसत्ताकत्वस्य च रजतत्वे सत्त्वादित्यपि न। तथा सति उक्तकपालनिष्ठघटवृत्तिप्रातिभासिकघटत्वे व्यभिचारात्। तत्र स्वावच्छिन्नसमवायसंबन्धावच्छिन्नाभावाभावप्रकारककपालविशेष्यकप्रमितिकत्वस्य सत्त्वेऽपि तादृशकपालनिष्ठसमवायावच्छिन्नघटाभावाधिकसत्ताकत्वविरहात्। उक्तरीत्या मात्रपदार्थनिवेशेऽपि नोक्तव्यभिचारवारणसंभवः। तत्र कपालविशेष्यकसमवायावच्छिन्नघटत्वावच्छिन्नाभावप्रकारकप्रमित्यसत्त्वेन तादृशप्रमितिकान्यत्वस्यापि तादृशघटत्वे सत्त्वात्। कपाले समवायेन घटो नास्ति इतिप्रतीतेः तन्मते प्रमात्वासंभवात्। ध्वंसस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य प्राचीनैरङ्गीकारेऽपि संबन्धा-

---

**टि॰** प्राचीननैयायिकमतावलम्बिनः अद्वैतिनो मतेन घटध्वंसावच्छिन्नकपालनिष्ठप्रातिभासिकघटे व्यभिचारो निरूपितः। प्राचीननैयायिकमते तत्र घटतदभावयोः प्रातिभासिकयोरस्वीकारात्। एवञ्च तन्मते रजतभ्रमानन्तरजाते नात्ररजतमिति बाधज्ञाने इव तादृशकपाले घटतदभावयोरारोपानन्तरं जाते घटस्तदभावश्चनास्तीतिज्ञाने न प्राचीननैयायिकमते इव घटध्वंसो विषयीक्रियते, अपि तु अतिरिक्त एवाभावः, इति तस्य संबन्धावच्छिन्नप्रतियोगिताकत्वे न कोऽपि विरोधः।

अथ वा, संबन्धान्तरावच्छिन्नाभावप्रमितिवारणाय यत्संबन्धान्यसंबन्धानवच्छिन्नस्वावच्छिन्नप्रतियोगिताकाभावप्रकारकयद्धर्मिकप्रमितिकान्यत्वे सतीति निवेशनीयम्। इत्थञ्च तत्र घटस्तदभावश्चनास्तीतिप्रतीतेः घटध्वंसविषयत्वेऽपि समवायान्यसंबन्धानवच्छिन्नप्रतियोगिताकघटाभावप्रमितित्वेन मात्रार्थान्तर्भावेणापि निरुक्तव्यभिचारवारणं संभवतीति बोध्यम्।

घटध्वंसावच्छिन्नकपालनिष्ठप्रातिभासिकघटे व्यभिचारवारणाय स्वस्वाभावोभयमिथ्यात्वग्राहकप्रमाणशून्यत्वे सति यत् यद्धर्मिकस्वाभावाभावबोधकप्रमाणकं तत् तद्धर्मिक-

वच्छिन्नप्रतियोगिताकत्वस्यानङ्गीकारात्। तस्मात् स्वाभावप्रकारकयद्धर्मिक-प्रमितिको योऽभावः स स्वाधिकसत्ताकस्वप्रतियोग्यधिकरणवृत्तिरिति व्याप्ति-रङ्गीकार्या। तत्र च नोक्तघटे व्यभिचारः। तादृशकपाले समवायावच्छिन्न घटात्यन्ताभावस्य घटस्य च प्रातिभासिकत्वेऽपि तादृशघटाभावाधिकसत्ताकस्य घटध्वंसस्य सत्त्वात्। प्राचीनमते घटात्यन्ताभावस्य घटतद्ध्वंसतत्प्रागभावैत-त्त्रितयप्रतियोगिकत्वाङ्गीकारात्। एवञ्च प्रपञ्चाभावस्यापि स्वाभावप्रकारक-ब्रह्मविशेष्यकप्रमितिकत्वात् स्वाधिकसत्ताकप्रपञ्चवद्वृत्तित्वापत्त्या प्रपञ्चस्य पारमार्थिकत्वापत्तिर्दुर्वारेति—निरस्तम्।

यत्तु—प्रपञ्चाभावस्य पारमार्थिकत्वपक्षोऽप्ययुक्तः; अद्वैतहानेः। न च तस्य ब्रह्मस्वरूपत्वान्नाद्वैतहानिरिति वाच्यम्। अभावत्वविशिष्टस्वरूपेणाभावस्य ब्रह्मस्वरूपत्वासंभवात् केवलरूपेण ब्रह्मस्वरूपतास्वीकारस्य व्यर्थत्वात्। न च भावाभावयोर्विरोधभङ्गार्थं विषमसत्ताकत्वस्यावश्यकतया अभावत्वविशिष्टस्य पारमार्थिकत्वासंभवात् तत्तादात्म्यापन्नकेवलरूपस्य तत्स्वीकार इति वाच्यम्। तत्प्रतियोगिकाभावत्वरूपेणैवाभावस्य प्रतियोगिविरोधित्वेन विरोधभङ्गार्थं तेनैव रूपेण प्रतियोगिभिन्नसत्ताकत्वस्यावश्यकत्वात् तदस्वीकृत्य केवलब्रह्मरूपेण भिन्न-सत्तास्वीकारस्य व्यर्थत्वेनाभावस्य ब्रह्मरूपतास्वीकारस्य विफलत्वादिति।

तन्न। अभावत्वविशिष्टस्य ब्रह्मरूपत्वासंभवात् तत्प्रतियोगिकाभावत्वो-

---

· स्वाभावसत्ताधिकसत्ताकमिति व्याप्तिशरीरं वक्तव्यम्। तत्र च न कोऽपि दोषः। स्वाभाव-प्रकारकयद्धर्मिकप्रमितिकः योऽभावः सः स्वाधिकसत्ताकस्वप्रतियोग्यधिकरणवृत्तिरिति व्याप्तिः न संभवति। घटध्वंसावच्छिन्नकपालनिष्ठघटे व्यभिचारात्। न च तत्र घटात्यन्ता-भावप्रतियोगिनः तदधिकसत्ताकस्य घटध्वंसस्य कपाले सत्त्वान्न व्यभिचार इति वाच्यम्। घटात्यन्ताभावघटध्वंसाभावघटप्रागभावाभावानां समनियतत्वेनाभिन्नतया घटध्वंसे घटा-भावप्रतियोगित्वस्य स्वीकारेऽपि प्रातिभासिकघटात्यन्ताभावस्य घटध्वंसवत्यपि सत्त्वेन तदभावसमनैयत्यविरहात् घटध्वंसस्य प्रातीतिकघटात्यन्ताभावप्रतियोगित्वाभावेन व्यभिचार-तादवस्थ्यादिति **श्रीत्यागराजाध्वरीन्द्राः**।

पलक्षितस्यापि प्रतियोगिविरोधित्वात् अभावत्वोपलक्षितस्य पारमार्थिकस्यापि ब्रह्माभिन्नत्वेनाद्वैतहानेरभावात् पारमार्थिकाभावपक्षस्यादुष्टत्वात् ।

यत्तु—तद्धर्मावच्छिन्नाधिकरणनिष्ठाभावीयतद्धर्मावच्छिन्नप्रतियोगित्वस्य साध्यत्वे दृष्टान्ते साध्यवैकल्यम् , शुक्तिरूप्यत्वावच्छिन्नाधिकरणे पारमार्थिकत्वाकारेण तदभावाङ्गीकारेऽपि शुक्तिरूप्यत्वावच्छिन्नाभावानङ्गीकारात् , नास्तिनासीन्नभविष्यतीतिप्रतीयमानत्रैकालिकनिषेधं प्रति स्वरूपेणापणस्थं रूप्यं पारमार्थिकत्वाकारेण प्रातिभासिकं वा प्रतियोगीति भवत्सिद्धान्तादिति ।

तन्न । रूप्यंनास्तिनासीन्नभविष्यतीतिबाधज्ञानस्य लौकिकपरमार्थरजतस्यैव स्वरूपेण निषेधप्रतियोगित्वावगाहित्वे भ्रमबाधयोः भिन्नविषयकत्वरूपवैयधिकरण्यापत्तिः, अप्रसक्तप्रतिषेधापत्तिश्च, शुक्तौ व्यावहारिकरूप्यस्य तादात्म्येनज्ञातत्वरूपप्रसक्तेरभावात् । अतः प्रातिभासिकस्यैव निषेधः । न चैवं 'त्रैकालिकनिषेधं प्रति स्वरूपेणापणस्थं रूप्यं पारमार्थिकत्वाकारेण प्रातिभासिकं वा प्रतियोगि' इति पूर्वाचार्यवचनविरोध इति वाच्यम् । अस्याचार्यवचसः पारमार्थिकलौकिकरजततादात्म्येन प्रतीतं प्रातिभासिकं रजतं प्रतियोगीत्यर्थः । तच्च प्रतियोगित्वं स्वरूपेण पारमार्थिकत्वेन वेत्यनास्थायां वाशब्दः । न चैवं आपणस्थरूप्यमित्यस्य प्रातीतिकरजते व्यावहारिकरजततादात्म्येन प्रतीतत्वबोधकस्य आचार्यवचने उपादानं व्यर्थमिति वाच्यम् । पुरोवर्तितादात्म्येनैव रजतं प्रतीयते इति न नियमः लौकिकपारमार्थिकरजततादात्म्येनापि प्रतीयते इति प्रतिपादयितुं तदुपादानात् ।

यत्तु—इदंरजतमितिभ्रमे प्रातीतिके व्यावहारिकरजततादात्म्यभानाङ्गीकारो व्यर्थः । न च सद्रजतप्राप्तिर्भवतु इतीच्छावतः तत्र प्रवृत्तिनिर्वाहाय तत्तादात्म्यभानमावश्यकमिति वाच्यम् । व्यावहारिकरूप्यनिष्ठत्वोपलक्षितरजतत्वस्य प्रातीतिकरूप्येऽपि स्वीकारात् शुक्तिगतस्येदन्त्वादेरिव सत्त्वस्यापि तत्र

---

**टि. प्रतियोगिविरोधित्वादिति** । यथा जन्याभावरूपस्य घटध्वंसस्य जन्यत्वविशिष्टाभावत्वेनेव जन्यत्वोपलक्षिताभावत्वेनापि घटविरोधिता तथेति भावः ।

प्रत्ययाच्च सद्रजतमितिप्रत्ययोपपत्तेः व्यावहारिकरूप्यतादात्म्यारोपस्य व्यर्थत्वात्, तं विनाऽप्युक्तप्रवृत्त्युपपत्तेः। न च—व्यावहारिकरजतत्वादिकं प्रातीतिके न स्वीक्रियते, प्रातीतिकादपि व्यावहारिकरजतादिकार्यापत्तेः। प्रातीतिके प्रातीतिकस्यैव रजतत्वादेः संबन्धः कल्प्यते। तथा च व्यावहारिकेऽनुभूतं यद्रजतत्वादि तद्विशिष्टविषयेच्छावतां प्रातीतिके प्रवृत्तिनिर्वाहायोक्ततादात्म्यारोप आवश्यक इति—वाच्यम्। व्यावहारिकरजतनिष्ठरजतत्वादेः प्रातीतिकव्यावृत्तत्वे रजतविशिष्टवैशिष्ट्यावगाहिबुद्धौ रजतत्वावच्छिन्नप्रकारकनिश्चयस्य भ्रमप्रमासाधारण्येनैकहेतुतायाः किञ्चिद्धर्मावच्छिन्नविशेष्यकरजतप्रकारकनिश्चयस्य भ्रमसाधारणैकप्रतिबध्यप्रतिबन्धकभावस्य रजतादिलिङ्गकानुमितौ तल्लिङ्गकपरामर्शादेः भ्रमसाधारणैकहेतुतायाश्चानुपपत्तेः। व्यावहारिकत्वविशिष्टकारणकूटस्यैव फलोत्पत्तिव्याप्यतास्वीकारेण प्रातीतिकात् व्यावहारिकरजतादिकार्यापत्तेर्वारणसंभवादिति।

तन्न। उक्तनव्यमतावलम्बने रजतभ्रमसामान्ये लौकिकपरमार्थरजततादात्म्यारोपस्योपेक्षणीयत्वेऽपि कादाचित्के सद्रजतमितिभ्रमे व्यावहारिकरजततादात्म्यभानं संभवत्येव। प्रातीतिके तदुत्पत्तिकालोत्तरमुत्पन्नेन दोषेणानधिष्ठानस्यापि व्यावहारिकस्य तादात्म्यारोपदर्शनात्। व्यावहारिकरजतस्यासंनिधानस्थले तदंशे स्मृतिरूपभ्रमस्य संभवात्। प्रत्यक्षत्वपरोक्षत्वयोरपि समावेशोपगमात्। तथा च कादाचित्कव्यावहारिकतादात्म्यप्रतीतिमादाय पूर्वोदाहृतवचनं संगमनीयम्। तदुक्तं **लघुचन्द्रिकायां** 'कादाचित्कौ ताववलम्ब्य प्राचीनोक्तिर्नेया' इति।

यत्तु—एवमपि व्यावहारिकतादात्म्यभानं न संभवति, एकत्र तादात्म्येनारोपितस्य प्रातिभासिकस्यान्यत्र तादात्म्येनारोपाभावात्, विषमसत्ताकयोस्तादात्म्येन भानस्थले स्वोपादानाज्ञानविषयत्वनियमात्, स्वोपादानाज्ञाननिवर्तकज्ञानविषय एव तादात्म्यारोपाच्च। व्यावहारिकरजतांशे स्मरणात्मकस्य इदंसद्रजतमितिज्ञानस्याभ्युपगमे अनिर्वचनीयरजतोत्पत्तिकल्पनं व्यर्थम्। ग्रहणस्मरणा-

त्मकज्ञानद्वयेनैव प्रवृत्तिनिर्वाहात्। प्राभाकरैरपि ज्ञानद्वयीयविषयतयोर्निरूप्यनिरूपकभावस्य कल्पनादिति।

तन्न। 'एकत्र तादात्म्येनारोपितस्य' इत्यादेर्निर्युक्तिकत्वेनाश्रद्धेयत्वात्। न च शुक्तावारोपितस्य रजतस्य रङ्गेऽपि तादात्म्यारोपस्वीकारे रङ्गतत्त्वज्ञानमात्रादपि रजतनिवृत्तिप्रसङ्ग इति वाच्यम्। तत्त्वज्ञानस्य स्वसमानविषयकाज्ञाननिवृत्तिद्वारा तत्कार्यस्यैव निवर्तकतया प्रथमं शुक्तावारोपितस्य रजतस्य रङ्गाज्ञानाकार्यतया तत्तत्वज्ञाने तन्निवृत्त्यापादनायोगात्। प्रातिभासिके व्यावहारिकरजतभेदस्यावृतत्वेन तत्तादात्म्यारोपस्य सुलभत्वात्। अनुभवस्य सामग्र्याश्च सत्त्वे विषमसत्ताकयोरपि तादात्म्यारोपसंभवेन स्वोपादानाज्ञानविषयत्वनियमस्य स्वोपादानाज्ञाननिवर्तकज्ञानविषयत्वनियमस्य चाप्रयोजकत्वात्। निरुक्ताचार्यवचसः प्राचीनपक्षाभिप्रायकत्वात्, तत्पक्षे तज्ज्ञानस्य व्यावहारिकरजतांशे अन्यथाख्यातित्वस्य स्मरणरूपत्वस्य चाव्याहतत्वात्, स्मर्यमाणरजतेन रजतं साक्षात्करोमीतिप्रत्ययानिर्वाहेणानिर्वचनीयोत्पत्तेरावश्यकत्वाच्च।

इत्थञ्च तद्धर्मावच्छिन्नाधिकरणनिष्ठाभावीयतद्धर्मावच्छिन्नप्रतियोगित्वं शुक्तिरूप्ये वर्तत इति न साध्यवैकल्यं दृष्टान्ते इति प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वं निष्प्रत्यूहमिति सिद्धम्॥

**इति महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिविरचिते**
**ब्रह्मानन्दीयभावप्रकाशे द्वितीयमिथ्यात्वविचारः समाप्तः।**

---

**टि.** इदंसद्रजतमितिभ्रमे प्रातीतिके व्यावहारिकतादात्म्यमारोप्यते। न तु इदमि आरोपितं रजतं व्यावहारिके तादात्म्येनारोप्यते। अतश्च एकत्रेत्यादिकथनमसंगतम्। एवं विषमसत्ताकयोस्तादात्म्यभानस्थले स्वोपादानाज्ञानविषयत्वनियमोऽपि न। परस्पराध्यासस्वीकारेण रजतमितिभ्रमे रजतेऽपीदंतादात्म्यभानेन तत्र इदमुपादानाज्ञानविषयत्वाभावादिति **श्रीत्यागराजाध्वरीन्द्राः॥**

**इति द्वितीयमिथ्यात्वविचारः समाप्तः**

# अथ तृतीयमिथ्यात्वविचारः

ज्ञाननिवर्त्यत्वं वा मिथ्यात्वम् । इदं विवरणकारीयं मिथ्यात्वान्तरम् । तच्च मुद्गरपातनिवर्त्यघटादौ बाधवारणाय ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वमिति सिद्धिकारैर्विवृतम् ।

तत्र मुद्गरपातनिवर्त्यघटादेः स्वरूपेणावस्थित्यभावस्य तत्प्रयुक्तत्वेऽपि कारणात्मनाऽवस्थितिसाधारणोक्तावस्थितिसामान्याभावस्य ब्रह्मज्ञानप्रयुक्तत्वान्न तत्र बाधः । शशविषाणाभावस्य ज्ञानप्रयुक्तत्वाभावान्न तत्रातिव्याप्तिः । न वा उत्तरज्ञाननिवर्त्यपूर्वज्ञाने सिद्धसाधनम् । अत एव न वियदादेः ब्रह्महत्यादेरिव सेतुदर्शनादिना ब्रह्मज्ञानेन नाशेऽपि मिथ्यात्वासिद्धया अर्थान्तरम् ।

ननु विशेषाभावातिरिक्तसामान्याभावानङ्गीकारे घटादेरेकावस्थितिविशेषाभावस्य ज्ञानाप्रयुक्तत्वेन मुद्गरपातनिवर्त्यघटादावव्याप्तिः । न च ज्ञानप्रयुक्ताभावप्रतियोग्यज्ञानप्रयुक्तत्वनिवेशात् न दोष इति वाच्यम् । अज्ञानादावव्याप्तेः इति चेत् ।

न । यथा मण्यसमवधानकालीनस्य दाहाभावस्य तत्तदभावत्वेन सामग्र्यभावप्रयुक्तत्वेऽपि दाहसामान्याभावत्वेन मणिप्रयोज्यत्वं तथा ज्ञानात् प्राक्कालीनस्य घटाभावस्य तत्त्वेन तदप्रयोज्यत्वेऽपि ज्ञानकालीनस्य स्वसमानविषय-

---

अथ तृतीयमिथ्यात्वविचारः

टि. 'विद्वान्नामरूपाद्विमुक्तः' इति श्रुत्यर्थे विवदमानं प्रति साध्यान्तरमाह— **ज्ञाननिवर्त्यत्वं वेति** । उक्तश्रुत्या ब्रह्मज्ञानवदुद्देश्यकः नामरूपात्मकप्रपञ्चविमोकविधेयको बोधो जायते । विधेयप्रपञ्चनिवृत्तौ उद्देश्यतावच्छेदकीभूतब्रह्मज्ञानप्रयोज्यत्वभानस्य व्युत्पत्तिसिद्धत्वात् प्रपञ्चस्य ज्ञाननिवर्त्यत्वरूपं मिथ्यात्वं बोध्यते इति वेदान्तसिद्धान्तः । परस्तु, विद्वान्— -ब्रह्मज्ञानी नामरूपात् विमुक्तः—अमुक्तः नामरूपयुक्त एव । विप्रियमित्यत्रेव विशब्दोऽत्र निषेधार्थः । यद्वा, संसारिभिरज्ञेयनामरूपत्वात् विमुक्तः—विमुक्त इव स्थितः इति निरुक्तश्रुतेरर्थं वर्णयति ।

**अवस्थितिसामान्याभावस्येति** । सामान्याभावस्य विशेषाभावातिरिक्तत्वाभावादिति भावः ।

काज्ञानतत्प्रयुक्तान्यतरत्वावच्छिन्नाभावत्वेन तत्प्रयोज्यत्वस्य निष्प्रत्यूहत्वात् ।

अथ वा, अप्रामाण्यज्ञानादिशून्यस्वजन्यपटुतमसंस्कारसहितसाक्षात्कार-प्रमाव्यापकस्वस्वसंस्कारान्यतराभावप्रतियोगित्वं ज्ञाननिवर्त्यत्वम् । तादात्म्येन तादृशप्रमां प्रति स्वसमानविषयकत्वकालिकविशेषणत्वोभयसंबन्धावच्छिन्नप्रति-योगिताकस्याज्ञानतत्संस्कारान्यतराभावस्य स्वप्रयोजकाज्ञानसमानविषयकत्वस्वा-श्रयकालपूर्वत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्याज्ञानप्रयुक्ततत्संस्कारान्यतरा-भावस्य च व्यापकत्वात् तादृशाभावप्रतियोगितामादायाज्ञानतत्प्रयुक्ततत्संस्कारेषु लक्षणसमन्वयः । या या अप्रामाण्यज्ञानादिशून्यसाक्षात्कारप्रमा सा स्वसमान-विषयकत्वकालिकविशेषणत्वोभयसंबन्धावच्छिन्नाज्ञानाभाववती या या स्वज-न्यपटुतमसंस्कारसहितोक्तप्रमा सा निरुक्तोभयसंबन्धावच्छिन्नाज्ञानतत्संस्का-

---

**टि॰** एतावता **भट्टत्र्यम्बकशास्त्रिणां** पद्धतिमनुसृत्य ज्ञानप्रयुक्तावस्थितिसामा-न्यविरहप्रतियोगित्वमुपपादितम् ।

ज्ञानप्रयुक्तेत्यादेर्मूलस्य **श्रीब्रह्मानन्दसरस्वतीभि**र्व्याख्याचतुष्टयं प्रदर्शितम् । तत्र—प्रयुक्तत्वं व्यापकत्वम्, अवस्थितिसामान्यविरहपदेन अज्ञानतत्संस्कारान्यतराभावा-ज्ञानप्रयुक्ततत्संस्कारान्यतराभावद्वयं विवक्षितम्, इति प्रथमं व्याख्यानम्। प्रयुक्तत्वं अधी-नत्वरूपः स्वरूपसंबन्धविशेषः, अवस्थितिसामान्यविरहपदेन स्वस्वसंस्कारोभयध्वंसो विव-क्षितः, इति द्वितीयं व्याख्यानम् । प्रयुक्तत्वं स्वरूपसंबन्धरूपम्, अवस्थितिसामान्यविरहश्च प्रथमरीत्या बोध्यः । अवस्थितिसामान्यविरहपदेनाज्ञानप्रयुक्ततत्संस्कारान्यतराभावमात्रं विवक्षितम्, अज्ञानस्य अज्ञानप्रयुक्तसंस्कारत्वेन अज्ञानसंस्कारस्याज्ञानप्रयुक्तत्वेन च संग्रहसं-भवादिति श्रीविठ्ठलमिश्राः । यद्यपि अज्ञानस्यापि संस्काररूपेणाज्ञानप्रयुक्तत्वात् अज्ञानप्रयु-क्ताभाव इत्येवालम्, तथापि अधिष्ठानज्ञानानन्तरं अज्ञानप्रयुक्तसंस्कारोऽपि नास्तीति व्युत्पादनाय एवमुक्तमिति तृतीयं व्याख्यानम् । प्रयुक्तत्वमुत्तरकालनियतमधीनत्वं स्वरूप-संबन्धविशेषरूपम्, अवस्थितिसामान्यविरहपदेन स्वसमानसत्ताकस्वतादात्म्यापन्नवस्तुसा-मान्याभावो विवक्षित इति चतुर्थं व्याख्यानम् । अथेदानीं श्रीब्रह्मानन्दसरस्वतीप्रदर्शित-प्रथमव्याख्यानुसारिपरिष्कारं निरूपयितुमारभते—**अथवेति** ।

रान्यतराभाववतीति व्याप्तेः । अत्र द्वितीयव्याप्तौ सहितान्तोपादानात् जीवन्मुक्तप्रमाकाले अज्ञानाभावेऽपि तत्संस्कारसत्त्वेन उक्तोभयसंबन्धावच्छिन्नाज्ञानतत्संस्कारान्यतराभावस्य तादृशप्रमायामसत्त्वेऽपि न व्यभिचारः । एवं या या स्वजन्यपटुतमसंस्कारसहितोक्तप्रमा सा स्वप्रयोजकाज्ञानसमानविषयकत्वस्वाश्रयकालपूर्वत्वोभयसंबन्धावच्छिन्नाज्ञानप्रयुक्ततत्संस्कारान्यतराभाववतीति व्याप्तेः। स्वजन्यपटुतमसंस्कारसहिताधिष्ठानप्रमायां सत्यां तत्काले तत्समानविषयकाज्ञानतत्संस्कारयोः तदुत्तरकाले च तादृशाज्ञानप्रयुक्ततत्संस्कारयोरसंभवात् । न हि तादृशशुक्तिसाक्षात्कारप्रमाकाले शुक्त्यज्ञानतत्संस्कारयोः तदुत्तरं वा तादृशाज्ञानप्रयुक्तरजततत्संस्कारयोः संभव इति शुक्तिरूप्यादौ न साध्यविकलता ।

न च--निरुक्तव्याप्तिर्न संभवति, ब्रह्मप्रमात्वेन स्वीकृतायां सन् घट इतिप्रमायां आपातवेदान्तवाक्यजन्यप्रमायाञ्च व्यभिचारात्, निरुक्तप्रमाकाले स्वसमानविषयकमूलाज्ञानतत्संस्कारयोः तदुत्तरकाले तादृशाज्ञानप्रयुक्ततत्संस्कारयोश्च सत्त्वादिति—वाच्यम् । सन् घट इतिप्रमायाः घटोपहितसद्विषयकत्वेन मूलाज्ञानस्य च शुद्धविषयकत्वेन मूलाज्ञानसमानविषयकत्वस्य निरुक्तप्रमायामसत्त्वेन व्यभिचाराभावात् । यदि सन् घट इतिप्रमायाः शुद्धविषयकत्वमिष्यते तदाऽपि न व्यभिचारः । व्यापकीभूताभावप्रतियोगितावच्छेदकसंबन्धघटकस्वसमानविषयकत्वस्य स्वनिरूपितविषयतानिरूपकत्वरूपस्य विवक्षितत्वात् । समानाकारज्ञानयोरिव तादृशज्ञानाज्ञानयोरपि विषयताभेदे मानाभावात् वृत्तिनिरूपिताकाराख्यविषयताया एवाज्ञाननिरूपितत्वाभ्युपगमात् मूलाज्ञाननिरूपितजीवत्वब्रह्मत्वाद्युपलक्षितविषयतानिरूपकत्वस्य सन् घट इतिप्रमायामसत्त्वेन निरुक्तसमानविषयकत्वघटितसंबन्धद्वयावच्छिन्नप्रतियोगिताकाज्ञानतत्संस्कारान्यतराभावस्य तत्राक्षतत्वात् । आपातवेदान्तवाक्यजन्यप्रमायां साक्षात्कारत्वस्याभावात्, भावेऽपि अप्रतिबद्धत्वस्यापि व्याप्यतावच्छेदककोटौ निवेशेन व्यभिचारानवकाशात् । तस्याः असंभावनादिप्रतिबद्धत्वात् । एतद्विशेषणाभिप्रायेण या या अप्रामाण्यज्ञानादिशून्येत्यत्र लघुचन्द्रिकायामादि-

टि. आदीति । वक्ष्यमाणस्य पटुतमसंस्कारजनकतानवच्छेदकविषयताशून्यत्व-

पदमुपात्तम् ।

न चोक्तसंबन्धद्वयेन कस्यचित् योऽत्यन्ताभावः तादृशप्रमाव्यापकः तत्प्रतियोगित्वमेवास्तु किमुक्तान्यतराभावत्वनिवेशेनेति वाच्यम् । तथा सति शशविषाणादावतिव्याप्तेः । तस्याप्युक्तसंबन्धावच्छिन्नाभावस्य व्यधिकरणसंबन्धावच्छिन्नाभावरूपस्य तादृशज्ञानव्यापकत्वात् । शशविषाणस्य च स्वीयसूक्ष्मावस्थारूपसंस्कारासत्त्वाच्च नोक्तान्यतराभाव इति न तत्रातिव्याप्तिः, न वा असत्त्वपर्यवसानमादायार्थान्तरम् ।

एतेन––यदपि विद्वान्नामरूपाद्विमुक्त इति श्रुत्यर्थं विवदमानं प्रति साध्यान्तरमुक्तं ज्ञाननिवर्त्यत्वं वा मिथ्यात्वमितीत्यनूद्य तन्नेत्यादिना नव्याद्वैतिमते साध्याप्रसिद्धिश्च इत्यन्तेन ग्रन्थेन प्रतिपादितं दूषणमपास्तम् ।

यत्तु अत्यन्ताभेदे तादात्म्यादिसंबन्धस्य भवत्सिद्धान्तेऽनभ्युपगमात्तादात्म्येन प्रमाया व्याप्यत्वकथनस्यानुचितत्वमुक्तम् ।

तदयुक्तम् । द्रव्यत्वोपहितघटत्वोपहितयोरिव प्रमात्वतद्व्यक्तित्वोपहितयोरौपाधिकभेदस्य सत्त्वेन तादात्म्यसंभवात् ।

यद्वा, प्रमात्वव्यापकत्वमेवाभावे निवेश्यते । न च तादृशप्रमात्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकप्रमेयत्ववत्त्वमादाय सिद्धसाधनमिति वाच्यम् । यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वं तादृशप्रमात्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकं तद्रूपावच्छिन्नप्रतियोगित्वस्य विवक्षितत्वात् । न च

---

स्यापि संग्राहकमादिपदं बोध्यम् ।

**निवेश्यते इति । श्रीब्रह्मानन्दसरस्वतीभिः लघुचन्द्रिकायां** ज्ञाननिवर्त्यत्वनिष्कर्षनिरूपणावसरे 'पटुतमसंस्कारादिविशिष्टस्य ज्ञानस्य कालिकसंबन्धेन या व्याप्यता तन्निरूपितविशेषणतासंबन्धावच्छिन्नव्यापकतावच्छेदकम्' इत्यादिग्रन्थेन कालिकसंबन्धेनापि प्रमाया अभावव्याप्यत्वमुक्तं बोध्यम् ।

**सिद्धसाधनमिति ।** तादृशाभावस्योक्तज्ञाने असत्त्वेऽपि उक्तव्यापकतासंभवादिति भावः ।

यत्त्वतत्त्वनिवेशादननुगम इति वाच्यम्। तादृशप्रमात्वव्यापकतावच्छेदकानुयोगिताविशिष्टधर्मवत्त्वस्य विवक्षितत्वात्। वैशिष्टयञ्च, स्वनिरूपिता या स्वसमानविषयकत्वकालिकविशेषणत्वोभयसंबन्धावच्छिन्नाज्ञानतत्संस्कारान्यतराभाव-प्रतियोगिता या च स्वनिरूपिता स्वप्रयोजकाज्ञानसमानविषयकत्वस्वाश्रय-कालपूर्वत्वोभयसंबन्धावच्छिन्नाज्ञानप्रयुक्ततत्संस्कारान्यतराभावप्रतियोगिता तदन्यतरविशिष्टत्वसंबन्धेन, वैशिष्टयञ्च स्वावच्छेदकत्वसंबन्धेनेति। अत एव व्यधिकरणसंबन्धावच्छिन्नाभावमादाय दोषः प्रत्युक्तः।

यद्वा निरुक्तप्रमात्वव्यापकतावच्छेदकानुयोगितावैशिष्टयं स्वनिरूपितस्वसमानविषयकत्वकालिकोभयसंबन्धावच्छिन्नाभावीयस्वव्यधिकरणसंबन्धानवच्छिन्नप्रतियोगितावच्छेदकत्व - स्वनिरूपितस्वप्रयोजकाज्ञानसमानविषयकत्व - स्वाश्रयकालपूर्वत्वोभयसंबन्धावच्छिन्नाभावीयस्वव्यधिकरणसंबन्धानवच्छिन्नप्रतियोगितावच्छेदकत्वान्यतरसंबन्धेन बोध्यम्।

यत्तु—पटुतमसंस्कारजनकतावच्छेदकशुक्तिनिष्ठविषयताके वह्न्यंशे उपेक्षात्मके समूहालम्बनप्रमारूपज्ञानेऽप्युक्तप्रमात्वसत्त्वेन तत्र शुक्त्यज्ञानतत्संस्कारान्यतराभावसत्त्वेऽपि वह्न्यज्ञानप्रयुक्तस्य वह्नावारोपितगुञ्जापुञ्जत्वादेः स्वप्रयोजकेत्यादिसंबन्धेन सत्त्वेन तदभावाभावात् साध्यवैकल्यं दुर्वारमिति।

तन्न। पटुतमसंस्कारजनकतानवच्छेदकविषयताशून्यत्वस्य तादृशप्रमाविशेषणत्वेनादोषात्। न च—साध्याप्रसिद्धिः, इयंशुक्तिरितिज्ञानस्य पटुतमसंस्कारजनकतानवच्छेदकेदन्त्वनिष्ठप्रकारतानिरूपितनिरवच्छिन्नविशेष्यता - शून्यत्वाभावादिति वाच्यम्। पटुतमसंस्कारजनकतानवच्छेदककिञ्चिदवच्छिन्नविषयताशून्यत्वस्य निवेशात्।

---

**टि. अनुयोगितेति**। अभावत्वमनुयोगिताविशेष इति बोध्यम्।

**दोष इति**। घटादेः स्वसमानविषयकत्वघटितव्यधिकरणसंबन्धेन अज्ञानस्य च स्वप्रयोजकेत्यादिव्यधिकरणसंबन्धेन चाभावस्य ब्रह्मज्ञानोत्तरं प्रपञ्चसत्त्वेऽपि सत्त्वेनार्थान्तररूपो दोष इत्यर्थः।

**विषयताशून्यत्वस्येति**। यद्यपि मुख्यविशेष्यताद्वयशून्यत्वनिवेशेनापि निरुक्त

एतेन—व्यापकीभूताभावप्रतियोगितावच्छेदकसंबन्धघटकं स्वप्रयोजकाज्ञानसमानविषयकत्वं स्वप्रयोजकाज्ञानविषयतासजातीयपटुतमसंस्कारजनकतावच्छेदकविषयताकत्वमिति निरुच्य, तथा सति जीवन्मुक्तप्रमायां निरुक्तसमानविषयकत्वघटितसंबन्धद्वयेनोक्तसामान्याभावसत्त्वेनोक्तव्यभिचारानवकाशात् प्रमायां स्वजन्यपटुतमसंस्कारसहितत्वविशेषणवैयर्थ्यापादनमनुक्तोपालम्भनं वेदितव्यम् ।

यदपि—तादृशविशेषणोपादानस्योक्तसंबन्धकोटौ तन्निवेशतात्पर्यग्राहकत्वाङ्गीकारेऽपि प्रातिभासिकमात्रस्याज्ञानप्रयुक्तत्वेन तन्मात्रस्य ब्रह्मज्ञानान्निवृत्तावपि जगतः सत्त्वेऽपि प्रातिभासिकप्रतियोगिकाज्ञानप्रयुक्ततत्संस्कारान्यतरत्वावच्छिन्नाभावस्य प्रमात्वव्यापकत्वसंभवेन तादृशाभावप्रतियोगित्वस्य प्रपञ्चे स्वीकारमात्रेणोक्तसाध्यनिर्वाहादर्थान्तरं दुर्वारम् । घटोनास्तीतिप्रतीतिसिद्धाभावप्रतियोगितायाः घटत्वेनप्रमेयंनास्तीतिप्रतीतिविषयप्रतियोगित्वाभेदेन पटादौ तादृशप्रतियोगितावत् जगत्यपि तादृशप्रतियोगितासंभवादिति ।

तन्न । दृष्टान्तासंप्रतिपत्तेः । घटोनास्तीतिप्रतीतिसिद्धाभावनिरूपिता घटनिष्ठा घटत्वावच्छिन्नप्रतियोगितैव घटत्वेनप्रमेयंनास्तीत्यत्र प्रमेयत्वसामानाधिकरण्येन घटमात्रे भासते न तु पटेऽपि । तथा सति घटत्वावच्छिन्नायाः घटवृत्तिप्रतियोगितायाः पटादिसाधारण्येन घटत्वावच्छिन्नपटवृत्तिप्रतियोगित्वाभेदात् घटवति घटत्वेन पटो नास्तीति प्रतीत्यनापत्तेः । प्रतियोगितावच्छेदकघटत्वविशिष्टस्य प्रतियोगिताश्रयस्य घटस्य विरोधिनः सत्त्वेन प्रतीतिविषयस्याभावस्य बाधात् । स्पष्टञ्चेदं **व्यधिकरणप्रकरणे गादाधर्याम्** । पूर्वनिरुक्तस्य प्रमात्वव्यापकतावच्छेदकानुयोगिताविशिष्टधर्मवत्त्वस्य साध्यत्वे एतादृशार्थान्तरस्यानवकाशाच्च ।

यत्तु—एवमपि दृष्टान्ते साध्यवैकल्यस्य दुर्वारत्वादित्यारभ्य रजतस्मृ-

---

समूहालम्बनात्मकशुक्तिप्रमाव्यावृत्तिः संभवति । तथापि वह्न्यंशे उपेक्षात्मकं वह्निसमानकालीनेयंशुक्तिरितिज्ञानमादाय दोषवारणं न संभवतीति बोध्यम् ।

त्यनुपपत्तिवारणाय रजतवृत्तिनाशरूपतत्सूक्ष्मावस्थायाः बिन्दुटीकादौ स्वीकृततया शुक्तिप्रमायामुक्तवृत्तिनाशस्याज्ञानप्रयुक्तस्यावश्यकतया पूर्वोक्तसंबन्धावच्छिन्न-शुक्त्यज्ञानप्रयुक्तवृत्तितत्संस्कारान्यतराभावस्य तादृशप्रमात्वव्यापकत्वाभावादि-त्युक्तम् ।

तन्न । रजतावच्छिन्नचिन्नाशस्यैव रजतसंस्कारत्वेन स्मृतिहेतुतया वृत्ति-नाशस्यानावश्यकत्वात् । न च रजतावच्छिन्नचिन्नाशस्य रजततादात्म्यसंभवेऽपि रजतसंबन्ध्याकाराख्यविषयताशालित्वाभाव इति वाच्यम् । सुखतादात्म्या-पन्नस्य सुखावच्छिन्नचिन्नाशस्य सुखस्मृतिहेतुताया इव शुक्तिरूप्यतादात्म्या-पन्नतदवच्छिन्नचिन्नाशस्य स्मृतिहेतुताया अङ्गीकारेण स्मृत्यनुपपत्तेरभावात् । न च बिन्दुटीकाविरोध इति वाच्यम् । तस्याः प्रौढिवादत्वात् ।

यदि वृत्तिनाशस्यैव संस्कारत्वेन स्मृतौ जनकत्वमित्याग्रहः तदा मया रजतं भ्रान्तमासीदिति व्यवहारेण भ्रमस्यैव स्मृतिविषयतया नोक्तसाध्यवैकल्यम् ।

किञ्च, इदंवृत्तिनाश एव रजतसंस्कारः इदमवच्छिन्नचैतन्ये ये अध्यस्ताः तेषां सर्वेषाञ्च संस्कारः, तस्य व्यावहारिकत्वान्नोक्तदोषः ।

यत्तु—तत् रजतभ्रान्तेरेव स्मरणं न रजतस्येति न रजतविषयकावि-द्यावृत्तिनाशरूपसंस्कारापेक्षेति नोक्तसाध्यवैकल्यमित्युच्यते तदाप्यर्थान्तरम्, ब्रह्मज्ञानानन्तरं जगतः सत्त्वेऽपि तादृशप्रमायामुक्तोभयसंबन्धावच्छिन्नाभाव-संभवात्, यत्र येन संबन्धेन यत् संबध्यते तत्र तत्संबन्धावच्छिन्नतदभावो वर्तत इति भवतामभ्युपगमादिति ।

तन्न । मिथ्यात्वसिद्ध्युत्तरकालीनतत्सिद्धेरनुमितिव्याघातकत्वायोगात् । किञ्च, ब्रह्मज्ञानानन्तरं जगतः सत्त्वेऽपि अभावसंभवेनार्थान्तरोक्तिरज्ञानविल-सितैव । अज्ञानस्य जगदुपादानत्वेन कारणनिवृत्त्यनन्तरं कार्यस्य स्थित्ययो-गात् । किञ्च, स्वप्रतियोग्यनधिकरणवृत्तित्वविशिष्टाभावनिरूपितविशेषणतासंबन्धे-

---

**टि. संस्कार इति ।** तथा च इदंवृत्तिनाशस्य रजतविषयकसंस्कारत्वेन स्मृति-हेतुता कल्प्यत इति भावः ।

नाभावस्य व्यापकत्वविवक्षणेन ब्रह्मज्ञानानन्तरं जगतस्सत्त्वे तेन संबन्धेन तादृशाभावस्य व्यापकत्वासंभवात् निरुक्तार्थान्तरानवकाशः।

एतेन—'न च ब्रह्मज्ञानानन्तरं जगतस्सत्त्वे तादृशप्रमायामुक्ताभावसंभवेऽपि न तादृशप्रमात्वव्यापकतासंभवः तादृशाज्ञानतत्संस्कारान्यतराभावाभावरूपस्य तादृशान्यतरस्यापि सत्त्वेन तादृशप्रमात्वसमानाधिकरणाभावाप्रतियोगित्वविरहादिति वाच्यम्। तथा सत्युक्ताभावे प्रमात्वव्यापकताया एव दुर्घटत्वापत्त्या साध्याप्रसिद्ध्यापत्तेः, तादृशाभावस्य मिथ्यात्वेन तदभावस्य तादृशप्रमायामक्षतत्वात्' इत्युक्तं परास्तम्।

तदधिकरणे तदभावस्य मिथ्यात्वसिद्ध्युपजीवकतया तदुत्तरकालीनत्वेनानुमित्यनन्तरप्रवृत्तबाधादिवदबाधकत्वात्। किञ्च, मिथ्यात्ववादिनां व्यापकत्वं न दुर्वचम्। धूमाधिकरणे वह्नेर्मिथ्यात्वेन तदभावसत्त्वेऽपि न वह्नेर्व्यापकत्वं हीयते। मिथ्यात्वघटकाभावः पारमार्थिक इति पक्षे धूमसमानाधिकरणो यो व्यावहारिकाभावः तदप्रतियोगित्वं धूमव्यापकत्वम्। अथवा, प्रतियोगिव्यधिकरणतादृशाभावाप्रतियोगित्वं व्यापकत्वम्। मिथ्यात्वघटकाभावो व्यावहारिक इति पक्षे लोकसिद्धविशेषणतानामन्यतमत्वेनाभावसंबन्धतया निवेशः। एवञ्च प्रकृते तादृशप्रमात्वव्यापकत्वं तादृशप्रमानिष्ठव्यावहारिकाभावाप्रतियोगित्वरूपं तादृशप्रमानिष्ठप्रतियोगिव्यधिकरणाभावाप्रतियोगित्वरूपं तादृशप्रमानिरूपितलोकसिद्धविशेषणतान्यतमावच्छिन्नवृत्तिमदभावाप्रतियोगित्वरूपं वा पर्यवसितमिति न साध्याप्रसिद्धिरिति बोध्यम्।

यत्तु—प्रतियोगिवैयधिकरण्यादिघटितव्यापकतानिवेशे ब्रह्मज्ञानानन्तरं जगतस्सत्त्वेऽपि तदभावस्य संयोगतदभावयोरिव व्यापकत्वसंभवेनार्थान्तरम्। एवं प्रतियोग्यधिकरणवृत्तिभिन्नत्वस्य प्रतियोग्यधिकरणवृत्तित्वाभावस्य च समानाधिकरणप्रतीतिस्थले भेदाभेदभानं सर्वत्र सर्वाभावञ्चाभ्युपगच्छतां वह्न्यादिमन्निष्ठवह्न्याद्यभावेऽपि संभवात् वह्नेः न व्यापकत्वं घटते। व्यावहारिकत्वेनाभावस्य व्यापकताघटकत्वे प्रतिवादिमते साध्याप्रसिद्धिः। लोकसिद्धविशेषण-

तानामन्यतमत्वेन संबन्धत्वमप्रामाणिकमेव। अन्यतमत्वघटकतद्भिन्नभेदस्य मिथ्यात्वसंपादकविशेषणतास्वपि उक्तरीत्या संभवादिति।

तन्न। प्रतियोग्यनधिकरणवृत्तित्वविशिष्टाभावीयविशेषणतासंबन्धेन व्यापकत्वस्य साध्यकोटिप्रवेशेनार्थान्तरस्यानवकाशात्। व्यावहारिकाभावघटितं व्यापकत्वं प्रतिवादिसंमतमेव। ब्रह्मप्रमातिरिक्ताबाध्यत्वरूपव्यावहारिकत्वस्योभयसंमतस्य निवेशात्। प्रतियोगिवैयधिकरण्यघटितमपि व्यापकत्वं संभवति। प्रतियोग्यधिकरणवृत्तिप्रतियोगिकः अभेदविरोधी यो भेदः तद्वत्त्वरूपस्य प्रतियोग्यधिकरणवृत्तित्वविरोध्यभाववत्त्वरूपस्य वा प्रतियोगिवैयधिकरण्यस्य निवेशेनादोषात्। लोकसिद्धविशेषणताघटितमपि व्यापकत्वं संभवति। तादृशविशेषणतानामन्यतमत्वेन संबन्धत्वस्याप्रामाणिकत्वं सविवादम्। अप्रामाणिकत्वेऽपि तेन रूपेणानुगतीकृत्य तादृशसंबन्धानां व्यापकताकोटौ निवेशे बाधकाभावाच्च। अभेदविरोधिनः तद्भिन्नभेदस्यान्यतमत्वघटकत्वेन मिथ्यात्वसंपादकविशेषणतासु उक्तरीत्या तादृशान्यतमत्वासंभवाच्च।

यत्तु—जगतः शाश्वतिकत्वेऽपि ब्रह्माज्ञानसमानविषयकनिर्विकल्पकज्ञानानङ्गीकारमात्रेण साध्यसिद्ध्या अर्थान्तरं दुर्वारम्, तादृशप्रमायां स्वप्रयोजकेत्यादिसंबन्धद्वयावच्छिन्नाभावसत्त्वादिति।

तन्न युक्तम्। निरुक्तप्रमात्वव्यापकतावच्छेदकानुयोगिताविशिष्टधर्मवत्त्वस्य साध्यताया उक्तत्वेन निरुक्तार्थान्तरप्रसक्तेरभावात्।

---

**टि.** यत्तु—ब्रह्मज्ञानानन्तरं जगतः सत्त्वेऽपि अज्ञानतत्संस्कारान्यतराभावे तादृशप्रमानिष्ठाभावप्रतियोगिनि तादृशप्रतियोगित्वावच्छिन्नभेदाङ्गीकारमात्रेण उक्तसाध्यसिद्धिसंभवादर्थान्तरं दुर्वारमिति।

तन्न। तादृशप्रतियोगिनि तादृशप्रतियोगित्वावच्छिन्नभेदस्य तदभावग्राहकप्रमाणबाधितत्वेन तमादायार्थान्तरानवकाशात्। विशिष्टपदार्थस्य साध्यतायां तद्घटकविशेषणांशे किञ्चित्सिद्धिमादायार्थान्तरकथनस्यासांप्रदायिकत्वाच्च।

एवं दूषणपरिहारस्य द्वितीयमिथ्यात्वविचारोक्तरीत्या सुज्ञेयत्वमभिप्रेत्य एतद्दूषणतत्परिहारयोरनुक्तिर्ग्रन्थकृतामिति बोध्यम्।

**अर्थान्तरप्रसक्तेरभावादिति।** निर्विकल्पकानङ्गीकारमात्रेणार्थान्तरकथनं नाद्वै-

एतेन—ब्रह्मज्ञानानन्तरं जगतः सत्त्वेऽपि कालानवस्थानमात्रेणोक्तसाध्यसिद्धया अर्थान्तरम्। तद्दशायां कालाभावादेव स्वाश्रयकालपूर्वत्वघटितसंबन्धद्वयावच्छिन्नोक्तान्यतराभावस्य तादृशप्रमात्वव्यापकतासंभवात्। संसारदशायां कालसंबन्धित्वेनावस्थितस्य ब्रह्मणो मुक्तौ स्वरूपमात्रावस्थानवत् मूलप्रकृतिजीवेशभेदादिरूपस्य सर्वस्यापि प्रपञ्चस्य सत्त्वे विरोधाभावादिति परास्तम्।

अत एव—चिद्भिन्नत्वं यत्किञ्चिद्विषयकप्रमात्वव्यापकस्वपूर्वत्वसंबन्धावच्छिन्नाभावीयप्रतियोगितावच्छेदकं दृश्यवृत्तित्वात् शुक्तिरूप्यत्ववदित्यनुमानेन मिथ्यात्वसिद्धिः, शुक्तिप्रमानन्तरं शुक्तिरूप्यानवस्थानवत् ब्रह्मप्रमानन्तरं प्रपञ्चानवस्थानात्—इत्यपि साधु। उक्तरीत्या अर्थान्तरवारणसंभवात्।

ज्ञानाधीनस्वस्वीयसंस्कारोभयनाशप्रतियोगित्वं ज्ञाननिवर्त्यत्वमिति कल्पोऽपि साधुः। उत्तरज्ञाननाश्यत्वमादाय पूर्वज्ञाने सिद्धसाधनवारणाय संस्कारनिवेशः। स्मृतिनाश्यसंस्कारकत्वमादायानुभवे सिद्धसाधनवारणाय

---

तिमतेन संभवति। नापि रामानुजीयमतेन। तन्मते भावरूपसविषयाज्ञानानङ्गीकारात्। अज्ञानं शुद्धगोचरं ज्ञानन्तु विशिष्टविषयकमेवेति मतञ्च न प्रसिद्ध्यतीति नार्थान्तरम्। एवं प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यधिकरणभिन्नवृत्तित्वविशिष्टाभावीयविशेषणताया व्यापकताघटकत्वात् निर्विकल्पकानङ्गीकारे तादृशसंबन्धस्य प्रतियोगिताव्यधिकरणतया तेन संबन्धेन प्रतियोग्यधिकरणाप्रसिद्धेः व्यापकताघटकसंबन्धाप्रसिद्ध्या साध्यपर्यवसानस्यैवासंभवश्चेति **श्रीत्यागराजाध्वरीन्द्राः।**

**परास्तमिति।** एकतरसंबन्धघटककालानवस्थानपर्यवसानेनार्थान्तरकथनं न कथकसंप्रदायसिद्धम्। अन्यथा सुषुप्तिकालावच्छेदेनात्मनि ज्ञानाभावसिद्ध्यर्थं प्रयुज्यमाने स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानत्वाभाववानात्मत्वादित्यनुमाने प्रतियोगितावच्छेदकसम्बन्धघटकस्वाश्रयशब्दितज्ञाने ज्ञानत्वाश्रयत्वाभावपर्यवसानमादायार्थान्तरापत्तेरिति **श्रीत्यागराजाध्वरीन्द्राः।**

ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वमिति मूले विरहपदं ध्वंसपरं प्रयुक्तत्वं स्वरूपसंबन्धरूपाधीनत्वमिति द्वितीयकल्पं समर्थयितुमुपन्यस्यति—**ज्ञानाधीनेति।**

स्वेत्यस्य निवेशः । न च ब्रह्मज्ञानात् प्रपञ्चनाशाभ्युपगमे 'विद्वान्नामरूपाद्विमुक्तः' इति श्रुतिविरोध इति वाच्यम् । चरमक्षणस्यैव स्वस्वेतरयावद्वस्तुध्वंसरूपत्वस्वीकारात् । एकत्र रूपभेदेन प्रतियोगित्वानुयोगित्वयोरुपपत्तेः । सकलदृश्यत्वेन हि प्रतियोगित्वं, तत्त्वज्ञानाश्रयतत्क्षणव्यक्तित्वेन चानुयोगित्वम् । घटाभावे स नास्तीत्यादिप्रत्ययबलेन घटाभावादिप्रतियोगिकात्यन्ताभावत्वस्येव ज्ञानात्सर्वंदृश्यंनष्टमिति प्रत्ययबलेन सर्वदृश्यप्रतियोगिकस्य चरमक्षणानुयोगिकस्य ध्वंसत्वस्य संभवात् । मुद्गरपातादिना घटस्य नाशेऽपि तत्संस्कारस्यानाशात् उभयनाशस्य ब्रह्मज्ञानमात्रप्रयुक्तत्वान्नातीतघटादौ बाधः ।

यत्तु अपेक्षाबुद्ध्यात्मकानुभवानन्तरजातसंस्कारेण स्मृत्युत्पत्तौ तादृशस्मृत्या अनुभवसंस्कारोभयनाशात् तादृशानुभवे सिद्धसाधनमिति ।

तन्न युक्तम् । अपेक्षाबुद्ध्या संस्कारोत्पत्तिस्थले अपेक्षाबुद्धिद्वितीयक्षणे कस्यापि ज्ञानादेरनुत्पादेन तृतीयक्षणोत्पन्नसंस्कारेणापेक्षाबुद्धिनाशेन तस्याः स्मृतिनाश्यत्वायोगेन सिद्धसाधनाभावात् । यद्यपेक्षाबुद्धिद्वितीयक्षणे विशेषगुणान्तरोत्पत्तिः स्वीक्रियते तदा तस्यास्तृतीयक्षणे नाशापत्तिरिति सिद्धसाधनस्य

---

**टि. स नास्तीति** । घटाभावत्वावच्छिन्ने अत्यन्ताभेदेन घटाभावत्वावच्छिन्नस्याभावात् घटाभावे घटाभावो नास्तीति प्रतीतिः (संबन्धान्तरमनवगाह्यापि) संभवतीति **श्रीविट्ठलमिश्राः** ।

गगनाभावस्य व्यधिकरणधर्मेण व्यधिकरणसंबन्धेन वा तदभावस्य च समनियतत्वेनाभिन्नतया नैयायिकमतेऽपि अभावत्वप्रतियोगित्वानुयोगित्वे गगनाभावे एकस्मिन् प्रसिद्ध्यतः इति **श्रीभट्टत्र्यम्बकशास्त्रिणः** ।

**ध्वंसत्वस्येति** । अत्यन्ताभावत्वमिव ध्वंसत्वमपि अनुयोगिताविशेषः स च प्रतियोगिनः अभावे संबन्धः इति बोध्यम् ।

**तन्नेति** । स्मृतेः संस्कारदार्ढ्यर्थित्वेन तन्नाशकत्वाभावस्य सिद्धिकारैरुक्तत्वात् अपेक्षाबुद्ध्यात्मकानुभवे स्मृतिनाश्यसंस्कारकत्वमादाय सिद्धसाधनं न संभवतीति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः** । अनुभवजन्यस्वस्वसंस्कारोभयनाशप्रतियोगित्वं ज्ञाननिवर्त्यत्वमिति विवक्षणेऽपि निरुक्तसिद्धसाधनं न संभवतीति बोध्यम् ।

मनोरथमात्रत्वात्।

स्वस्वकारणान्यतरत्वव्यापकप्रतियोगिताकनाशे ज्ञानजन्यत्वनिवेशादपि नोक्तसिद्धसाधनम्। संस्कारात्मकानुभवोत्तरावस्थाया नाशस्य स्मृतिजन्यत्वेऽपि कारणसामान्यान्तर्गतानुभवपूर्वावस्थाया नाशस्य स्मृतिजन्यत्वाभावात्। न च स्वेत्यस्य वैयर्थ्यं शङ्कनीयम्। स्वपदस्येदृशार्थतात्पर्यग्राहकत्वात्। स्मृतेः संस्कारनाशकत्वाभावपक्षे स्वपदानुपादानस्य **श्रीब्रह्मानन्दसरस्वतीभिः** प्रतिपादितत्वाच्च।

यत्तु—नाशस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्वीकारेण साध्याप्रसिद्ध्यभावेऽपि पूर्वोक्तरीत्या दृष्टान्ते साध्यवैकल्यं दुर्वारम्। रजतज्ञानकारणपरम्परान्तर्गतस्य रजतसंस्कारस्य शुक्तिज्ञानेनानाशात्। अन्यथा रजतस्मृत्यनुपपत्तेः। ध्वंसस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमङ्गीकुर्वाणैरप्येकविशेषाधिकरणसमये तादृशध्वंसानुपगमादिति।

तन्न। रजतस्मृतिं प्रति रजतावच्छिन्नचिन्नाशस्य इदमाकारवृत्तिनाशस्य

---

**टि॰ मनोरथमात्रत्वादिति।** न च द्वितीयक्षणोत्पन्नादृष्टादिना अपेक्षाबुद्धेः तृतीयक्षणे नाशापत्तिवारणाय योग्यत्वस्य नाशकारणतावच्छेदककुक्षौ निवेशनीयतया न द्वितीयक्षणोत्पन्नसंस्कारेण तृतीयक्षणे नाशापत्तिरिति तृतीयक्षणोत्पन्नस्मृतिमादाय सिद्धसाधनं दुर्वारमिति वाच्यम्। द्वित्वप्रत्यक्षानुरोधेनैवापेक्षाबुद्धेः त्रिक्षणावस्थायित्वस्य कल्पनीयत्वात् अपेक्षाबुद्धिस्थले द्वित्वप्रत्यक्षसामग्र्याः बलीयस्याः सत्त्वेन स्मृतेरुत्पत्त्यनवकाशात्।

**नाशकत्वाभावपक्षे इति।** कालस्य रोगस्य वा तन्नाशकत्वं बोध्यम्।

**रजतस्मृतिमिति।** वस्तुतस्तु शुक्तिरजतस्य स्मृतिरेव न भवति, तत्त्वज्ञानेन मिथ्याज्ञानवासनानाशस्य नैयायिकैरुक्तत्वेन तत्त्वज्ञानानन्तरं संस्काराभावेन तद्विषयकस्मृत्युत्पादायोगादिति बोध्यम्।

शुक्तिज्ञानेन रजतस्मृतिहेतोः रजताकाराविद्यावृत्त्युत्तरावस्थाविशेषरूपस्य रजतविषयकसंस्कारस्य रजतोत्तरावस्थारूपरजताविषयकरजतसंस्काराद्भिन्नस्यानाशेऽपि शुक्तिरजतस्य तदुत्तरावस्थारूपस्य रजताविषयकस्य रजतसंस्कारस्य नाशेन दृष्टान्ते साध्यवैकल्याप्रसक्तेः। न ह्यत्र रजताकारवृत्तिः दृष्टान्तः, येन दृष्टान्ते साध्यवैकल्यं स्यात्। शुक्ति-

वा हेतुत्वस्वीकारेण रजताकाराविद्यावृत्तेः स्वाकारवृत्त्युपहितप्रमातृसत्तातिरिक्तसत्ताकत्वाभावरूपविषयप्रत्यक्षत्वसंपत्तये स्वीकारेऽपि पूर्वोक्तसंस्कारस्य शुक्तिज्ञानप्रयुक्तध्वंसप्रतियोगित्वाक्षतेः ।

यत्तु—एवं ज्ञानाद्दृश्यमात्रस्य केनचिद्रूपेण नाशे रूपान्तरेणावस्थानेऽपि उक्तसाध्यनिर्वाहादर्थान्तरम्, घटो दण्डाभिघातेन नष्टः इतिप्रतीत्या घटत्वावस्थाविशिष्टस्य नाशेऽपि कपालत्वावस्थाविशिष्टस्यावस्थानदर्शनादिति ।

तन्न । ज्ञानानन्तरं किञ्चिदवस्थासत्त्वे उक्तसाध्याभावेनार्थान्तरानवकाशात् । अवस्थासामान्याभावस्य साध्यघटकत्वान्न मिथ्यात्वहानिः ।

यत्तु—स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपसाध्यस्य प्रतियोग्यभावयोरविरोधित्वमादाय पर्यवसानवत् ध्वंसप्रतियोगिनोरविरोधित्वमादायोक्तसाध्यपर्यवसानप्रसङ्गेनार्थान्तरं दुर्वारम्, तथाऽङ्गीकारे ज्ञानाद् दृश्यनाशेऽपि दृश्यावस्थानसंभवादिति ।

तन्न । भावाभावयोरिव ध्वंसप्रतियोगिनोरपि विषमसत्ताकयोरविरोधेऽपि समसत्ताकयोर्विरोधात्, ज्ञानजन्यध्वंसस्य पारमार्थिकत्वेन प्रतियोगिनः पारमार्थिकत्वासंभवेनार्थान्तराभावात् ।

---

रजतं खलु दृष्टान्तः इति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः ।**

रजतभ्रान्तेरेव स्मरणं न रजतस्येति स्वपक्षेऽप्यङ्गीकारादाक्षेपस्यैव न प्रसक्तिरिति **श्रीपरीक्षिन्महाराजाः ।**

**अवस्थासामान्याभावस्येति ।** वस्तुनः स्वात्मना कारणात्मना चेत्यवस्थितिद्वयमेव प्रामाणिकमिति नात्र रूपान्तरमादायार्थान्तरप्रसक्तिः । यदि तादृशं रूपान्तरं प्रकल्प्यार्थान्तरमापाद्यते तदा स्वस्वकारणतादृशरूपान्तरत्रितयनाशस्य साध्यघटकत्वान्नार्थान्तरप्रसक्तिरिति भावः ।

**अर्थान्तराभावादिति ।** प्रपञ्चतदभावयोः सामानाधिकरण्यं प्रत्यक्षानुसारात् नेहनानेतिश्रुतिबलात् क्वचित्तथा दर्शनाच्च स्वीक्रियते, इह तु प्रतियोगिना साकं लोकसिद्धं ध्वंसस्य स्वोत्पत्तिद्वितीयक्षणावृत्तिप्रतियोगिकत्वरूपं विरोधमपरित्यज्यैव साध्यपर्यवसान-

यत्तु—एवं चरमक्षणस्य स्वध्वंसत्वकथनमप्यनुचितम् । प्रतियोगिध्वंसयोर्विरोधस्य सर्वानुभवसिद्धतया विरुद्धयोश्चात्यन्तभेदस्यावश्यकतया तदभेदस्यासंभावितत्वात् । प्रतियोगितावच्छेदकानुयोगितावच्छेदकभेदमात्रस्य स्वाश्रययोरविरोधं प्रत्यनुपपादकतया तद्भेदोपपादनस्याकिंचित्करत्वात् । न च प्रतियोगिध्वंसयोर्विरोध एव नास्तीति वक्तुं शक्यम् । यदा यस्य ध्वंसः तदा न सः इति कालिकसंबन्धघटितस्य सर्वानुभवसिद्धस्य विरोधस्य दुरपह्नवत्वात् । अन्यथा तद्घटो नष्ट इति जानतोऽपि घटादिसद्भावसन्देहस्य कदाचित् घटाद्यर्थिप्रवृत्तेश्च प्रसङ्गात् । दृश्यसामान्यध्वंसस्यापि दृश्याविरोधितया ध्वंसानन्तरमपि दृश्यावस्थानप्रसक्त्या ध्वंसोत्पादस्य निवृत्तिपर्यवसायित्वाभावप्रसङ्गाच्चेति ।

तन्न युक्तम् । घटप्रागभावध्वंसस्य घटजन्यत्वस्वीकर्तृमते घटोत्पत्तिद्वितीयक्षण एव प्रागभावनाशेन घटोत्पत्तिक्षणे प्रागभावघटयोरिव ध्वंसप्रतियोगिनोः ध्वंसोत्पत्तिक्षणे अविरोधेन चरमक्षणस्य स्वध्वंसरूपत्वसंभवात् । न च यदा यस्य ध्वंसः तदा न सः इति नियमविरोध इति वाच्यम् । यत्र ध्वंसाधिकरणकालत्वं तत्र न प्रतियोग्याश्रयकालपूर्वत्वमिति नियमे दोषाभावात् । न च रूपभेदोपन्यासोऽकिञ्चित्कर इति वाच्यम् । अभावस्याधिकरणात्मकत्वपक्षे एकस्यैवाधाराधेयभावोपपत्तये घटाभावत्वभूतलत्वरूपभेदोपन्यासस्येव

---

संभवेन सर्वदा प्रतियोगिध्वंसयोरविरोधित्वमादाय साध्यपर्यवसानायोगात्, ज्ञानाधीनोऽयं ध्वंसः स्वाधिकरणक्षणपूर्वत्वसंबन्धेन प्रतियोगिविशिष्टान्यः ध्वंसत्वात् ध्वंसान्तरवदित्यनुमानेनोक्तविरोधस्यैव सिद्धेरिति **श्रीत्यागराजाध्वरीन्द्राः** ।

**अविरोधेनेति** । अभावस्याधिकरणात्मत्ववादिनः प्राभाकरा अपि घटाधिकरणचरमक्षणस्य घटनाशरूपत्वं स्वीकुर्वाणाः ध्वंसप्रतियोगिनोर्निरुक्तमविरोधमभ्युपगच्छन्ति । स्पष्टञ्चैतत् **विट्ठलेशीये** ।

**यत्र ध्वंसाधिकरणकालत्वमिति** । नियमस्यास्य वादिद्वयसंमतस्य स्वीकारेणैवातिप्रसङ्गवारणसंभवेन चरमक्षणस्य ध्वंसान्तराकल्पनलाघवेन च यदा यस्य ध्वंसः तदा न सः इति नियमोऽप्रयोजकः इत्यपि बोध्यम् ।

एकत्रैव ध्वंसत्वं प्रति प्रतियोगित्वानुयोगित्वयोरुपपत्तये रूपभेदोपन्यासस्य सार्थक्यात् ।

किञ्च, ध्वंसप्रतियोगिनोर्भेदाभेदौ वर्तेते । उत्तरावस्थारूपध्वंसस्य तत्प्रतियोगिनश्च तादात्म्यस्वीकारात् । न च पूर्वोत्तरावस्थयोस्तादात्म्यमनुपपन्नमिति वाच्यम् । भिन्नकालीनयोः ज्ञानविषययोः विषयतारूपसंबन्धवदुपपत्तेः । न च ध्वंसानन्तरं घटे प्रवृत्तिः स्यादिति वाच्यम् । घटत्वावस्थाविशिष्टस्यैवेच्छाविषयत्वात् तस्य च तदानीमभावेन घटार्थिनः प्रवृत्त्यभावनिर्वाहात् । ध्वंसाधिकरणक्षणस्य प्रतियोग्याश्रयकालपूर्वत्वाभावनियमाभ्युपगमेनापि प्रवृत्त्यापत्तिवारणात् ।

किञ्च, ध्वंसोत्पत्तिकाले प्रतियोगिनोऽनवस्थाने ध्वंसस्योत्पत्तिरेव दुर्लभा स्यात् । कार्यतावच्छेदकसंबन्धेन कार्यवद्देशावच्छेदेन कार्यस्य य आद्यक्षणसंबन्धः तस्योत्पत्तिरूपत्वात् । उत्पत्तिक्षणे प्रतियोगितासंबन्धेन ध्वंसाधिकरणस्य प्रतियोगिनोऽनवस्थाने उत्पत्तिक्षणनिष्ठकार्यसंबन्धे तस्यावच्छेदकत्वासंभवात्, अवच्छेद्याधिकरणसंबन्धिन एवावच्छेदकत्वात् ।

---

टि· ध्वंसो नाम न भावादत्यन्तभिन्नोऽभावः किन्तु भावस्यावस्थाविशेष एवेति सत्कार्यवादपरमसिद्धान्तेनाह—**किञ्चेति** ।

उत्पत्तेः प्रथमसमयमात्रसंसर्गिभावविकारत्ववत् निवृत्तेरपि चरमसमयमात्रवृत्तिभावविकारत्वमेव सा च निवृत्तिः क्षणिकेति अद्वैतविद्याचार्यमते ज्ञानाधीनस्वस्वीयसंस्कारोभयनिवृत्त्याश्रयत्वमेव ज्ञाननिवर्त्यत्वमिति **श्रीत्यागराजाध्वरीन्द्राः** ।

**प्रवृत्त्यभावनिर्वाहादिति** । अस्मिन् पक्षे यदा यस्य ध्वंसः तदा न सः इति नियमशरीरे यस्येत्यस्य यद्धर्मावच्छिन्नस्येति स इत्यस्य तद्धर्मावच्छिन्नमिति चार्थो बोध्यः । तथा च स्थूलावस्थाविशिष्टस्य यदा ध्वंसः तदा स्थूलावस्थाविशिष्टं नास्तीति दर्शितनियमाङ्गीकारेऽपि न दोषः ।

**अवच्छेदकत्वादिति** । ध्वंसोत्पत्तिक्षणे प्रतियोगिनोऽवस्थाने इदानीं घटध्वंसो जायत इति प्रतीतिमतः इदानीं घटोऽस्तीति प्रतीत्यापत्तेः ध्वंसप्रतियोगिनोरुत्पत्तिक्षण एव

न च वृत्तिनियामकसंबन्धरूपो यः कार्यतावच्छेदकसंबन्धः तेन संबन्धेन यत् कार्याधिकरणं तदवच्छिन्नाद्यक्षणसंबन्धस्यैवोत्पत्तिरूपत्वात् कालिकदिक्कृतविशेषणताभ्यां कार्यसामान्यं प्रति कालदिशोस्तादात्म्येन कारणतया तादृशसंबन्धेन कार्याधिकरणकालदिगादिरूपदेशाद्यवच्छिन्नाद्यक्षणसंबन्धमादायोत्पत्तिनिर्वाह इति वाच्यम्। दिक्कृतविशेषणतासंबन्धेन घटध्वंसरूपकार्याधिकरणपटावच्छेदेन घटध्वंसोत्पत्त्यापत्त्या प्रतियोगितासंबन्धघटितपूर्वोक्तोत्पत्तिलक्षणस्यावश्यकत्वात्।

यत्तु—ध्वंसाधिकरणक्षणे प्रतियोगिनोऽवस्थानाभ्युपगमे 'उत्तरोत्पादे च पूर्वनिरोधात्' इति सूत्रविरोधः। बौद्धमतनिराकरणपरे तत्सूत्रे उत्तरक्षणोत्पत्तिसमये पूर्वक्षणनाशेनानवस्थानात् उत्तरक्षणं प्रति पूर्वक्षणस्य समवायिकारणत्वं न संभवति कार्यसहभूतस्यैव समवायिकारणत्वादिति व्युत्पादनात्। यदि तु ध्वंससमयेऽपि प्रतियोगिनोऽवस्थानं स्यात् तदा प्रथमक्षणस्य द्वितीयक्षणे ध्वंसोत्पादेऽपि अवस्थानसंभवेन द्वितीयक्षणरूपकार्यारम्भस्यापि नानुपपत्तिरित्युक्तसूत्रभाष्यविरोधः स्पष्ट इति।

तन्न। क्षणभङ्गवादिनां पूर्वक्षणध्वंसाधिकरणे द्वितीयक्षणे प्रथमक्षणावस्थानाङ्गीकारो व्याहतः इत्येव भाष्याशयात् स्वमते ध्वंससमये प्रतियोग्यवस्थानेऽपि तद्विरोधाभावात्।

यदपि—'अथ यदल्पं तन्मर्त्यम्' 'अन्यराजानस्ते क्षय्यलोका भवन्ति' इत्यादिश्रुतिभिः ध्वंसप्रतियोगिफलस्य निन्दितत्वात् मोक्षस्यापुरुषार्थत्वप्रसङ्गः,

---

विरोध आवश्यक इति तु न युक्तम्। नाशोत्पत्त्यनन्तरक्षणे एव नश्यतीति प्रत्यक्षं सम्भवति, प्रत्यक्षे विषयस्य कारणत्वात्, तस्मिंश्च क्षणे न घट इति तदा घटोऽस्तीति न प्रतीत्यापत्तिरिति ध्वंसप्रतियोगिनोः ध्वंसोत्पत्तिक्षणे विरोधस्यानावश्यकत्वादिति **श्रीपरीक्षिन्महाराजाः।**

**आवश्यकत्वादिति।** उत्पत्तिलक्षणे वृत्तिनियामकत्वेन संबन्धप्रवेशे प्रमाणाभावः, न च विषयतासंबन्धेन चाक्षुषत्वावच्छिन्नस्य द्रव्ये उत्पत्तिव्यवहारवारणाय तन्निवेश आवश्यक इति वाच्यम्, तादृशव्यवहारस्येष्टत्वात् इत्यपि बोध्यम्।

चरमक्षणरूपाविद्यानिवृत्तेरेव मोक्षत्वेन तस्यापि ध्वंसप्रतियोगित्वादिति ।

तदसत् । अविद्यानिवृत्त्युपलक्षितात्मस्वरूपत्वेन मोक्षस्यानुपपत्तेरभावात् ।

---

**टि**. ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वमिति मूलस्य ज्ञानाधीनस्वप्रयोजकाज्ञानसमानविषयकत्वस्वाश्रयकालपूर्वत्वोभयसंबन्धावच्छिन्नप्रतियोगिताकाज्ञानप्रयुक्ततत्संस्कारान्यतराभाववत्त्वमिति श्रीब्रह्मानन्दसरस्वतीनां तृतीयं व्याख्यानम् । तत्त्वज्ञानादज्ञानप्रयुक्तमुच्छिद्यते सर्वदृश्यमुच्छिद्यते इति प्रत्ययात् ज्ञानसमानकालीनस्यापि निरुक्ताभावस्य ज्ञानाधीनत्वम् । न चोक्तात्यन्ताभावस्याविद्यकत्वेन तस्यापि निरुक्ताभावो ज्ञानाधीनो वाच्यः एवं तस्यापीत्यनवस्थेति वाच्यम् । पूर्वमते एकस्यैव स्वस्वेतरध्वंसत्ववत् अत्र मते एकस्यैव निरुक्तात्यन्ताभावस्य स्वस्वेतरात्यन्ताभावरूपत्वस्वीकारेणानवस्थाविरहात् ।

यत्तु—अत्र पक्षे निर्विषयके घटादौ स्वप्रयोजकाज्ञानसमानविषयकत्वाभावेन तद्घटितसंबन्धद्वयावच्छिन्नाज्ञानप्रयुक्ततत्संस्कारान्यतराभावस्य सत्त्वात् तस्य भगवत्संकल्पप्रयुक्तत्वेन ब्रह्मज्ञानानन्तरं जगतः सत्त्वेऽपि निरुक्तज्ञाननिवर्त्यत्वसंभवेनार्थान्तरम् । घटनिष्ठतादृशाभावे ज्ञानाधीनत्वसिद्धिमादायाप्यर्थान्तरं दुर्वारम् । एवं घटादेरज्ञानप्रयुक्तत्वानुपगमे स्वप्रयोजकाज्ञानसमानविषयकत्वघटितसंबन्धद्वयावच्छिन्नाभावस्य व्यधिकरणसंबन्धावच्छिन्नाभावस्य केवलान्वयिनो ज्ञानाधीनत्वसिद्धिमादायार्थान्तरम् । व्यधिकरणसंबन्धानवच्छिन्नत्वनिवेशेऽपि व्यधिकरणसंबन्धावच्छिन्नप्रतियोगितायामेव तदनवच्छिन्नत्वसिद्धिमादायार्थान्तरमिति—दूषणमुक्तम् ।

तन्न । ज्ञानाधीनतावच्छेदकानुयोगिताविशिष्टधर्मवत्त्वस्यैव साध्यतया विवक्षितत्वात् । वैशिष्ट्यञ्च स्वनिरूपितस्वप्रयोजकाज्ञानसमानविषयकत्वस्वाश्रयकालपूर्वत्वोभयसंबन्धावच्छिन्नाज्ञानप्रयुक्ततत्संस्कारान्यतराभावप्रतियोगितावच्छेदकत्वसंबन्धेन । प्रपञ्चस्याज्ञानप्रयुक्तत्वानुपगमे निरुक्तसाध्यपर्यवसानासंभवेन निरुक्तार्थान्तराणामनवकाशात् । एवं निरुक्तानुयोगिताविशिष्टधर्मवत्त्वं ज्ञाननिवर्त्यत्वम् । वैशिष्ट्यञ्च, स्वनिरूपितस्वप्रयोजकाज्ञानसमानविषयकत्वस्वाश्रयकालपूर्वत्वोभयसंबन्धावच्छिन्नाभावीयस्वव्यधिकरणसंबन्धानवच्छिन्न प्रतियोगितावच्छेदकत्वसंबन्धेन । एवञ्च प्रपञ्चस्याज्ञानप्रयुक्तत्वाभावे निरुक्तव्यधिकरणसंबन्धावच्छिन्नाभावमादायोक्तार्थान्तराणामनवकाशात् , ईदृशरीत्या अर्थान्तरकथनस्यासांप्रदायिकताया उक्तत्वाच्च ।

इत्थञ्च प्रथमपरिष्कारोक्तरीत्यनुसरणेनैव सकलदोषवारणसंभवात् वक्तव्यविशेषान्तराभावात् तृतीयपरिष्कारः तद्दूषणपरिहारश्च पृथङ् न निरूपितो ग्रन्थकृतेति बोध्यम् ।

अथ वा, ज्ञानप्रयुक्तस्वसमसत्ताकस्वनिष्ठतादात्म्यप्रतियोगित्वावच्छिन्नप्रतियोगिताकाभावकत्वं मिथ्यात्वम्, समसत्ताकत्वञ्च ब्रह्मान्यविषयकज्ञानबाध्यत्वतदभाववत्कादाचित्कत्वान्यतररूपेण, नात एतदनुमानात्पूर्वं सत्ताभेदासिद्धावपि अप्रसिद्धविशेषणता, ज्ञानेन ह्यज्ञानतत्परिणामादिदृश्यसामान्याभावः स्वोत्पत्तिद्वितीयक्षणावच्छिन्नः साध्यते, स चाभावः स्वान्यसर्वदृश्यविरोधी क्षणिक इति। अत्र साध्यत्वञ्च प्रयोज्यतारूपमन्यद्वेति। क्षणिकत्वञ्चास्य न्यायविदामन्त्यशब्दवत्। अतोऽस्य त्रैकालिकत्वमसिद्धम्।

यत्तु—ब्रह्मणि तादात्म्यसंबन्धेन जगतः सत्त्वेऽपि तत्संबन्धावच्छिन्नाभावस्य शशशृङ्गादिनिष्ठस्य ज्ञानाधीनत्वमात्रेणोक्तसाध्यसिद्धिसंभवेनार्थान्तरम्। एवं घटत्वपटत्वाभ्यां दृश्यसामान्याभावस्य दृश्याविरोधिनः ज्ञानाधीनत्वमादायार्थान्तरम्। व्यधिकरणधर्मानवच्छिन्नप्रतियोगिताकत्वनिवेशेऽपि व्यधिकरणधर्मावच्छिन्नप्रतियोगितायामेव व्यधिकरणधर्मानवच्छिन्नत्वसिद्धिमादायार्थान्तरं दुर्वारमिति।

तन्न। अभावे सन्निष्ठत्वविशेषणदानेन शशशृङ्गनिष्ठाभावे ज्ञानाधीनत्वसिद्धिमादायार्थान्तरानवकाशात्। ईदृशार्थान्तरकथनस्यासांप्रदायिकताया उक्तत्वाच्च। स्वात्मकवस्तुसामान्यगगनोभयाभावमादाय सिद्धसाधनवारणाय स्वनिष्ठतादात्म्यप्रतियोगित्वस्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभावस्यैव साध्ये निवेशनीयतया तादृशप्रतियोगित्वत्वातिरिक्तनिरुक्तघटत्वपटत्वोभयावच्छिन्नप्रतियोगिताकाभावस्यातथात्वेन तमादायार्थान्तरानवकाशाच्च।

यत्तु—ब्रह्मणि तादात्म्यसंबन्धेन दृश्याधिकरणे तत्संबन्धावच्छिन्नतदभावस्त्वन्मतेऽनादिसिद्धः। ज्ञाननिवर्त्यत्वस्य मिथ्यात्वपक्षेऽपि रजतमत्रनास्तिनासीन्नभविष्यतीत्यादिप्रतीतीनां प्रमात्वानुरोधेन 'नेह नानास्ति किञ्चन'

---

**टि.** ज्ञानप्रयुक्तेतिमूले प्रयुक्तत्वमुत्तरकालमात्रे प्रतीयमानमधीनत्वं स्वरूपसंबन्धविशेषरूपं अवस्थितिसामान्यविरहपदेन स्वात्मकवस्तुसामान्याभावो विवक्षितः इति चतुर्थं व्याख्यानं समर्थयितुमुपन्यस्यति—**अथवेति**।

इतिश्रुत्यनुरोधेन च ब्रह्मणि तादृशाभावस्य स्वीकरणीयत्वात्। इत्थञ्चानादौ तादृशाभावे ज्ञानाधीनत्वासंभवेन साध्याप्रसिद्धिरिति।

तन्न। नित्ये नरकात्यन्ताभावे प्रायश्चित्तप्रयोज्यत्वस्येवानादौ निरुक्तदृश्याभावे ज्ञानाधीनाग्रिमक्षणसंबन्धवत्त्वरूपस्य क्षेमसाधारणसाध्यत्वस्य संभवात्। अभावस्यानादित्वेऽपि तन्निष्ठाग्रिमक्षणसंबन्धस्य जन्यतया ज्ञानाधीनत्वसंभवेन तत्रैव ज्ञानाधीनत्वनिवेशसंभवाच्च।

पारमार्थिकस्याभावस्यानादित्वेऽपि व्यावहारिकाभावस्य ज्ञानसाध्यत्वमाशङ्क्य तथा सति स्वोत्पत्तिद्वितीयक्षणावच्छिन्नस्य क्षेमसाधारणसाध्यत्वसमर्थनविरोधाद्घटादिवज्जन्यत्वस्यैव संभवादित्यन्तग्रन्थेन प्रतिपादितं दूषणजातमनुक्तोपालम्भनं बोध्यम्।

यत्तु—अनादौ निरुक्ताभावे ज्ञानपूर्वक्षणसंबन्धस्य ज्ञानोत्पत्तिक्षणसम्बन्धस्येव च ज्ञानद्वितीयक्षणसंबन्धस्यापि ज्ञानं विनैव संभव इति।

तन्न। ज्ञानपूर्वकालीनाभावे ज्ञानसाध्यत्वप्रतीतेरभावात् ज्ञानोत्तरकालीन एव ज्ञानसाध्यत्वप्रतीतेः ज्ञानोत्तरकालीनाभावे ज्ञानसाध्यत्वसंभवात्। अन्यथा ज्ञानपूर्वकालेऽपि तथा प्रतीत्यापत्तेः।

एवं अनादिसिद्धस्यापि दृश्यसामान्याभावस्य लोकसिद्धविशेषणतया ब्रह्मवृत्तित्वं ज्ञानोत्पत्तिद्वितीयक्षणावच्छेदेनेति तादृशवृत्तित्वविशिष्टस्य साध्यता संभवति। तादृशविशेषणता च तादृशाभावस्य प्रतियोग्यनवच्छेदककालावच्छेदेनैव ब्रह्मणि, न पूर्वम्। यथा नैयायिकमते नित्यस्य घटे पूर्वमवस्थितस्यापि श्यामरूपाभावस्य प्रतियोग्यनधिकरणकालावच्छेदेनैव तादृशविशेषणतया वृत्तित्वं कारणाभावप्रयोज्यम्।

यत्तु—प्रतियोगिसामान्यानधिकरणकालावच्छेदेनैवाभावस्य तादृशविशेषणतया वृत्तित्वस्वीकारात् तादृशाभावस्य दृश्यसामान्यप्रतियोगिकस्य स्वप्रतियोगिकत्वात् स्वात्मकप्रतियोगिविशेषाधिकरणतादृशज्ञानोत्पत्तिद्वितीयक्षणावच्छेदेन लोकसिद्धविशेषणतया वृत्तित्वासंभव इति।

तन्न। तादृशाभावस्य स्वान्यसर्वदृश्यप्रतियोगिकत्वस्यैव स्वीकारेण प्रतियोगिसामान्यानधिकरणतत्क्षणावच्छेदेन तादृशविशेषणतया वृत्तित्वसंभवात्।

एतेन—तस्य स्वान्यसर्वदृश्यविरोधप्रतिपादनमप्ययुक्तम्, अभावस्य प्रतियोगिमध्ये केनचित्साकमविरोधः केन चित्साकं विरोध इत्यस्य काप्यदर्शनादिति-परास्तम्।

स्वप्रतियोगिकत्वस्यैवानङ्गीकारात्।

यत्तु—तादृशाभावस्याभावान्तराभ्युपगमेऽनवस्था, तदनभ्युपगमे तत्रैवाभावे बाधः हेतोर्व्यभिचारश्च इति।

तन्न। तादृशाभावस्याभावो ब्रह्मरूप इत्यनवस्थाविरहात्। न च प्रथमाभावस्यैव ब्रह्मरूपता स्वीक्रियतामिति शङ्कनीयम्। 'विद्वान्नामरूपाद्विमुक्तः' इति श्रुत्या नामरूपविमोकशब्दिते उक्ताभावे ज्ञानसाध्यत्वप्रतीतेरनुरोधेन तथाऽङ्गीकारात्। सर्वदृश्यविमोकाभिधानस्वारस्येनैव तदभावस्य ब्रह्मरूपतास्वीकारात्। एवञ्च तादृशाभावे ब्रह्मरूपज्ञानाधीनस्वाभावमादाय साध्योपपादनसंभवेन बाधस्य व्यभिचारस्य चानवकाशात्।

एवं दृश्याश्रयकालपूर्वत्वानधिकरणवृत्तित्वविशिष्टान्यत्वस्य पक्षविशेषणत्वेन निरुक्ताभावे बाधस्य हेतुविशेषणत्वेन व्यभिचारस्य च वारणं संभवतीति बोध्यम्।

यत्तु—तदभावस्य क्षणिकत्वं किं द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वं किं वा स्ववृत्तित्वस्वभिन्नक्षणवृत्तित्वोभयसंबन्धेन क्षणविशिष्टान्यत्वरूपं क्षणद्वयावृत्तित्वम्। नाद्यः, तस्य ध्वंसाभ्युपगमे पुनस्तस्यापि ध्वंस इत्यनवस्थानात्। तद्ध्वंसस्य ध्वंसान्तरं विना नित्यतयाऽवस्थाने सत्यत्वप्रसङ्गात्। अज्ञानादेरेव तादृशध्वंसाभ्युपगमसंभवेन मध्ये अभावान्तरकल्पनवैयर्थ्याच्च। नापि द्वितीयः, अनादिसिद्धे तस्मिन् क्षणद्वयवृत्तित्वस्याप्यावश्यकत्वादिति।

तन्न। दृश्याभावस्य स्वरूपतोऽनादेरपि दृश्यविरोधित्वविशिष्टस्य तस्य ज्ञानोत्पत्तिद्वितीयक्षणमात्रवृत्तित्वेन क्षणद्वयावृत्तित्वरूपक्षणिकत्वस्य सूपपादत्वात्। न च तादृशाभावस्य क्षणिकत्वे प्रमाणाभाव इति शङ्कनीयम्। ज्ञानात्

सर्वदृश्याभावबोधिकायाः श्रुतेरेव प्रमाणत्वात् ।

एतेन — ज्ञानप्रयोज्यतावच्छेदकक्षणिकत्वविशिष्टाभावप्रतियोगित्वस्य साध्यतास्वीकारेण निरुक्तानुमानस्यैवाभावक्षणिकत्वे प्रमाणतामुपन्यस्य दूषणाभिधानमनुक्तोपालम्भनं बोध्यम् ।

किञ्च, स्वाधिकरणकालपूर्वत्वशून्यज्ञानाधिकरणकालकत्वमेव ज्ञानोच्छेद्यत्वरूपं ज्ञाननिवर्त्यत्वम् । स्वपदं यत्र ज्ञाननिवर्त्यत्वं स्थाप्यते तत्परम् । दृश्याधिकरणक्षणे दृश्याधिकरणक्षणपूर्वत्वानधिकरणत्वं हि दृश्योच्छेदः । शास्त्रीयचरमतत्त्वज्ञानोत्पत्तिक्षणे च दृश्याधिकरणक्षणपूर्वत्वं नास्ति, तदुत्तरं क्षणस्याप्रसिद्धत्वात्, तत्पूर्वक्षणपूर्वत्वस्य क्षणान्तरे प्रसिद्धस्यापि तत्राभावात् । न तु नैयायिकमत इव ध्वंस एव दृश्योच्छेदः । तस्य सत्यत्वे अद्वैतश्रुतिविरोधात्, मिथ्यात्वे च चरममनोवृत्त्यनन्तरमुत्पन्नस्य तस्य समुच्छेदकाभावेनोच्छेदाभावात् ‘विद्वान्नामरूपाद्विमुक्तः’ इतिश्रुतिविरोधापत्तेः । न चोक्तध्वंसस्य सत्यत्वेऽपि श्रुतेर्न विरोधः तया भावाद्वैतबोधनादिति वाच्यम् । असंकुचिताद्वैतस्य श्रुत्यर्थतया प्रतीयमानत्वात् ।

यत्तु—विशिष्टाद्वैतसिद्धान्तेऽपि सर्वमुक्तिदशायां जडप्रकृतेरीश्वरात्परस्परञ्च भिन्नानामनन्तकोटिजीवानां तदीयगुणानाञ्चावस्थानेऽपि कालतत्त्वस्य क्षणाद्यात्मना तत्तत्कार्यानुगुणपरिणामहेतुभूतकर्मविशेषाभावात् प्रकृत्यादेरिव स्वरूपेणावस्थित्या प्रकृत्यादौ सर्वत्र स्वाश्रयकालपूर्वत्वाभाववद्ज्ञानाधिकरणकालकत्वस्य सत्त्वात्, तदानीं जन्यकालानभ्युपगमात् महाकालमात्रसंबन्धितयाऽवस्थानेऽपि तस्यानादितया तदवधिकपूर्वत्वस्य क्वापि वक्तुमशक्यत्वात्, निरुक्तज्ञाननिवर्त्यत्वस्य सिद्धान्तिनः प्रति साधने सिद्धसाधनं दुर्वारम् । सिद्धसाधनाभावेऽपि निरुक्तरूपोच्छेदस्य सर्वस्यापि स्वरूपनिवृत्तिं विनैव संभवादर्था-

---

**टि.** सिद्धान्तसंमतं ज्ञाननिवर्त्यत्वपरिष्कारान्तरमाह—**किञ्चेति** ।

**उच्छेदाभावादिति** । ननु स्वोत्तरक्षणवृत्तित्वविशिष्टस्य स्वस्यैव अन्त्यशब्दस्येव नाशकत्वमस्तु, अत आह—**विद्वान्नामरूपाद्विमुक्त इति** ।

**सिद्धसाधनाभावेऽपीति** । स्वाश्रयकालपूर्वत्वाभावव्याप्यस्वजन्यपटुतमसंस्कार-

न्तरं दुर्वारम्। स्वत्वस्याननुगतत्वेन साध्यस्य पक्षदृष्टान्तसाधारण्यासंभवश्चेति।

तन्न। प्राचीनमते स्वत्वस्यानुगतत्वात्। नव्यमतानुसरणेऽपि स्वाधिकरणक्षणोत्तरकालावृत्तित्वस्वाधिकरणक्षणवृत्तित्वोभयसंबन्धेन तत्त्वज्ञानविशिष्टत्वं ज्ञाननिवर्त्यत्वमिति नाननुगमः। द्वितीयसंबन्धनिवेशाच्च नासत्त्वमादायार्थान्तरमिति।

यत्तु—ब्रह्मज्ञानोत्तरक्षणस्याप्रसिद्धत्वेन स्वाधिकरणक्षणोत्तरक्षणावृत्तित्वघटितोभयसंबन्धेन ब्रह्मज्ञानविशिष्टत्वस्य प्रपञ्चे अभावाद्बाधः। न च—स्वाधिकरणक्षणोत्तरक्षणवृत्तित्वसंबन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्त्वस्वाधिकरणक्षणवृत्तित्वोभयसंबन्धेन तत्त्वज्ञानविशिष्टत्वस्य साध्यत्वान्न बाधः, ब्रह्मज्ञानोत्तरक्षणस्याप्रसिद्धत्वेऽपि उक्तसंबन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभावस्य व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकस्य प्रसिद्धिसंभवादिति—वाच्यम्। एवं सति घटनाशाधिकरणक्षणवृत्तितत्त्वज्ञानमादाय घटादौ सिद्धसाधनापत्तेः। न च—स्वाधिकरणक्षणोत्तरक्षणवृत्तिवस्तुविशिष्टत्वसंबन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्त्वस्वाधिकरणक्षणवृत्तित्वोभयसंबन्धेन तत्त्वज्ञानविशिष्टत्वस्य साध्यत्वाङ्गीकारान्नोक्तसिद्धसाधनम्। वस्तुविशिष्टत्वञ्च स्वतादात्म्यापन्नत्वस्वसमानसत्ताकत्वोभयसंबन्धेन। घटतादात्म्यापन्नस्य घटसमसत्ताकस्य वस्तुनः तत्प्रयोजकाज्ञानादेर्मुक्तिपर्यन्तं सत्त्वात् घटनाशाधिकरणक्षणवृत्तितत्त्वज्ञानस्योक्तोभयसंबन्धेनाभावादिति—वाच्यम्। एवमपि ब्रह्मज्ञानानन्तरक्षणाप्रसिद्ध्योक्तोभयसंबन्धेन तत्त्वज्ञानविशिष्टत्वस्य ब्रह्मणि सत्त्वेऽपि यथा न मिथ्यात्वं तद्वदेव जगतोऽपि सत्यत्वापत्त्याऽर्थान्तरं दुर्वारम्। एवं स्वोत्तरक्षणवृत्तित्वसंबन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्त्वस्ववृत्तित्वोभयसंबन्धेन क्षणविशिष्टत्वस्यैव णशधात्वर्थत्वे ब्रह्मज्ञानानन्तरं दृश्यं नश्यतीतिवत् ब्रह्म नश्यतीति व्यवहारापत्तिश्चेति।

---

सहितसाक्षात्कारकत्वस्य साध्यत्वे इदानीन्तनब्रह्मसाक्षात्कारे दृश्याश्रयकालपूर्वत्वस्यैव तन्मते सत्त्वेन व्याप्यताघटितसाध्यस्यासिद्ध्या सिद्धसाधनं नास्तीति भावः।

तन्न। स्वस्वीयसंस्कारान्यतराश्रयकालपूर्वत्वाभाववद्ज्ञानाधिकरणकालकत्वमेव ज्ञाननिवर्त्यत्वम्। स्वत्वस्याननुगतत्वे तु तत्त्वज्ञानविशिष्टत्वं बत्। वैशिष्टयञ्चाधेयतासंबन्धेन। आधेयता च स्वस्वसंस्कारान्यतराश्रयकालपूर्वत्वाभाववत्त्वसंबन्धेन। ब्रह्मसंस्कारस्याप्रसिद्ध्या स्वपदेन ब्रह्मोपादानासंभवात् निरुक्ततत्त्वज्ञानविशिष्टत्वस्य ब्रह्मण्यवृत्तेः ब्रह्मवदेव जगतः सत्त्वापत्त्याऽर्थान्तरस्यानवकाशात्। विशिष्टाद्वैतिनं प्रति साधने पूर्वोक्तरीत्या सिद्धसाधनस्य वारणीयत्वे स्वस्वसंस्कारान्यतराश्रयकालपूर्वत्वाभावव्याप्यत्वस्याधेयतावच्छेदकसंबन्धतया विवक्षणीयत्वात्। स्वाधिकरणकालपूर्वभिन्नत्वविशिष्टकालवृत्तित्वमेव णशधात्वर्थः। ब्रह्मज्ञानानन्तरमपि अस्मदाद्यविद्याप्रयुक्तकालस्य सत्त्वात् तत्पूर्वभिन्नत्वं ब्रह्माधिकरणकालस्य नास्तीति ब्रह्मज्ञानानन्तरं ब्रह्मनश्यतीतिप्रयोगापत्तेरनवकाशात्।

---

**टि. कालस्य सत्त्वादिति।** ब्रह्मज्ञानोत्तरक्षणाप्रसिद्ध्यभिधानं मुक्तात्मदृष्ट्या। सर्वथा ब्रह्मज्ञानोत्तरक्षणाप्रसिद्धौ ब्रह्मज्ञानानन्तरं ब्रह्मनश्यतीतिप्रयोगापत्तिरिति भवतां वचनमेवाबोधकं स्यादिति भावः।

**अनवकाशादिति।** स्वावृत्तित्वस्वपूर्वकालवृत्तित्वोभयसंबन्धेन क्षणविशिष्टत्वस्य णशधात्वर्थत्वात् ब्रह्मनश्यतीतिव्यवहारापत्तिर्न संभवति। क्षणपदेन अप्रसिद्ध्या ब्रह्मज्ञानक्षणानन्तरक्षणस्य ग्रहीतुमशक्यत्वात् ब्रह्मज्ञानोत्पत्तिक्षणग्रहणे स्वावृत्तित्वाभावेन स्वावृत्तित्वघटितसंबन्धद्वयेन तद्विशिष्टत्वस्य ब्रह्मण्यसत्त्वादिति **श्रीपरीक्षिन्महाराजाः।**

स्वोत्तरक्षणवृत्तित्वसंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्वसमसत्ताकत्वोभयसंबन्धेन क्षणविशिष्टत्वस्य णशधात्वर्थत्वात् क्षणसमसत्ताकत्वस्य ब्रह्मणि विरहेण निरुक्तक्षणविशिष्टत्वाभावेन ब्रह्मज्ञानानन्तरं ब्रह्म नश्यतीति व्यवहारापत्तेरनवकाश इति **श्रीत्यागराजाध्वरीन्द्राः।**

ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वपक्षे साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वपक्षे च उत्तरज्ञाननिवर्त्यपूर्वज्ञानादौ सिद्धसाधनवारणेऽपि मुद्गरपातनिवर्त्यघटादौ बाधवारणं अवस्थितिसामान्याभावघटनयैव संभवति। स्पष्टञ्चैतत् **विट्ठलेशीये।** अतः अवस्थितिसामान्याभावघटितपरिष्काराणां समर्थन एव ग्रन्थकृतो निर्भरः नेतरपक्षदूषणपरिहारे इति बोध्यम्।

तस्मात् विवरणकारोक्तं ज्ञाननिवर्त्यत्वरूपं मिथ्यात्वं निष्प्रत्यूहमिति सिद्धम् ॥

इति महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिविरचिते
ब्रह्मानन्दीयभावप्रकाशे तृतीयमिथ्यात्वविचारः समाप्तः ॥

---

साक्षात्कारत्वेन ज्ञाननिवर्त्यतदभिन्नतत्प्रयुक्तान्यतमत्वं साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वम् । मुद्गरपातनिवर्त्यघटे ज्ञाननिवर्त्यसूक्ष्मावस्थातादात्म्यस्य पल्लवाज्ञानजीवेशभेदादौ ज्ञाननिवर्त्यमूलाज्ञानप्रयुक्तत्वस्य च सत्त्वेनादोषात् । सेतुदर्शनञ्च चाक्षुषत्वेनैव पापनिवृत्तिहेतुः न साक्षात्कारत्वेनेति नार्थान्तरम् । अथवा इतरानपेक्षसाक्षात्कारनिवर्त्यत्वं तत् । नियमविशेषसहकृतस्यैव सेतुदर्शनस्य पापनिवर्तकत्वान्नार्थान्तरम् । श्रवणादीनां ब्रह्मसाक्षात्कारजनने उपक्षीणतया साक्षात्कारेणाविद्यानिवृत्तौ श्रवणादेरकारणत्वेन न प्रपञ्चे इतरानपेक्षसाक्षात्कारनिवर्त्यत्वस्य बाधः इति **श्रीभट्टत्र्यम्बकशास्त्रिणः** ।

॥ इति तृतीयमिथ्यात्वविचारः समाप्तः ॥

# अथ चतुर्थमिथ्यात्वविचारः

स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं वा मिथ्यात्वम्। तच्च प्रतिपन्नेत्यादिना पौनरुक्त्यपरिहाराय स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वमिति मूले परिष्कृतम्। तत्रैवकारोऽशेषार्थकः। तस्य प्रतीतावन्वयः। तथा च सर्वा स्वप्रकारकप्रतीतिः स्वात्यन्ताभावाधिकरणविशेष्यिका। उक्तप्रतीतित्वमुक्तविशेष्यकत्वव्याप्यम्—स्वप्रकारकप्रतीतिविशेष्यत्वं स्वात्यन्ताभावाधिकरणत्वव्याप्यमिति यावत्। तद्व्याप्तिश्च न तद्वदन्यावृत्तित्वम्, अप्रसिद्धेः। किन्तु स्वव्यापकतत्कत्वम्। वाच्य एव मेयत्वमित्यत्र वाच्यत्वे मेयत्वव्यापकत्ववदुक्तविशेष्यताव्यापकत्वलाभः। तथा च येन संबन्धेन यद्रूपविशिष्टसंबन्धितया यत् ज्ञातं तन्निष्ठतत्संबन्धावच्छिन्नतद्रूपावच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वं पर्यवसितम्। तेन संबन्धान्तररूपान्तरावच्छिन्नमुक्तप्रतियोगित्वमादाय सिद्धसाधनानवकाशः। न च कपालादौ समवायसंबन्धावच्छिन्नघटाभावस्वीकारे कपालादौ घटादिप्रत्यक्षकाले घटाभावादेरपि प्रत्यक्षापत्तिः कपालं सदा घटाभाववदिति ज्ञानस्य प्रमात्वव्यवहारापत्तिश्चेति वाच्यम्। अधिष्ठानगतसत्त्वारोपोऽनादिदृढवासनासहितो दोषविधया तत्र मिथ्यात्वग्रहरूपे घटाभावप्रत्यक्षे प्रतिबन्धक इति घटादिप्रत्यक्षकाले चक्षुरादिना घटाभावादेः प्रत्यक्षापत्तिविरहात्, उक्तप्रमात्वव्यवहारापत्तेश्च वारणात्। मिथ्यात्वग्राहकश्रुत्यादिनोक्तारोपस्योपमर्दानन्तरं तस्य प्रत्यक्षसंभवात्। न च प्रतियोग्यभावयोरेकाधिकरणवृत्तित्वं न संभवतीति वाच्यम्। तयोरेककालवृत्तित्ववदेकदेशवृत्तित्वस्यापि स्वीकारात्। न च—प्रतियोग्यधिकरण-

---

अथ चतुर्थमिथ्यात्वविचारः

**टि.** चित्सुखाचार्योक्तं मिथ्यात्वं निरूपयति—**स्वाश्रयनिष्ठेति**। **पर्यवसितमिति**। यद्यपीदानीमुभयत्र विशेष्यविशेषणभावसाम्यम्, तथापि एकत्र प्रातिस्विकरूपेण तद्व्यक्त्यो विवक्षिताः अन्यत्र तु व्यापकत्वमिति न पौनरुक्त्यम्, स्पष्टा चेयं रीतिः **साकल्यलक्षणे गादाधर्यामिति श्रीविठ्ठलमिश्राः**।

काले अभाववृत्तित्वमवच्छेदकभेदेनैव, तथा देशेऽपि स्यात्, तथा च न मिथ्यात्वमिति—वाच्यम्। किञ्चिद्देशावच्छेदेन काले किञ्चित्कालावच्छेदेन देशे चाभावस्य वृत्तित्वस्वीकारे देशकालनिष्ठानन्तावच्छेदकत्वव्यक्तीनां कल्पने गौरवात् घटादेरभावस्यानवच्छिन्नस्यैव सर्वत्र स्वीकारात्। न च एतत्काले गेहे घटो नास्तीति धीः कालनिष्ठमवच्छेदकत्वमवगाहत इति वाच्यम्। गेहादिनिष्ठाधिकरणताया अवच्छेदकत्वाभावस्य कालेऽवगाहनात्।

नन्वेवं कार्याव्यवहितप्राक्कालावच्छेदेन कार्यवद्देशे वर्तमानस्याभावस्याप्रतियोगित्वे सति अनन्यथासिद्धत्वं कारणत्वं इत्यादिव्यवहारो नोपपद्यत इति चेत्, नोपपद्यतां नाम। तथापि यत्क्षणावच्छेदेनोत्पद्यमानस्य कार्यस्य यद्देशसंबन्धः तत्क्षणाव्यवहितपूर्वक्षणावच्छेदेन कारणस्य तद्देशसंबन्धः इति यत् कार्यनिष्ठं कारणसामानाधिकरण्यं तदवच्छेदकघटत्वादिरूपस्य दण्डादिव्याप्यत्वस्य घटादिकार्ये सत्त्वेन स्वसामानाधिकरण्यावच्छेदकघटत्वकत्वरूपस्य घटकारणत्वस्य दण्डादौ व्यवहार उपपद्यत एव।

यत्तु—'अवृत्तित्वमादायार्थान्तरादिभिः पूर्वमेवोक्तसाध्यपरिष्कारस्य निराकृतत्वात्' इति।

तन्न। घटादेराधेयत्वस्य प्रत्यक्षसिद्धत्वेनावृत्तित्वशङ्काया एवानुदयेनार्थान्तरानवकाशस्य पूर्वमेव प्रतिपादितत्वात्। न च सन् घट इति प्रत्यक्षेण घटादौ सत्त्वसिद्ध्या मिथ्यात्वासिद्धिरिति वाच्यम्। तस्याधिष्ठानसत्त्वविषयकत्वेन घटसत्त्वाविषयकत्वात्, तद्विषयकत्वेऽपि तस्य व्यावहारिकतया मिथ्यात्वाविरोधित्वात्, प्रत्यक्षविषयस्य मिथ्यात्वविरोधिसत्त्वस्य निर्वक्तुमशक्यत्वाच्च।

यत्तु—घटादिविशेष्यकाधिष्ठानगतसत्त्वारोपस्य प्रतिबन्धकतास्वीकारेण घटाधिकरणे तादृशाभावप्रत्यक्षापत्तिवारणमप्यनुचितम्। वस्तुतो घटादिमत् यत् भूतलादि तद्विशेष्यकघटाभावप्रकारकप्रत्यक्षं प्रति सत्त्वारोपस्य प्रतिबन्धकत्वे भूतले घटादिप्रत्यक्षप्रतिबन्धकदोषसमवधानदशायां घटादावुक्तसत्त्वा-

रोपकाले जायमानस्य तद्भूतले घटाभावप्रत्यक्षस्यानुपपत्तिः। प्रतियोगिमत्यपि प्रतियोगिग्रहप्रतिबन्धकदोषादिसत्त्वे तदभावप्रत्यक्षस्य सर्वैरभ्युपगमादिति।

तन्न। दोषस्य सत्त्वारोपनिष्ठप्रतिबन्धकतायामुत्तेजकत्वेन दोषसत्त्वे प्रतिबन्धकाभावेन तदभावप्रत्यक्षे बाधकाभावात्।

किञ्च, घटवति भूतले दोषादिसत्त्वेऽपि व्यावहारिकस्य पारमार्थिकस्य वा घटाभावस्य न प्रत्यक्षम्। तथा सति तादृशज्ञाने भ्रमत्वव्यवहारानुपपत्तेः। ब्रह्मप्रमातिरिक्तज्ञानबाध्यार्थविषयकत्वरूपभ्रमत्वस्य तादृशज्ञानेऽभावात्। किन्तु प्रातिभासिकस्य घटाभावस्य तत्र प्रत्यक्षम्। तथा च तादृशभूतलादिविशेष्यक-प्रातिभासिकान्यघटाभावप्रत्यक्षं प्रति उक्तसत्त्वारोपस्य प्रतिबन्धकत्वे न किञ्चिद्बाधकम्। न च तादृशभूतलविशेष्यकप्रातिभासिकान्यघटाभावप्रत्यक्षस्या-प्रसिद्ध्या तत्सामग्र्यकल्पनादेव तादृशाभावप्रत्यक्षवारणे उक्तप्रतिबन्धकता-कल्पनस्य निरर्थकत्वमिति वाच्यम्। जीवन्मुक्तस्य निरुक्तसत्त्वारोपोपमर्देन तादृशप्रत्यक्षं प्रसिद्धमिति तादृशसामग्र्याः कल्पनीयतया तादृशसामग्रीबलादि-दानीं तादृशाभावप्रत्यक्षवारणाय निरुक्तप्रतिबन्धकत्वकल्पनस्यावश्यकत्वात्।

---

**टि॰ बाधकाभावादिति।** कपाले घटप्रत्यक्षस्य न घटाभावप्रत्यक्षप्रतिबन्ध-कत्वम्। घटे बाधितत्वशङ्कया घटज्ञाने बाधितविषयकत्वरूपाप्रामाण्यसंशयास्कन्दित-त्वात्। अतः घटादौ अबाध्यत्वं अबाध्यतादात्म्यं वा अवगाह्य जायमानं 'कपाले घटः सन्' इति प्रत्यक्षं कपाले घटाभावप्रत्यक्षप्रतिबन्धकम्। जीवन्मुक्तस्य तादृशं प्रत्यक्षं न मिथ्यात्वग्रहे प्रतिबन्धकमिति अनादिदृढवासनासहितं तत् प्रतिबन्धकं कल्प्यते। कपाले घटः सन् इत्यादिज्ञानमेव अधिष्ठानगतसत्त्वारोपशब्देन विवक्षितम्। तदभावाभावत्वानव-च्छिन्नतत्त्वावच्छिन्नतद्वत्ताज्ञानस्य स्वातन्त्र्येण प्रतिबन्धकत्वसूचनाय तदभावप्रत्यक्षत्वाव-च्छिन्नं प्रति तद्वत्ताप्रत्यक्षत्वेन प्रतिबन्धकत्वस्य पार्थक्यसूचनाय वा दोषविधया तस्य प्रति-बन्धकत्वमभिहितम्। तदुक्तं **सिद्धान्तलक्षणे दीधितिकृद्भिः** 'परितः प्रतियोग्युपल-ब्धेर्दोषाद्वा वृक्षे न संयोग इत्यादि नाध्यक्षम्' इति **इति श्रीविठ्ठलमिश्राः।** एवं लघुचन्द्रिकातात्पर्यनिरूपणे भूतले घटप्रत्यक्षप्रतिबन्धकदोषसत्त्वे घटः सन् इत्यारो-पकाले घटाभावप्रत्यक्षानुपपत्तिरूपदूषणमेव न प्रसरतीति बोध्यम्।

न्यायभास्करानुसारेण दूषणमुद्धरति—**किञ्चेति।**

न च घटस्सन्नित्याद्यारोपशून्यतादशायां तादृशाभावप्रत्यक्षापत्तिरेवमपि दुर्वारेति वाच्यम् । तादृशारोपजन्योद्बुद्धसंस्कारस्य तादृशारोपशून्यतादशायां सत्त्वादुक्तापत्तेरनुपपत्तेः ।

नच—एवमपि घटवति भूतले घटाभावविषयकयोरनुमितिशाब्दबोधयोरप्रातिभासिकाभावभानस्योक्तप्रतिबन्धकबलेन वारणासंभवेन तादृशज्ञानयोः प्रमात्वव्यवहारस्य वारयितुमशक्यत्वात् तादृशानुमितिशाब्दबोधयोः प्रमात्वव्यवहारस्येष्टत्वे च प्रत्यक्षेऽपि तादृशव्यवहारे इष्टापत्तिसंभवेन निरुक्तप्रतिबन्धकताकल्पनस्य वैयर्थ्यमिति—वाच्यम् । '**प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्**' इति वचनेन अपच्छेदाधिकरणन्यायेन निषेधशास्त्रत्वेन च आगमप्राबल्यस्य प्रत्यक्षबाधोद्धारे सिद्धौ प्रतिपादितत्वादागमानुसार्यनुमानस्यापि प्रत्यक्षापेक्षया प्रबलत्वेन घटवद्भूतले घटाभावानुमितिशाब्दबोधयोः प्रमात्वव्यवहारोपपत्तावपि घटवति घटाभावप्रत्यक्षापत्तिवारणाय सत्त्वारोपस्य प्रतिबन्धकत्वकल्पनाया आवश्यकत्वात् ।

किञ्च, प्रतियोगिग्रहप्रतिबन्धकदोषादिसमवधानदशायां तदभावप्रत्यक्षस्येष्टत्वेऽपि तादृशदोषादिविरहदशायामभावप्रत्यक्षवारणाय निरुक्तप्रतिबन्धकत्वकल्पनमावश्यकम् । न च—तद्दशायां घटादिलौकिकप्रत्यक्षसामग्रीरूपप्रतिबन्धकबलादेवोक्तापत्तिर्न संभवति । निरुक्तसत्त्वारोपप्रतिबन्धकतामतेऽपि तद्दशायां प्रातिभासिकघटाभावप्रत्यक्षवारणायोक्तसामग्र्या अभावप्रत्यक्षप्रतिबन्धकत्वावश्यकत्वादिति-वाच्यम् । प्रातिभासिकाभावप्रत्यक्षसामग्र्याः दोषघटितायाः प्रबलत्वेन तदाऽभावप्रत्यक्षस्यैवोत्पत्त्या प्रतियोगिप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वस्यासंभवात् ।

---

**टि. तादृशारोपजन्योद्बुद्धसंस्कारस्येति ।** न्यायभास्करानुसारिणी इयमुक्तिः । वस्तुतस्तु घटस्सन्नित्यारोपशून्यतादशायां घटाभावप्रत्यक्षापत्तिरेव न संभवति । तादृशप्रत्यक्षे घटत्वप्रकारकज्ञानस्य कारणत्वात् सदन्यविषयतायाः सत्तादात्म्यविषयतानिरूपितत्वनियमेन सत्तादात्म्याविषयकस्य घटज्ञानस्याभावेन अभावप्रत्यक्षकारणसमवधाने सत्त्वारोपस्यावश्यकत्वादिति बोध्यम् ।

यत्तु—यदप्युक्तं इदानीं गेहे घटो नास्तीति बुद्धेः एतत्काले गृहादिनिष्ठघटाद्यधिकरणतावच्छेदकत्वाभाव एव विषय इति इत्यनूद्य, तन्न, प्रतियोग्यभावयोः अविरोधवादिनां भवतां मते अभावाधिकरणताया इव प्रतियोग्यधिकरणताया अपि किञ्चिदनवच्छिन्नतया गृहादिनिष्ठघटाद्यधिकरणतावच्छेदकत्वस्यैव अप्रसिद्धत्वेन तदभावाप्रसिद्धेः, प्रतियोग्यभावयोः विरोधभञ्जनार्थमेवावच्छेदकभेदस्य स्वीकारात् प्रतियोग्यभावयोरविरोधे अवच्छेदकभेदस्य अकल्पनीयत्वात्, एतत्काले गेहे घटाभावः इति प्रतीतेः एतत्कालावच्छेदेन गेहे घटाभावविषयकत्वेन तत्समानविषयकत्वेनानुभवसिद्धायाः इदानीं गेहे घटो नास्तीति बुद्धेरपि एतत्कालावच्छेदेन गृहादौ घटाभावविषयकत्वस्य युक्तत्वात्—इति दूषणमुक्तम्।

तन्न—अभावस्य सार्वत्रिकत्वेऽपि इदानीं गेहे घटोऽस्ति नास्ति इत्यादिप्रतीतिबलादेवावच्छेदकत्वं तदभावश्चाङ्गीक्रियते इति प्रतियोग्यप्रसिद्धिविरहात्।

यत्तु— यदपि स्वमते सर्वेषां कारणानां कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्याधिकरणवृत्त्यभावाप्रतियोगित्वासंभवेऽपि स्वसामानाधिकरण्यावच्छेदकघटत्वादिमत्त्वरूपघटादिनिष्ठव्याप्तिनिरूपकत्वघटितं कारणत्वं दण्डादेरुपपद्यत इति इत्यनूद्य, तन्न, आधेयतावच्छेदकत्वस्य अतिप्रसक्तधर्मसाधारणतया तद्विशेषरूपसामानाधिकरण्यावच्छेदकत्वस्यापि तथात्वावश्यंभावेन तादृशधर्मवत्त्वस्य व्याप्तिरूपत्वाभावात्, घटत्वादौ भूतलादिवृत्तितावच्छेदकत्वस्यानुभवसिद्धत्वात्, एवं कारणताशरीरे निरुक्तव्याप्तेर्घटकत्वे नियतान्वयव्यतिरेकनिश्चयस्य कारणताग्रहं प्रति सर्वानुभवसिद्धं हेतुत्वं व्यतिरेकव्यभिचारज्ञानस्य तत्प्रतिबन्धकत्वं च न स्यात्, तादृशव्याप्तिग्रहे तस्याविरोधित्वात्—इति दूषणमुक्तम्।

---

**टि. विरहादिति।** इदानीं गेहे घटः इत्यारोपविषयतया आध्यासिकस्य अवच्छेदकत्वस्य प्रसिद्धिः इति **श्रीविठ्ठलमिश्राः**।

एतत्कालविशिष्टगेहे घटाभावविषयकतया एतत्काले गृहवृत्तित्वविशिष्टघटस्य कालि-

तन्न। यतः कारणसामानाधिकरण्यावच्छेदकत्वं कार्यतावच्छेदकनिष्ठं द्विविधम्—अतिप्रसक्तसाधारणं अनतिप्रसक्तत्वनियतञ्च स्वरूपसंबन्धविशेषरूपम्। तत्र द्वितीयस्यैव कारणताशरीरे प्रवेशान्न दोषः। तादृशस्वरूपसंबन्धरूपावच्छेदकत्वज्ञाने च अन्वयव्यतिरेकसहचारज्ञानयोरुभयोरपि हेतुत्वम्। तत्रापि व्यतिरेकसहचारज्ञानं सर्वमतेऽपि विपक्षविशेषेषु व्यतिरेकव्यभिचारग्रहविघटकतया उपयुज्यते। एतादृशकारणताग्रहे कारणसामानाधिकरण्यानवच्छेदककार्यतावच्छेदकरूपव्यतिरेकव्यभिचारज्ञानस्य तदभाववत्ताज्ञानविधया प्रतिबन्धकत्वं सूपपादमिति न काप्यनुपपत्तिः।

एवं घटत्वाद्यवच्छिन्नप्रकारतां आत्मभिन्नत्वावच्छिन्नप्रकारतां वा पक्षीकृत्य स्वव्यापकाभावप्रतियोगितावच्छेदकावच्छिन्नत्वस्वनिरूपितत्वोभयसंबन्धेन विशेष्यताविशिष्टत्वं साध्यम्, दृश्यनिष्ठप्रकारतात्वं हेतुः, इदंरजतमित्यादिज्ञानीयरजतादिप्रकारता दृष्टान्तः, तादृशज्ञानीयरजतादिप्रकारतायामुक्तोभयसंबन्धेन शुक्त्यादिनिष्ठविशेष्यताविशिष्टत्वस्य सत्त्वात्। एवञ्च प्रातिभासिकानभ्युपगमेऽपि न क्षतिः। यद्वा, प्रातिभासिकानभ्युपगमेऽपि गगनाभावादिकं दृष्टान्तीकृत्य स्वसमानाधिकरणाभावप्रतियोगित्वं प्रपञ्चे साध्यते। तच्च स्वाधिकरणावृत्तित्ववृत्तित्वोभयाभाववदभावप्रतियोगित्वम्। गगनाभावे च गगनात्मकाभावप्रतियोगित्वमादाय दृष्टान्ते साध्यनिर्वाहः। अवृत्त्यभावाप्रतियोगित्वस्य पक्षविशेषणत्वाच्च नावृत्त्यभावप्रतियोगित्वमादायार्थान्तरम्। अथ वा, संयोगादिकं दृष्टान्तीकृत्य स्वसमानाधिकरणाभावप्रतियोगित्वमेव साधनीयम्। अव्याप्यवृत्त्यत्यन्ताभावाप्रतियोगित्वेन पक्षविशेषणात् तादृशविशेषणविशिष्टे निरुक्तसाध्यं व्याप्यवृत्त्यत्यन्ताभावे पर्यवस्यति।

यत्तु—प्रथमकल्पे भ्रमीयप्रकारतायां निरुक्तसाध्यस्य सिद्धत्वात् सिद्धसाधनम्। अवच्छेदकावच्छेदेन साध्यसिद्धिमुपगम्योक्तदोषवारणे पर्वतहृदौ वन्हिमन्तौ इत्यादिज्ञानीयप्रकारतायाः पर्वतहृदोभयनिष्ठविभिन्नविशेष्यतानिरूपि-

---

कसंबन्धावच्छिन्नाभावविषयकतया च एतत्काले गृहे घटो नास्ति इति प्रतीतिरुपपादिता अन्यत्र श्रीब्रह्मानन्दसरस्वतीभिः इत्यपि बोध्यम्।

तत्वेन उभयसंबन्धेन ह्रदनिष्ठविशेष्यताविशिष्टत्वेऽपि यथा न वह्नेः मिथ्यात्वं तथा जगन्निष्ठप्रकारतायास्तथात्वेऽपि अमिथ्यात्वापत्तिमादाय अर्थान्तरं दुर्वारमिति ।

तन्न—तादृशप्रकारतायां स्वनिरूपितविशेष्यताव्यापकाभावप्रतियोगितावच्छेदकावच्छिन्नत्वस्य साध्यत्वाङ्गीकारात् स्वनिरूपितविशेष्यतात्वेन स्वाधिकरणनिष्ठविशेष्यताया अपि संग्रहेण अभावे तद्व्यापकत्वासिद्ध्या उक्तार्थान्तरानवकाशात् । न च दृष्टान्तपक्षसाधारणानुगतस्वत्वाभावेन साध्याननुगम इति वाच्यम् । प्राचीनमते स्वत्वस्य अनुगतत्वस्वीकारात् ।

ननु द्वितीयकल्पे अवृत्त्यभावाप्रतियोगित्वस्य पक्षविशेषणत्वे आश्रयासिद्धिः, अभावस्याधिकरणस्वरूपत्वेन गगनादिनिष्ठस्य प्रपञ्चाभावस्य संबन्धान्तरावच्छिन्नप्रतियोगिताकस्य वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्य च गगनादिरूपत्वेन अवृत्त्यभावाप्रतियोगित्वस्य प्रपञ्चेऽभावात् । एवञ्च प्रपञ्चस्य कालिकसंबन्धावच्छिन्नाभावस्य प्रलयावच्छेदेन विद्यमानस्यावच्छिन्नवृत्तिकत्वेन तादृशाभावाप्रतियोगित्वाभावादाश्रयासिद्धेः तृतीयकल्पोऽपि निरस्तः इति चेत् ।

न—वृत्तिताऽनवच्छेदकाभावत्वनिरूपितप्रतियोगिताशून्यत्वस्य अवृत्त्य-

---

**टि· अर्थान्तरानवकाशादिति** । वस्तुतस्तु प्रकारतात्वावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् पर्वतह्रदौ वन्हिमन्तौ इतिज्ञानीयप्रकारतायां विशेष्यताविशिष्टत्वस्य सिद्धत्वेऽपि पर्वतोवन्हिमानितिप्रमीयप्रकारतायामसिद्धत्वात् अवच्छेदकावच्छेदेन निरुक्तसाध्यसिद्धिः वन्हेरमिथ्यात्वे न सम्भवतीति उक्तार्थान्तरस्य अवकाश एव नास्तीति **श्रीपरीक्षिन्महाराजाः** ।

**अनुगतत्वस्वीकारादिति** । नव्यमतानुसारे तु विशेष्यताविशिष्टत्वं साध्यम् ; वैशिष्ट्यं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन, स्वाधिकरणता च स्वनिरूपितप्रकारतानिरूपितविशेष्यतासंबन्धेन, भेदप्रतियोगितावच्छेदकता च स्वावच्छेदकधर्मसंबन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वसंबन्धेन इति बोध्यम् ।

**वृत्तितानवच्छेदकाभावत्वेति** । न च वृत्तितानवच्छेदकमभावत्वमप्रसिद्ध-

भावाप्रतियोगित्वमित्यनेन विवक्षितत्वात् प्रपञ्चाभावत्वस्य वृत्तितानवच्छेदकत्वाभावेन निरुक्ताश्रयासिद्धिविरहात्। तृतीयानुमाने च प्रलये घटत्वादीनां सत्त्वेन प्रपञ्चसामान्याभावस्यासंभवेन तमादाय आश्रयासिद्धेरनुपपत्तेः। घटादेर्जन्यस्य प्रलयावच्छेदेनविद्यमानाभावप्रतियोगित्वेऽपि प्रकृतानुमाने तेषां पक्षत्वाभावेनाश्रयासिद्धेरसङ्गतेः, लघुचन्द्रिकायां व्याप्यवृत्तिघटत्वादिकं पक्षः इत्यभिधानात्।

ननु तृतीये अवच्छिन्नवृत्तिकाभावाप्रतियोगित्वस्य पक्षविशेषणत्वे मिथ्यात्वघटकाभावस्य प्रतियोग्यवच्छेदकदेशकालावच्छिन्नवृत्तिकत्वेन तदप्रतियोगित्वस्य प्रपञ्चेऽभावादाश्रयासिद्धिरिति चेत्।

न—सर्वस्यैवाभावस्य निरवच्छिन्नवृत्तिकत्वेन अवच्छिन्नवृत्तिकाभावाप्रतियोगित्वस्याबाधात्॥

इति महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिविरचिते
ब्रह्मानन्दीयभावप्रकाशे चतुर्थमिथ्यात्वविचारः समाप्तः॥

---

मिति वाच्यम्। गगनाभावाभावत्वस्य वृत्तिताऽनवच्छेदकत्वात्। '**अभावविरहात्मत्वं वस्तुनः प्रतियोगिता'—इत्याचार्योक्त्या** गगननिष्ठप्रतियोगित्वस्य गगनाभावाभावत्वरूपत्वात्।

**अबाधादिति।** अत एव द्वितीयमिथ्यात्वविचारे 'येन संबन्धविशेषेण येन चावच्छेदकविशेषेण' इत्यादिमूलव्याख्यानावसरे 'वस्तुतस्तु अवच्छिन्नवृत्तिकान्यत्वमेव तदधिकरणकात्यन्ताभावे देयम्, अन्यथा व्याप्यवृत्तिसाधारणपक्षकानुमाने व्याप्यवृत्त्यंशे यथोक्तसाध्यसिद्ध्यसंभवात्' इति श्रीब्रह्मानन्दसरस्वतीभिः प्रतिपादितमिति बोध्यम्।

इति चतुर्थमिथ्यात्वविचारः समाप्तः॥

# अथ पञ्चममिथ्यात्वविचारः

सद्विविक्तत्वं वा मिथ्यात्वम्। सत्त्वं प्रमाणसिद्धत्वम्। प्रमाणत्वञ्च दोषासहकृतज्ञानकरणत्वम्। तथा च दोषाजन्यज्ञानविषयभिन्नत्वं मिथ्यात्वम्। अविद्यायाः दोषविधया निमित्तत्वमेव न तु उपादानत्वमिति मतेनेदम्। एवञ्च दोषाजन्यज्ञानं तत्त्वमसीत्यादिवाक्यजन्यनिर्विकल्पकज्ञानमेव, तद्विषयभिन्नत्वं प्रपञ्चे शुक्तिरूप्यादौ च इति समन्वयः। अत्र दोषत्वं भ्रमजनकत्वम्, भ्रमत्वं च जातिः, अतो न दुर्ज्ञेयता। न च—उक्तलक्षणस्यासत्साधारण्येनासत्त्वपर्यवसानमादायार्थान्तरम्, असतो वृत्तिविषयत्वाभावेनोक्तधीविषयान्यत्वस्य तत्र सत्त्वात्; ब्रह्मणो वृत्तिविषयत्वाभावपक्षे ब्रह्मण्यतिव्याप्तिश्च—इति वाच्यम्। सत्प्रतियोगिकत्वविशिष्टतादात्म्यस्यापि साध्यकोटिप्रवेशात्। न च वाचस्पतिमते भ्रमजनकाजन्यधीविषयाप्रसिद्ध्या तदन्यत्वाप्रसिद्धिरिति वाच्यम्। अबाध्यतादात्म्यापन्नं यत् वृत्त्युपहितं तद्भिन्नाविषयकज्ञानत्वस्यैव तन्मते प्रमात्वेनोपहितब्रह्मज्ञानस्य प्रमात्वात् दोषाजन्यज्ञानविषयस्य प्रसिद्ध्या तदन्यत्वाप्रसिद्धिविरहात्। असतोऽप्रसिद्धत्वेऽपि असन्नभवतीति प्रतीत्या तद्भेदप्रसिद्धिवत् दोषाजन्यज्ञानविषयस्याप्रसिद्धावपि तद्भेदस्य प्रसिद्धेश्च। न च वृत्त्युपहिते अव्याप्तिरिति वाच्यम्। एतन्मते वृत्त्युपहितशुद्धब्रह्मालीकभिन्नस्यैव लक्ष्यत्वेनाव्याप्तेरनवकाशात्। स्वनिष्ठधीविषयतात्वव्यापकदोषनिरूपितजन्यतावच्छेदकताकत्वं वा साध्यम्। अतो न साध्याप्रसिद्धिः। शुक्तिरूप्यनिष्ठधीविषयतासामान्यस्य दोषजन्यतावच्छेदकत्वेन तत्र साध्योपपत्तिश्च।

---

**अथ पञ्चममिथ्यात्वविचारः**

**टि अबाध्येति।** वस्तुतस्तु वृत्त्युपहितान्यबाधितविषयत्वप्रयोज्यायाः भ्रमत्वजातेः महावाक्यजन्यज्ञाने अभावात् न दोषाजन्यज्ञानविषयाप्रसिद्धिरिति **श्रीपरीक्षिन्महाराजाः।**

**प्रसिद्धेश्चेति।** न च असन्नभवतीतिप्रतीत्या असद्भेदस्य प्रसिद्धावपि

यत्तु—जगन्मिथ्येत्याकारकजीवन्मुक्तज्ञानीयविषयतायाः दोषजन्यतावच्छेदकत्वाभावेन बाधः, शुक्तिरूप्यं मिथ्या नेदं रजतं इत्यादिज्ञानीयविषयतायाः दोषजन्यतावच्छेदकत्वाभावेन दृष्टान्ते साध्यवैकल्यञ्च। व्यापकत्वमनिवेश्य दोषजन्यतावच्छेदकस्वनिष्ठधीविषयताकत्वस्य साध्यत्वाङ्गीकारे च ब्रह्म क्षणिकं इत्यादिज्ञानीयविषयतायाः दोषजन्यतावच्छेदकत्वेऽपि ब्रह्मणो मिथ्यात्वाभावेनोक्तसाध्यस्य सत्यत्वाविघातकत्वेनार्थान्तरमिति।

तन्न युक्तम्—मिथ्यात्वस्य मिथ्यात्वेन बाधिततया तज्ज्ञानस्य भ्रमत्वेन जीवन्मुक्तानां भिक्षाटनादिप्रवृत्तिप्रयोजकाविद्यायाः सत्त्वेन च पूर्वोक्तविषयतयोरपि दोषजन्यतावच्छेदकत्वेनोक्तस्वनिष्ठेत्यादिपरिष्कारे दोषाभावात्।

अपि च, स्वाभावाविषयकज्ञाननिरूपितस्वनिष्ठविषयतात्वव्यापकदोषजन्यतावच्छेदकताकत्वस्य साध्यत्वान्नोक्तदोषः। उक्तज्ञानयोः स्वाभावाविषयकत्वाभावात्।

यत्तु—एकभ्रमे यस्य दोषस्य कारणता तद्व्यक्तित्वावच्छिन्नं प्रत्येव तस्य कारणतया तादृशभ्रमविषयप्रातिभासिके निरुक्तसाध्यवैकल्यापत्तिः, जन्यतावच्छेदके विषयताया अनिवेशादिति।

तन्न—दोषजन्यतानतिरिक्तवृत्तित्वरूपस्यैव दोषजन्यतावच्छेदकत्वस्य प्रविष्टत्वेन निरुक्तभ्रमीयविषयतायां स्वरूपसंबन्धरूपावच्छेदकत्वविरहेऽपि क्षतिविरहात्।

एतेन—समानाकाराः यादृशयादृशभ्रमाः भिन्नभिन्नदोषेण जनिताः तादृश-

---

शशशृङ्गन्नभवतीतिप्रतीत्यभावेन शशशृङ्गत्वावच्छिन्नभेदस्येव शशशृङ्गत्वसमशीलनिरुक्तधीविषयत्वावच्छिन्नभेदस्यापि अप्रसिद्धिरिति शङ्क्यम्। असतः ख्यातेः स्वीकारे असद्भेदस्येव शशशृङ्गभेदस्यापि स्वीकारे बाधकाभावात्, विशेषानुपलम्भात्, प्रतीत्यभावस्य शपथनिर्णेयत्वात्, निरुक्तधीविषयत्वस्यासत्त्वसमशीलतया तदवच्छिन्नभेदस्येव निरुक्तधर्मावच्छिन्नभेदस्याप्यस्वीकारस्यानुचितत्वाच्च।

**क्षतिविरहादिति।** स्वविषयताव्यापकदोषजन्यताकत्वस्य विवक्षितत्वे न कोऽपि दोषः इति **श्रीपरीक्षिन्महाराजाः।** **भट्टत्र्यम्बकशास्त्रिणां** रीतिमनुसृत्य सद्वि-

प्रातिभासिकेष्वपि निरुक्तसाध्यासंभवः, तत्र दोषाणां परस्परजन्यफले व्यभिचार-वारणायाव्यवहितोत्तरत्वस्य जन्यतावच्छेदककोटौ निवेशावश्यकतया तत्र विषयतानिवेशे प्रयोजनविरहादिति—निरस्तम्। अव्यवहितोत्तरत्वस्य जन्यतावच्छेदकत्वासंभवस्य पक्षतावच्छेदकविचारे विस्तरेणोपपादितत्वाच्च।

किञ्च, इदं लक्षणं विवरणमतानुसारेणापि। तदर्थश्च स्वसमानाधिकरणाभावाप्रतियोगित्वव्यापकविषयतानिरूपकधीविषयत्वावच्छिन्नप्रतियोगिता-कभेदवत्त्वम्। गुरुधर्मस्य अभावप्रतियोगितानवच्छेदकत्वपक्षे उक्तत-द्धीविषयत्वापेक्षया तादृशाभावाप्रतियोगित्वस्य गुरुत्वेनाभावप्रतियोगितावच्छेदकत्वायोगात् तदवच्छिन्नप्रतियोगिताकभेदानिवेशः। स्वसमानाधिकरणाभावप्रतियोगितामात्रस्य साधने द्वितीयमिथ्यात्वेन पौनरुक्त्यम्। दोषाजन्यज्ञान-विषयत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वं वा तदर्थः। अत्र कल्पे दोषशब्देना-ज्ञानं विवक्षितम्। एवञ्च स्वभिन्नविषयकाज्ञानप्रयुक्तधीविषयत्वं पर्यवसितम्। भवति च शुक्तिरूप्यादिकं स्वभिन्नरजतभेदविशिष्टशुक्त्यादिविषयकाज्ञानप्रयुक्तधीविषयः, एवं वियदादिकमपि स्वभिन्नब्रह्मविषयकमूलाज्ञानप्रयुक्तधी-विषयः, इति लक्षणसमन्वयः।

स्वविषयकज्ञानत्वव्यापकभ्रमत्वकत्वमित्यपि युक्तमेव। न च भवन्मते प्रपञ्चो मिथ्येति ज्ञानस्य भ्रमत्वाभावात् बाध इति वाच्यम्। मिथ्यात्वस्यापि मिथ्यात्वेन निरुक्तज्ञानस्य बाधितविषयकतया भ्रमत्वात्।

---

विक्तत्वं परिष्करोति—**किञ्चेति**। **तद्धीविषयत्वेति**। सत्यंसर्वंवाच्यमितिधीविषय-त्वेत्यर्थः।

उक्तरीत्या दोषाजन्यधीत्वस्यापि तद्धीत्वापेक्षया गुरुतया दर्शितभेदोऽप्रसिद्धः इत्याक्षेपमपनुदति—**अत्रेत्यादिना**।

**स्वविषयकज्ञानत्वव्यापकभ्रमत्वकत्वमिति**। अत्र भ्रमत्वपदेन प्रमाभेदो विवक्षितः, तेन प्रपञ्चज्ञानस्य अन्यांशे भ्रमत्वमादायार्थान्तरस्य नावकाशः। न चैवं घटादौ बाधः स्वविषयके ब्रह्मांशे प्रमात्मके अहं ब्रह्म घटो विनाशीति ज्ञाने प्रमाभेदासत्त्वेन स्वविषयकज्ञानत्वव्यापकप्रमाभेदरूपसाध्याभावादिति वाच्यम्। स्वविषय-

अविनाश्यवृत्तिधर्मवत्त्वमित्यस्य विनाशित्वे पर्यवसानेऽपि तस्य स्वस्वीय-संस्कारान्यतरत्वावच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वरूपतया तस्य द्वैतमता-सिद्धत्वेन प्रकृतपक्षे सिद्धसाधनासंभवादिति दिक् ॥

इति महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिविरचिते
ब्रह्मानन्दीयभावप्रकाशे पञ्चममिथ्यात्वविचारः समाप्तः ॥

---

कज्ञानत्वव्यापकस्वविषयकत्वावच्छिन्नप्रमात्वकभेदवत्त्वस्यैव विवक्षितत्वेनादोषात्। **अवि-नाश्यवृत्तीति**। अविनाश्यवृत्तिस्ववृत्तियावद्धर्मवत्त्वस्य विवक्षितत्वात् उक्तमिथ्या-त्वानां सर्वेषामपि अनुगतरूपेण सिद्धया नार्थान्तरमिति **श्रीविठ्ठलमिश्राः**।

इति पञ्चममिथ्यात्वविचारः समाप्तः

---

# अथ मिथ्यात्वमिथ्यात्वविचारः



ननु उक्तमिथ्यात्वस्य मिथ्यात्वे प्रपञ्चसत्यत्वापातः, एकस्मिन् धर्मिणि प्रसक्तयोः विरुद्धयोः एकमिथ्यात्वे अपरसत्यत्वनियमात्, मिथ्यात्वसत्यत्वे च तद्वदेव प्रपञ्चसत्यत्वापत्तेः, उभयथाऽप्यद्वैतव्याघातः, इति चेत्—न, मिथ्यात्व मिथ्यात्वेऽपि प्रपञ्चसत्यत्वानुपपत्तेः। तत्र हि परस्परविरुद्धयोः एकमिथ्यात्वेऽपरसत्यत्वं यत्र मिथ्यात्वावच्छेदकमुभयवृत्ति न भवेत्, यथा परस्पर विरहरूपयोः रजतत्वतदभावयोः शुक्तौ, यथा वा परस्परविरहव्यापकयोः रजतभिन्नत्वरजतत्वयोः तत्रैव, तत्र निषेध्यतावच्छेदकभेदनियमात्, प्रकृते तु निषेध्यतावच्छेदकमेकमेव दृश्यत्वादि, यथा गोत्वाश्वत्वयोरेकस्मिन् गजे निषेधे गजत्वाभावव्याप्यत्वं निषेध्यतावच्छेदकमुभयोस्तुल्यमिति न एकतरनिषेधेऽन्यतरसत्त्वम्, तद्वत्, यथा च सत्यत्वमिथ्यात्वयोः न परस्परविरहरूपत्वं न वा परस्परविरहव्यापकत्वं तथोपपादितमधस्तात्, इति मूलम्।

अत्र प्रसक्तिर्ज्ञानम्, न त्वनुमितिः आपत्तिर्वा; एकस्मिन् धर्मिणि विरुद्धयोरेकदा अनुमित्यापत्त्योरसम्भवात्। ज्ञानं तु संशयरूपं संभवति। तद्धर्मिवृत्तित्वेन ज्ञायमाननिष्ठं तद्धर्मिघटितं मिथ्यात्वं स्वाश्रयविरुद्धत्वसंबन्धेन तद्धर्मिवृत्तित्वेन ज्ञायमाननिष्ठस्य तद्धर्मिणि सत्यत्वस्य स्वाधिकसत्ताकत्वस्य व्याप्यं इति—नियमादित्यन्तस्यार्थः। एवञ्च ब्रह्मणि प्रतीयमानप्रपञ्चमिथ्यात्वस्य ब्रह्मणि प्रपञ्चाभावपर्यवसितस्य मिथ्यात्वोपगमे स्वाश्रयविरुद्धत्वसंबन्धेन प्रपञ्चे मिथ्यात्वोपगमपर्यवसानात् तद्व्यापकसत्यत्वापत्तिः। अस्मिन् पक्षे एकस्मिन् धर्मिणि—ब्रह्मणि प्रसक्तयोः प्रपञ्चतदभावयोः एकस्य-प्रपञ्चाभावस्य मिथ्यात्वे प्रपञ्चस्य सत्यत्वापत्तिरिति अक्षरार्थः।

टीकाकारमते तु प्रपञ्चमिथ्यात्वस्य मिथ्यात्वोपगमे स्वाश्रयविरुद्धत्वसंबन्धेन तद्धर्मिवृत्तित्वेन-प्रपञ्चनिष्ठत्वेन ज्ञाते सत्यत्वे मिथ्यात्वोपगमपर्यवसानात् तद्व्यापकस्याधिकसत्ताकत्वस्य सत्यत्वे आपत्तिरिति भावः। प्रपञ्चगतस-

त्यत्वं स्वाश्रयगतमिथ्यात्वापेक्षया अधिकसत्ताकम्, स्वाश्रयविरुद्धत्वसंबन्धेन मिथ्यात्वमिथ्यात्वविशिष्टत्वात् । अस्मिन् पक्षे प्रपञ्चरूपैकधर्मिणि प्रसक्तयोः मिथ्यात्वसत्यत्वयोः मध्ये एकस्य-मिथ्यात्वस्य मिथ्यात्वे सत्यत्वस्य तात्त्विकत्वापत्तिरित्यक्षरार्थः । मिथ्यात्वसमानाधिकरणं तद्धर्मिणिज्ञातपरस्परविरुद्धोभयत्वं तद्धर्मिणि स्वाश्रयैकापेक्षाधिकसत्ताकस्वाश्रयापरकं यथा शुक्तौरजतनिष्ठ-मिथ्यात्वसमानाधिकरणं रजततदभावोभयत्वं स्वाश्रयरजताधिकसत्ताकस्वाश्रय-रजताभावकं इति वा, परस्परविद्धोभयैकनिष्ठं मिथ्यात्वं स्वसमानाधिकरणैकधर्मि-ज्ञातपरस्परविरुद्धोभयत्वाश्रयैकापेक्षाधिकसत्ताकस्वाश्रयापरकनिष्ठं यथा रजत-निष्ठमिथ्यात्वं इति वा, यन्निष्ठमिथ्यात्वं तद्धर्मिज्ञातपरस्परविरुद्धयदुभयैकवृत्ति तत् तद्धर्मिणि तदुभयत्वाश्रयैकापेक्षाधिकसत्ताकतदुभयत्वाश्रयापरकं इति वा सामान्यव्याप्तिः अत्रेदंबोध्यमित्यादिचन्द्रिकाग्रन्थाभिप्रेता । एवञ्च मिथ्यात्वा-वच्छेदकीभूतैकधर्मशून्ययोः यदेकं मिथ्या तयोरेकापेक्षयापरमधिकसत्ताकमिति नियमः । अत्र शून्यान्तोपादानात् एकगजारोपितयोः परस्परविरुद्धयोः गोत्वाश्व-त्वयोः एकापेक्षयाऽपरस्याधिकसत्ताकत्वविरहेऽपि न क्षतिः । तत्र गजत्वात्यन्ता-भावव्याप्यत्वरूपमिथ्यात्वावच्छेदकैकधर्मसत्त्वेन तच्छून्यत्वविरहात् । एवञ्च प्रपञ्चगतमिथ्यात्वापेक्षया सत्यत्वस्याधिकसत्ताकत्वविरहेऽपि न क्षतिः । तत्र सत्य-त्वमिथ्यात्वयोः मिथ्यात्वावच्छेदकीभूतदृश्यत्वरूपैकधर्मसत्त्वेन तच्छून्यत्वविरहात् ।

यत्तु—अस्तु वा मिथ्यात्वं यत्किञ्चित् । तथापि तत् सत्यं मिथ्या वा ? नाद्यः, अद्वैतहानेः तत्र दृश्यत्वहेतोर्व्यभिचाराच्च । तस्य अनुमितिविषयत्वेन दृश्यत्वाक्षतेः । नान्त्यः, मिथ्याभूतमिथ्यात्वस्य स्वनिष्ठात्यन्ताभावप्रतियोगि-स्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगित्वे पर्यवसानेन तस्य प्रपञ्चे अस्माभिरप्यभ्युपगमेन सिद्धसाधनात् । स्वरूपसंबन्धेन मिथ्यात्वस्य साध्य-त्वाङ्गीकारेऽपि, जगत् सत्यं स्वनिष्ठात्यन्ताभावप्रतियोगिस्वप्रकारकधीविशेष्य-

---

**अथ मिथ्यात्वमिथ्यात्वविचारः**

**टि.** एतावता सिद्धिलघुचन्द्रिकयोराशयं विशदीकृत्य न्यायभास्करोक्तं दूषणं परिहर्तुमनुवदति—**यत्त्विति** ।

ताव्यापकीभूताभावप्रतियोगित्वकत्वात् आत्मवत् इत्यनुमानात् जगत्सत्यत्वस्य दुर्वारत्वात्। न चात्मत्वमुपाधिः, तस्य व्यापकत्वसन्देहेऽपि मिथ्यात्ववद्भेदरूपसत्यत्वाभावे निरवच्छिन्नविशेषणतया मिथ्यात्वाभावानुपपत्तिरूपानुकूलतर्कस्य सत्यत्वसाधकानुमाने सत्त्वेन सन्दिग्धोपाधेरदोषत्वादिति।

तन्न—साध्यभूतसत्यत्वस्य काल्पनिकत्वे सिद्धसाधनात् पारमार्थिकत्वे शुक्तिरूप्ये व्यभिचारात् उक्तानुमानात् जगत्सत्यत्वस्य असिद्धेः। किञ्चात्रानुमाने आत्मत्वमुपाधिः, तस्य दृष्टान्ते साध्यव्यापकत्वात् पक्षे साधनाव्यापकत्वाच्च। न चोपाधेः साध्यव्यापकत्वानिश्चय इति वाच्यम्। यद्यात्मत्वं न स्यात् तर्हि सत्यत्वमपि न स्यादिति तर्केण उपाधेः साध्यव्यापकत्वनिश्चयात्। न च—शुक्तिरूप्ये न व्यभिचारः, शुक्तौ भासमानरूप्यस्यैव शुक्तिरूप्यशब्दार्थतया तस्य सत्यत्वात् इति—वाच्यम्। रूप्यस्य सत्यत्वे कटकाद्यर्थक्रियाकारित्वापत्तिः 'नेदं रजतं मिथ्यैव रजतमभात्' इतिप्रतीतिविरोधापत्तिश्च। सच्चेन्न बाध्येत असच्चेन्न प्रतीयेत, रजतं बाध्यते प्रतीयते च, अतः शुक्तौ भासमानरूप्यं अनिर्वचनीयमेवेति, तत्र व्यभिचारो दुर्वारः। न च मिथ्यारजतोत्पत्तावपि तद्गतमिथ्यात्वस्य मिथ्यात्वे मानाभावान्न व्यभिचार इति वाच्यम्। शुक्तिरूप्यगतं मिथ्यात्वं मिथ्या इति विशेषदर्शिनां प्रतीतेः तस्य मिथ्यात्वात्। किञ्च, शुक्तिरूप्यमिथ्यात्वं मिथ्या मिथ्यात्वोपेतधर्मिवृत्तित्वात् स्वाप्नगजरूपवत् इत्यनुमानेन तस्य मिथ्यात्वसिद्धेः व्यभिचारो

---

**टि· व्यापकत्वनिश्चयादिति**। 'मृत्तिकेत्येव सत्यम्, एवं सौम्य स आदेशो भवति, तत्सत्यं स आत्मा, सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुत्या आत्ममात्रसत्यत्वावगमात् सत्यत्वं यद्यात्मत्वव्यभिचारि स्यात् तर्हि आत्मरूपकारणमात्रसत्यत्वग्राहिका उक्तश्रुतयः उपरुध्येरन्निति तर्केणोपाधेः साध्यव्यापकत्वनिश्चय इति **श्रीत्यागराजाध्वरीन्द्राः**।

सत्यंज्ञानमनन्तमिति श्रुतौ सत्यत्वस्य ब्रह्मलक्षणत्वोक्तेरेवाप्रयोजकशङ्कावारकतर्करूपत्वम्, ब्रह्ममात्रसत्यत्वादेव 'सदेव सौम्येदमग्र आसीत्' इति श्रुतौ 'असंभवस्तु सतोऽनुपपत्तेः' इति ब्रह्मसूत्रे च केवलसत्पदेन ब्रह्मनिर्देश उपपद्यते, इति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः**।

दुर्वारः। न च—ताहशमिथ्यात्वं न मिथ्या सत्यभूततद्विरुद्धधर्मासमानाधिकरणत्वात् यत् सत्यभूतस्वविरुद्धधर्मसमानाधिकरणं न भवति तन्मिथ्या न भवति यथा गोत्वविरुद्धसत्यभूतगोत्वाभावासमानाधिकरणं गोनिष्ठं गोत्वं न मिथ्या इत्यनुमानेन उक्तानुमानस्य सत्प्रतिपक्षितत्वेन शुक्तिरूप्यमिथ्यात्वस्य मिथ्यात्वासिद्धेः न व्यभिचार इति—वाच्यम्। सत्यभूतसत्यत्वानधिकरणमपि रूप्यं सत्यभूतस्य मिथ्यात्वस्याधिकरणं न भवति, किन्तु मिथ्याभूतस्यैव, रूप्यस्य धर्मिण एव मिथ्यात्वात्। तथा च रूप्यमिथ्यात्वमिथ्यात्वसाधकानुमाने दोषाभावेन रूप्ये व्यभिचारः तदवस्थ एव। एवं यत् सत्यभूततद्विरुद्धसमानाधिकरणं न भवति तन्मिथ्या न भवति इति सामान्यव्याप्तौ गजारोपितगोत्वादौ व्यभिचारः। न हि सत्यभूतस्य गोत्वविरुद्धस्याश्वत्वादेरनधिकरणे गजे तद्विरुद्धं गोत्वं सत्यं भवति, किन्तु गोत्वं तद्विरुद्धमश्वत्वञ्चेत्युभयमपि तत्र मिथ्यैवेति। न च—उक्तव्याप्तौ विरुद्धत्वं न सहानवस्थानरूपम्, किन्तु परस्परविरहरूपत्वम्, न च गोत्वाश्वत्वे परस्परविरहरूपे, अतो न व्यभिचार इति—वाच्यम्। यत्र स्वप्नावस्थायां एकस्मिन् गजस्तदभावश्च दृष्टः तत्राधिकरणे सत्यभूतस्य गजाभावविरहरूपस्य गजस्यानधिकरणत्वं वर्तते, तत्र गजाभावस्यापि मिथ्याभूतस्यैवाधिकरणता, न तु सत्यभूतस्य, तत्र गजस्तदभावश्चेत्युभयमपि मिथ्यैवेति परस्परविरहरूपत्वात्मकविरुद्धत्वगर्भाया अपि उक्तव्याप्ते र्व्यभिचारस्तदवस्थ एव। न च सत्यभूतब्रह्मधर्मत्वस्य सत्यत्वसाधकत्वाभाववत् मिथ्याधर्मत्वस्य न मिथ्यात्वसाधकत्वमिति वाच्यम्। सत्यगजवृत्तिप्रातिभासिकगोत्वे व्यभिचारेणैव सत्यभूतब्रह्मधर्मत्वस्य सत्यत्वसाधकत्वाभावः न तु अनुकूलतर्काभावरूपाप्रयोजकत्वेनेति अनुक्तोपालम्भनत्वात्। यदि धर्म्यन्यूनसत्ताकत्वस्य धर्मविशेषणत्वेन व्यभिचारो वार्यत इति मन्यते तदा अन्यूनसत्ताकत्वघटितहेतोः ब्रह्मधर्मे पक्षे असिद्धिः न त्वप्रयोजकत्वम्।

---

टि. **धर्मिण एव मिथ्यात्वादिति**। पक्षेतरत्वमुपाधिरिव अनुकूलतर्कविरहदशायां पक्षीयव्यभिचारोऽपि दोष इत्यभिसन्धिः।

अतः पूर्वोक्तजगत्सत्यत्वसाधकानुमानस्य मिथ्याभूतमिथ्यात्वकत्वस्य सत्यत्वाभाववति शुक्तिरूप्ये व्यभिचारित्वेनात्मत्वरूपोपाधिग्रस्तत्वेन च जगतः सत्यत्वप्रत्याशा निरस्ता । अधिकं सिद्धान्तवैजयन्त्यां द्रष्टव्यम् ।

यत्तु—मिथ्यात्वावच्छेदकैकधर्मशून्ययोर्ययोरेकं मिथ्या तयोरेकापेक्षया अपरमधिकसत्ताकं इत्येव नियमः, यथा परस्परविरहरूपयोः रजतत्वतदभावयोः शुक्तौ, यथा वा परस्परविरहव्यापकयोः रजतभिन्नत्वरजतत्वयोः तत्रैव, इत्याद्यनूद्य; तन्न–भेदाभावस्य भेदप्रतियोगितावच्छेदकरूपतया रजतभिन्नत्वरजतत्वयोरपि परस्परविरहरूपताया एव युक्तत्वात्। किञ्च उक्तनियमप्रविष्टं विरुद्धत्वं न सहानवस्थानरूपम् । एकगजारोपितयोः गोत्वाश्वत्वयोः विरोधाभावादेव व्यावृत्त्या शून्यान्तोपादानवैयर्थ्यात्, रजतत्वतदभावयोरपि शुक्तौ सामानाधिकरण्यसत्त्वेन तत्र नियमोपपादनायोगाच्च । किन्तु परस्पराभावतद्व्यापकोभयसाधारणं परस्पराभावव्यापकत्वं तथा । तस्य च गोत्वाश्वत्वव्यावृत्तत्वेन तद्व्यावर्तकविशेषणानुपादानात् उक्तापत्तिदुर्वारैवेति दूषणमुक्तम् ।

तत् अज्ञानविलसितम् । एकस्मिन् धर्मिणि प्रसक्तयोः विरुद्धयोर्द्वयोः एकापेक्षया अपरमधिकसत्ताकमिति वाक्यमेव व्याहतार्थम् । असमानाधिकरणयोः एकस्मिन् वृत्तित्वासंभवात् । अतः विरुद्धत्वेन पराभिमतयोः इत्येव विवक्षितमिति वक्तव्यम् । एवञ्च गोत्वाश्वत्वयोः विरुद्धत्वस्य पराभिमतत्वात् तत्र व्यभिचारवारणाय शून्यान्तोपादानस्यावश्यकत्वेन निरुक्तापत्तिविरहात्। आवश्यकी च इयं रीतिस्तवापि। अन्यथा परस्परविरहव्यापकत्वं विरुद्धत्वमित्युक्तिरपि न संगता । शुक्तौ प्रसक्तस्य प्रातिभासिकरजतत्वस्य व्यावहारिकस्य रजतत्वाभावस्य च निरुक्तविरोधविरहात्, व्यावहारिकरजतत्वाभावाभाववति व्यावहारिके रजते प्रातिभासिकरजतत्वस्यावृत्तेः । अन्यत् सुगमम् ।

---

**टि. अन्यत्सुगममिति** । सत्यत्वमिथ्यात्वयोः परस्परविरहरूपत्वेऽपि भिन्नसत्ताकत्वमेव सिद्ध्यति सत्यत्वं प्रातिभासिकं मिथ्यात्वं च व्यावहारिकं इत्येकः पक्षः समसत्ताकयोरपि तयोः संयोगतदभाववदविरोधः इत्यन्यः पक्षश्च व्युत्पादितः **सिद्धौ** ।

किञ्च, प्रपञ्चमिथ्यात्वस्य सत्यत्वमिथ्यात्वविकल्पेन अस्मान् प्रति दूषणोक्तिः नित्यसमा जातिः । तदुक्तम्—

---

तत्र द्वितीयपक्षावतरणिकायां लघुचन्द्रिकोक्तं प्रथमपक्षास्वरसनिमित्तमेव स्वकीयदोषवत् निरूपितं **न्यायभास्करे** । 'संयोगतदभाववदविरोधः' इत्युक्तं न युक्तम्, संयोगतदभावयोरपि एकावच्छेदेन एकत्रावृत्तित्वरूपविरोधसत्त्वात्, इति न्यायभास्कराभिधानमसङ्गतम् । निरुक्तविरोधस्य सत्त्वेऽपि गोत्वतदभावस्थले दृष्टः प्रतियोग्यभावयोः एकत्रावृत्तित्वरूपविरोधः संयोगतदभावयोः प्रतीतिरूपप्रमाणबलात् यथा त्यज्यते, तथा उभयविधस्यापि विरोधस्याभावः सत्यत्वमिथ्यात्वयोः अस्माभिः स्वीक्रियते, तेषामिवास्माकमपि पक्षकोटिप्रविष्टमिथ्यात्वे स्वसमानाधिकरणस्वान्यूनसत्ताकाभावप्रतियोगित्वरूपमिथ्यात्वग्राहकस्यानुमानस्य निरुक्तमिथ्यात्वग्राहकस्य श्रुतेश्च प्रमाणस्य सत्त्वादिति मूलाशयवर्णनात् । द्वितीयपक्षनिरूपणावसरे समसत्ताकभावाभावयोरविरोधे 'अभेदोपादाना भेदकल्पना' इति भामतीग्रन्थेन विरोधमुद्भाव्य संभवप्राचुर्येण तद्ग्रन्थसाङ्गत्यं इति परिहारोऽभिहितः लघुचन्द्रिकायाम् । तत्र परिहारं अनुद्धाट्य भामतीग्रन्थविरोधकथनेन दूषणमुपसञ्जहार न्यायभास्करकारः ।

'यथा च सत्यत्वमिथ्यात्वयोः न परस्परविरहरूपत्वं न वा परस्परविरहव्यापकत्वं तथोपपादितमधस्तात्' इति सिद्धिग्रन्थासाङ्गत्योद्भावनं तु लघुचन्द्रिकाव्याख्यानेनैव पराहतम् । मिथ्यात्वाभावः सत्यत्वमिति मूलविरोधश्च न संभवति । द्वितीयमिथ्यात्वविचारावसाने 'उक्तमिथ्यात्वाभावस्य सत्यत्वरूपत्वात्' इत्यभिधानेन प्रतिपन्नोपाधीत्यादिमिथ्यात्वाभावस्यैव पूर्वं सत्यत्वरूपतोक्तेः । अत्र च सदसद्विलक्षणत्वात्मकमिथ्यात्वाभावरूपत्वस्य निराकरणात् । स्पष्टं चैतत् **विट्ठलेशीये** ।

लघुचन्द्रिकोक्तानामेव स्वीयदोषतया निरूपणावसरे 'तुच्छस्वीकर्तृमतेऽपि विशेषाभावकूटातिरिक्तसामान्याभावास्वीकर्तृणां भवतां मते उभयाभावस्य प्रत्येकाभावानतिरिक्ततया स्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगित्वसत्तादात्म्योभयपर्यवसितसदसद्विलक्षणत्व-रूपमिथ्यात्वाभावत्वस्य सत्यत्वे प्रतिक्षेप्तुमशक्यत्वाच्च' इत्यधिकावापः न्यायभास्करकृतः असङ्गतः । सदसद्विलक्षणत्वशरीरे सत्प्रतियोगिकत्वोपलक्षिततादात्म्यस्यैवासद्वारकस्य निविष्टत्वेन तस्य च ब्रह्मसाधारण्येन तदभावघटितस्य निरुक्तोभयाभावस्य ब्रह्मावृत्तितया सत्यत्वरूपतायाः संभवदुक्तिकतायाः एवाभावात् । तथा च लघुचन्द्रिकाग्रन्थेनानुक्तपरिहारस्यानपेक्षणात् विशिष्यात्र बिचारे निरूपणीयं नास्तीति भावः ।

'धर्मस्य तदतद्रूपविकल्पानुपपत्तितः ।

धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत् ॥' इति। धर्मस्य-साध्यस्य, तदतद्रूपत्वयोः विकल्पौ—प्रत्येकं साध्येऽभ्युपगतौ, तयोरनुपपत्तिः—तत्तदापादककानिष्टापत्तिभयादसंभवः, तस्मात् धर्मिणः-पक्षस्य तद्विशिष्टत्वस्य-साध्यविशिष्टत्वस्य भङ्गः—असंभवः नित्यसमाख्यः जातिविशेषरूपो दोष इत्यर्थः। प्रकृते पक्षे प्रपञ्चे मिथ्यात्वरूपसाध्यस्य मिथ्यात्वे प्रपञ्चसत्यत्वापत्तिः, सत्यत्वे च अद्वैतहान्यापत्तिः, इति मिथ्यात्वस्य उक्तद्वयान्यतररूपताया दुर्वचत्वात् तृतीयप्रकारे च अलीकत्वापत्त्या प्रपञ्चरूपपक्षे मिथ्यात्वरूपसाध्यवैशिष्ट्यभङ्गः, सदसतोः उपरागाभावात्, इति नित्यसमाजातिलक्षणसमन्वयः। विकल्पितकोट्योः अन्यतरस्य अद्वैतहानिप्रयोजकत्वेऽपि अन्यस्य प्रपञ्चसत्यत्वापत्तिद्वारा प्रपञ्चे मिथ्यात्ववैशिष्ट्यभङ्गप्रयोजकत्वात् उक्तलक्षणमस्त्येव। कोटिद्वयस्यापि धर्मिणि साध्यवैशिष्ट्यभङ्गप्रयोजकतायाः उक्तकारिकास्वारस्याल्लाभेऽपि नानुपपत्तिः। मिथ्यात्वस्यापि मिथ्यात्वानुमाने पक्षत्वेन तस्य सत्यत्वे पक्षे मिथ्यात्ववैशिष्ट्यभङ्गात्।

यत्तु—विकल्पितकोटिद्वयस्य यथासंभवं प्रपञ्चसत्यत्वापत्त्यद्वैतहान्योः प्रयोजकत्वेऽपि मिथ्यात्ववैशिष्ट्यभङ्गप्रयोजकत्वाभावः, तात्त्विकसत्त्वस्य मिथ्याभूतमिथ्यात्वं प्रति अविरोधित्वेन तात्त्विकसत्यत्वापत्तिद्वाराऽपि तद्वैशिष्ट्यभङ्गप्रयोजकत्वाभावात् इत्युक्तम्

तदयुक्तम्—मिथ्यात्वस्य सत्यत्वविकल्पे पक्षान्तर्गतमिथ्यात्वे तद्वैशिष्ट्यभङ्गप्रयोजकत्वस्य स्फुटत्वात् ॥

**इति पलमानेरिग्रामवास्तव्येन श्रीसुन्दरार्यसेवालब्धविवेकवता**
**महामहोपाध्यायश्रीपञ्चापगेशविदुषा विरचिते**
**ब्रह्मानन्दीयभावप्रकाशे मिथ्यात्वमिथ्यात्वविचारः समाप्तः ॥**
**समाप्तश्चायं प्रथमो भागः**

---

**टि. पक्षान्तर्गतमिथ्यात्वेति।** सामान्यपक्षकानुमानाभिप्रायेणेदम्। वियदादिपक्षकानुमानवत् मिथ्यात्वपक्षकविशेषानुमानमपि संभवतीति बोध्यम्।

**स्फुटत्वादिति ।** विकल्पितकोटयोः एकस्याः साध्यवैशिष्ट्यभङ्गप्रयोजकत्वेऽपि नित्यसमाजातिरिति भावः। वस्तुतस्तु मिथ्यात्वकोटेरपि साध्यवैशिष्ट्यभङ्गप्रयोजकत्वमस्त्येव, प्रपञ्चगतसत्यत्वस्य सत्यत्वे प्रपञ्चसत्यत्वेन तत्र मिथ्यात्वस्य लोकसिद्धविशेषणतासंबन्धेनासंभवात् , लोकसिद्धविशेषणतया साध्यवैशिष्ट्यभङ्गप्रयोजकत्वस्यैव लक्षणे विवक्षितत्वात् , इति **श्रीपरीक्षिन्महाराजाः ।**

शुक्तित्वस्य प्रातिभासिकशुक्तिरूप्याधिकसत्ताकत्वेऽपि प्रातिभासिकरूप्यप्रयोजकाज्ञानविषयत्वेन शुक्तिरूप्यभङ्गप्रयोजकत्ववत् तात्त्विकसत्यत्वस्य मिथ्याभूतमिथ्यात्वाधिकसत्ताकत्वेऽपि मिथ्याभूतमिथ्यात्ववैशिष्ट्यभङ्गप्रयोजकत्वसंभवः इति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः ।**

**इति अण्णामलैविश्वविद्यालयाध्यापकेन पण्डितराजेन**
**वि. सुब्रह्मण्यशास्त्रिणा संकलिते टिप्पणे**
**मिथ्यात्वमिथ्यात्वविचारः**
**समाप्तः ॥**

---

**शुभं भूयात्**

॥ श्रीगुरुभ्यो नमः ॥

# ब्रह्मानन्दीयभावप्रकाशः

## ॥ द्वितीयो भागः ॥

## दृश्यत्वविचारः

मिथ्यात्वे साध्ये हेतुभूतं दृश्यत्वं वृत्तिव्याप्यत्वम्। तच्च वृत्तेराकाराख्यं विषयत्वम्। वृत्तित्वं तु 'ह्रीर्धीर्भीः' इत्यादिनाऽनूद्यमानो जातिविशेषो धीत्वरूपः। न च—तस्याविद्यावृत्तिनिष्ठत्वमस्ति न वा? नाद्यः, उक्तश्रुतौ मन एवेत्यस्यासंगतेः, तस्या मनःपरिणामत्वाभावेन तत्तादात्म्याभावात्, न द्वितीयः, शुक्तिरूप्यादौ साधनवैकल्यात् सुखादौ वृत्त्यस्वीकारपक्षे तत्र भागासिद्धेश्चेति-वाच्यम्। पक्षद्वयेऽपि दोषाभावात्। उक्तश्रुतौ मनःपरिणामरूपाया एव धियो निर्देशेन तस्या एव तत्तादात्म्योक्तेस्संभवात्। उक्तश्रुतौ धीमात्रस्य निर्देशेऽपि विशेष्यविशेषणाकारवृत्तिद्वयावच्छिन्नसाक्षिण्यपि धीव्यवहारात् तस्याश्च विशेष्याकारमनोवृत्तिघटितत्वेन मनएवेतिनिर्देशसंभवात्। तथा च वृत्तिद्वयावच्छिन्नचिद्रूपधीविषयत्वस्य रूप्यादौ सत्त्वेन न साधनवैकल्यम्। सुखादेः वृत्त्यस्वीकारपक्षेऽपि तस्य वृत्तिरूपत्वात् तदवच्छिन्नचिद्रूपधीविषयत्वं तत्रास्तीति न भागासिद्धिः।

यद्वा, सुखादेर्वृत्तिस्वीकारपक्षे एवोक्तदृश्यत्वं हेतुः। वृत्तेरनङ्गीकारपक्षे तु स्वावच्छिन्नचित्तादात्म्यं सर्वसाधारणं हेतुरिति न दोषः।

---

॥ श्रीगुरुभ्यो नमः ॥

### टिप्पणम्

### ॥ द्वितीयो भागः ॥

### ॥ अथ दृश्यत्वविचारः ॥

एतावता मिथ्यात्वानुमाने पक्षं साध्यञ्च निष्कृष्य हेतुनिरूपणमारभते—**मिथ्यात्वे इति। वृत्तेरनङ्गीकारपक्षेत्विति**। सुखादेः प्रत्यक्षाकारवृत्तेरभावेऽपि अनुमित्यादिमनोवृत्तिविषयत्वान्नासिद्धिरित्यपि बोध्यम्।

ननु 'आत्मा वा अरे द्रष्टव्यः' इत्यत्र तव्यप्रत्ययेन 'ब्रह्म वेद'इत्यत्र द्वितीयया 'ब्रह्मजिज्ञासा' इत्यत्र कर्मणिषष्ठ्या च शुद्धस्य वृत्तिविषयत्वावगमेन तत्र व्यभिचारः। न च—शुद्धस्य वृत्तिविषयत्वानङ्गीकर्तृवाचस्पतिमते न व्यभिचारः, तन्मते 'आत्मा वा अरे' इत्यत्रोपहितस्यैव विषयत्वेन तत्र मिथ्यात्वस्यापि सत्त्वात्, अत एव 'सर्वप्रत्ययवेद्ये च' इति स्ववचनविरोधस्यापि नावकाशः, उपहितस्यैव सर्वप्रत्ययवेद्यतायास्तत्र विवक्षितत्वादिति—वाच्यम्। एवं सति 'स यो ह वै तत्परमं ब्रह्म वेद' इत्यादिश्रुतिविरोधापत्तेः, त्वन्मतरीत्या परमत्वस्य शुद्धतामात्ररूपत्वात्, उपहितस्याप्यशुद्धकोटिप्रविष्टत्वेन निवर्तनीयान्तर्गतस्य निवर्तकज्ञानविषयत्वासंभवात्, 'आत्मा वा अरे' इत्यादावुपहितस्यैव विषयत्वे तज्ज्ञानस्य मोक्षहेतुत्वानुपपत्तेः, अन्यथा अहमज्ञ इत्यादिज्ञानस्यापि तथात्वापत्तेरिति चेत्।

न—उदाहृतश्रुतिषूपहितस्यैव विषयतया विवक्षितत्वात्। 'परमं ब्रह्म वेद' इत्यत्र विवक्षितं परमत्वं अखण्डाकारवृत्त्युपहितत्वम्। न च निवर्तनीयान्तर्गतस्य निवर्तकज्ञानविषयत्वासंभवः। अहंब्रह्मघटो विनाशीतिज्ञानेन निवर्तनीयस्यापि घटादेः विषयीकरणेन व्यभिचारात्। नाप्यहमज्ञ इति ज्ञानस्य निवर्तकत्वापत्तिः तस्याखण्डाकारवृत्त्युपहितविषयकत्वाभावात्।

---

**टि. विवक्षितं परमत्वमिति। मुण्डके** परापरभेदेन विद्याद्वयमुपन्यस्य 'अथ परा यया तदक्षरमधिगम्यते' इति परविद्यागम्यमक्षरमुक्तम्। विद्यायाः परत्वञ्च स्थिरमोक्षसाधनत्वरूपमिति ज्ञायते। 'स यो ह वै तत्परमं ब्रह्म वेद' इत्युपसंहारे वेद्यस्य ब्रह्मणः परमत्वं मोक्षसाधनीभूतपरविद्योपहितत्वमेव विवक्षितमिति स्वरसतः प्रतीयते इति वृत्त्युपहितविषयिण्येवोक्तश्रुतिरिति **श्रीहरिहरशास्त्रिणः।**

**व्यभिचारादिति।** निवर्तनीयस्य रजतस्य नेदंरजतमिति निवर्तकज्ञानविषयत्वदर्शनान्नायं नियमः, निवर्तनीयस्य निवर्तकज्ञानविशेष्यत्वाभावनियमोऽपि न, रजतस्य रजतं प्रतिपन्नोपाधिनिष्ठाभावप्रतियोगीति निवर्तकज्ञानविशेष्यत्वात्, इति **श्रीहरिहरशास्त्रिणः।**

अहंब्रह्मघटोविनाशीतिसमूहालम्बनस्वीकारे आत्मान्यविषयत्वानिरूपितात्मविषयताशालिज्ञानत्वेन निवर्तकत्वम्, तदस्वीकारे आत्मान्याविषयकात्मविषयकज्ञानत्वेन निवर्तकत्वम्, इति पक्षद्वयमवगन्तव्यम्।

एतेन—'यत्तु स्वोपहितान्याविषयकत्वे सति स्वोपहितविषयकत्वेन ज्ञानस्याज्ञाननिवर्तकत्वम्। स्वविशिष्टब्रह्मविषयकवृत्तेरपि स्वोपहितविषयकत्वात् सत्यन्तम्। स्वाविषयकत्वस्य सत्यन्तार्थत्वे उक्तविशिष्टविषयकवृत्तिवारणेऽपि वृत्त्युपहितांशे अज्ञानादिप्रकारकज्ञानस्य संग्रहापत्तेः। तुच्छाकारज्ञाने सत्यन्तसत्त्वाद्विशेष्यदलम्। न च सविषयकत्वमात्रेण तस्य वारणसंभवात् स्वोपहितत्वनिवेशे गौरवमिति वाच्यम्। स्वरूपसंबन्धेन विषयताविशिष्टत्वरूपसविषयत्वापेक्षया स्वोपहिताखण्डव्यक्त्या विषयतासंबन्धेन विशिष्टत्वस्यागुरुत्वात्। तुच्छाकारवृत्तेः सविषयत्वमते तेन तदवारणाच्च' इत्यनूद्य, 'तन्न—तुच्छविषयकविकल्पाख्यवृत्तेः धीत्वाभावादेवानिवर्तकत्वोपपत्तौ विशेष्यदलवैयर्थ्यात्। तुच्छाकारवृत्तेः सविषयत्वमते स्वोपहितान्याविषयकत्वरूपसत्यन्ताभावादेव वारणात् तदर्थं विशेष्यदलोपादानस्यायुक्तत्वात्'—इत्युक्तं परास्तम्।

तुच्छाकारवृत्तेः सविषयकत्वानङ्गीकर्तृमताभिप्रायेण विशेष्यदलनिवेशात्। न च सविषयकत्वापेक्षया गौरवम्। समाहितत्वात्।

ननु समानविषयकयोरेव ज्ञानाज्ञानयोर्निवर्त्यनिवर्तकभावः लोकसिद्धः। वृत्त्युपहितज्ञानस्य अज्ञानसमानविषयकत्वं न संभवति। अज्ञानं हि शुद्धविषयकं स्वोपहितविषयकं वा, न तु अन्तःकरणवृत्तिविशेषोपहितविषयकम्। **'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥'** इत्युक्तरीत्या

---

**टि. निवेशादिति**। विकल्पादिसाधारणवृत्तित्वस्य प्रवेशाभिप्रायेण विशेष्यदलोपादानं बोध्यम्।

'पञ्चवृत्तिर्मनोवद्व्यपदिश्यते' इतिसूत्रे भाष्यस्थप्रथमपक्षरीत्या विकल्पस्यापि मनोवृत्तिविशेषत्वरूपं धीत्वं संभवतीत्यभिप्रायकमिदमिति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः**।

अज्ञानस्य स्वकार्योपहितविषयकत्वासंभवात्। तज्ज्ञानस्य निवर्तकत्वे घटाद्यु-पहितज्ञानस्यापि निवर्तकत्वापत्तिः, वृत्तिघटादेरेकाज्ञानकार्यत्वाविशेषात् इति चेत्।

न—उक्तकारिकायां केवलपदस्य विवरणमते शुद्धपरतया वाचस्पतिमते वृत्त्यन्याज्ञानकार्यानुपहितपरतया चानुपपत्त्यभावात्। न च भिन्नविषयकत्वेनाज्ञाननिवर्तकत्वानुपपत्तिरिति वाच्यम्। वृत्त्यन्याज्ञानकार्यानुपहितविषयकत्वेन समानविषयकत्वसंभवात्। न ह्यज्ञानकार्यत्वाविशेषेऽपि घटादेः तदुपहितज्ञानस्य निवर्तकता। वस्तुस्वाभाव्यात्। अन्यथा आत्मधर्मत्वाविशेषेण ज्ञानस्यैव निवर्तकता न तु तदितरवृत्त्यादेरिति नियमोऽपि न सिद्ध्येत्।

ननु शुद्धस्य वृत्त्यविषयत्वे 'शुद्धं स्वप्रकाशम्' इति वाक्यजन्यबोधेऽपि शुद्धस्याभानात् शुद्धं स्वप्रकाशं न वेति संशयानिवृत्तिप्रसङ्ग इति चेत्।

न—शुद्धस्याविषयत्वपक्षे तादृशसंशयस्यैवासंभवात्, संभवेऽपि वा विशिष्टज्ञानादेव तन्निवृत्तिसंभवात्।

किञ्च, धर्मितावच्छेदकतासंबन्धेन तत्प्रकारकबुद्धिं प्रति विशेष्यतासंबन्धेन तद्व्यापकीभूताभावप्रतियोगित्वनिश्चयस्य प्रतिबन्धकत्वमनुभवसिद्धम्। वह्न्यभावव्यापकीभूताभावप्रतियोगी धूमः इतिनिश्चयस्योद्बुद्धसंस्कारस्य वा विशेष्यतासंबन्धेन धूमे सत्त्वे धूमवान् वह्न्यभाववानिति ज्ञानस्य धूमेऽनुत्पादात्। एवमस्वप्रकाशत्वव्यापकाभावप्रतियोगि अनुपहितत्वरूपं शुद्धत्वमिति निश्चये उद्बुद्धसंस्कारे वा सति तदवच्छिन्नविशेष्यकास्वप्रकाशत्वप्रकारकबुद्धिर्न जायते। एवञ्च 'शुद्धं स्वप्रकाशम्' इति वाक्यस्य लक्षणया शुद्धत्वमस्वप्रकाशत्वव्यापकीभूताभावप्रतियोगित्वरूपस्वप्रकाशत्वनिरूपितव्यतिरेकव्याप्ति-मत् इत्यर्थ इति तादृशवाक्यस्य शुद्धविशेष्यकास्वप्रकाशत्वप्रकारकसंशयानुत्पादप्रयोजकत्वरूपं शुद्धे स्वप्रकाशत्वसाधकत्वमुपपन्नमेव।

---

**टि. वृत्त्यन्याज्ञानकार्येति**। वृत्त्यन्यत्वे सति अज्ञानान्यत् यत् तदनुपहितविषयकत्वेन वृत्त्यन्यत् यत्कार्यं तदनुपहितविषयकत्वेन वा समानविषयकत्वं बोध्यम्, न तु वृत्त्यन्यत् यदज्ञानकार्यं तदनुपहितविषयकत्वेन, अज्ञाननिवेशवैयर्थ्यात्।

ननु उक्तबोधहेतुभूतशुद्धादिपदलक्षणाज्ञानस्य शुद्धस्य वृत्तिविषयत्वं विनाऽसंभवः। लक्षणायाः शक्यसंबन्धरूपत्वेन शक्यज्ञानाधीनज्ञानविषयत्वात्। न च शुद्धस्वप्रकाशादिपदानां शुद्धत्वस्वप्रकाशत्वाद्युपहित एव शक्तिः न शुद्धे इति न तज्ज्ञानापेक्षेति वाच्यम्। एवमपि उपहितत्वाभावरूपशुद्धत्वस्यापि उपाधित्वेन शुद्धत्वव्याघातः इत्याशङ्क्य तादृशोपहितत्वाभावस्य ब्रह्मस्वरूपतया समाधानस्य **अद्वैतसिद्धिद्वितीयपरिच्छेदे** प्रतिपादितत्वेन शुद्धत्वमस्वप्रकाशत्वव्यापकीभूताभावप्रतियोगीतिव्याप्तिज्ञाने शुद्धस्य अवश्यं ज्ञातव्यत्वादिति चेत्।

न—उपहितत्वाभावत्वविशिष्टस्योपाधित्वेऽपि तदभावत्वोपलक्षितस्यैव ब्रह्मरूपत्वाङ्गीकारेण शुद्धस्य ज्ञेयत्वानावश्यकत्वात्।

किञ्च, स्वीयधर्मितावच्छेदकतानिरूपिता या प्रतियोगितासंबन्धावच्छिन्नावच्छेदकता तदवच्छेदकतासंबन्धेन तद्वत्ताबुद्धौ धर्मितावच्छेदकतासंबन्धेन तद्व्यापकताज्ञानं प्रतिबन्धकम्। यथा वह्न्यभावविशिष्टे धूमवत्ताज्ञाने वह्निर्धूमव्यापक इति ज्ञानस्य वह्नित्वनिष्ठप्रत्यासत्त्या प्रतिबन्धकता। एवञ्च अशुद्धत्वमस्वप्रकाशत्वव्यापकमिति ज्ञानस्य उपहितत्वत्वनिष्ठप्रत्यासत्त्या उपहितत्वाभाववदस्वप्रकाशमितिज्ञानप्रतिबन्धकत्वात् उपहितत्वाभावरूपशुद्धत्वस्याज्ञानेऽपि क्षत्यभावात् उक्तवाक्यस्य उपहितत्वमस्वप्रकाशत्वव्यापकमित्यर्थकतया पूर्वोक्तसंशयानुत्पादप्रयोजकत्वमुपपन्नम्।

ननु—अस्वप्रकाशत्वस्य स्वप्रकाशत्वघटितत्वेन स्वप्रकाशत्वस्य ब्रह्मरूपत्वेन शुद्धस्य वृत्त्यविषयत्वे निरुक्तव्याप्तिज्ञानस्यैवासंभवः। उक्तञ्च **अद्वैतसिद्धिद्वितीयपरिच्छेदे स्वप्रकाशत्वलक्षणोपपत्तिप्रकरणे** 'अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वाभावानधिकरणत्वं स्वप्रकाशत्वम्, न च मोक्षेऽव्याप्तिः, अनधि-

---

**टि॰ अनावश्यकत्वादिति।** सिद्धिकाराणां द्वितीयपरिच्छेदे उपहितत्वाभावस्य ब्रह्मस्वरूपत्वकथनं प्रस्थानान्तरानुरोधि, न वाचस्पतिमतानुसारि, इति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः।**

करणत्वस्य स्वरूपतया तदाऽपि सत्त्वात् , न च स्वरूपत्वे लक्षणत्वानुपपत्तिः, त्वन्नये ब्रह्माभिन्नानन्दादौ गुणत्वव्यवहारवत् स्वरूपेऽप्यनधिकरणत्वे लक्षणत्वव्यवहारात्' इति । न च—स्वव्यवहारे स्वातिरिक्तसंवित्सापेक्षत्वमेव अस्वप्रकाशत्वम्, तदभावश्च स्वप्रकाशत्वम्, तथाचोक्तास्वप्रकाशत्वव्यापकताज्ञाने न ब्रह्मज्ञानापेक्षेति—वाच्यम् । एवमपि उपहितत्वस्यास्वप्रकाशत्वव्यापकताज्ञानार्थं शुद्धत्वस्वप्रकाशत्वयोः सहचारज्ञानस्यापेक्षितत्वात् । अन्यथा उपहितत्वाभाववद्वृत्ति अस्वप्रकाशत्वमिति व्यभिचारज्ञानानुच्छेदेनोक्तव्यापकत्वज्ञानासंभवात्, उक्तसहचारस्य शुद्धत्वघटितत्वेन तद्बुद्धेः शुद्धविषयकत्वात् । न च—शुद्धस्य वृत्त्यविषयत्वेन तद्घटितव्यभिचाराकारवृत्तिसामग्र्या अकल्पनादेव नोक्तव्यभिचाराकारवृत्तिसंभवः, यद्वा, उपहिते शुद्धत्वभ्रमकाले उपहितरूपाधिकरणमादाय सहचारभ्रमसंभवेनोक्तव्यापकताज्ञानं निराबाधमिति—वाच्यम् । तथा सति तादृशसामग्र्या अकल्पनादेव शुद्धास्वप्रकाशत्वयोः वैशिष्ट्यधीवारणे उक्तव्यापकताज्ञानस्योक्तधीप्रतिबन्धकस्य जनकंशुद्धंस्वप्रकाशमितिवाक्यमित्युक्तेर्वैयर्थ्यात् । उपहिते शुद्धत्वभ्रमाङ्गीकारे शुद्धत्वेनोपहितावगाहिनः शुद्धत्वावच्छिन्नविशेष्यकस्वप्रकाशत्वप्रकारकबोधस्योक्तवाक्यजन्यत्वेऽपि तादृशसंशयनिवृत्तिनिर्वाहे तादृशवाक्यस्य लक्षणामङ्गीकृत्य शुद्धं स्वप्रकाशं न वेति संशयानुत्पादप्रयोजकत्वाभिधानस्यानुचितत्वादितिचेत् ।

न—शुद्धं स्वप्रकाशमिति वाक्यं अशुद्धत्वमस्वप्रकाशत्वव्यापकमिति बोधजनकं इति वदतामयमभिप्रायः—शुद्धविशेष्यकास्वप्रकाशत्वज्ञानस्याप्रसिद्ध्या तादृशज्ञानसामग्र्या अकल्पनादेव नोत्पत्तिः, धर्मितावच्छेदकतासंबन्धेन घटत्वादौ प्रसिद्धस्यास्वप्रकाशत्वप्रकारकबोधस्य शुद्धत्वे उत्पत्तिप्रयोजकसामग्र्याः संभवेऽपि नोत्पत्तिसंभवः, उक्तप्रतिबन्धकसत्त्वात्—इति । शुद्धत्वेनोपहितविषयकभ्रमजनकदोषसत्त्वे तु तादृशवाक्यजन्येन शुद्धत्वेनोपहितावगाहिना शुद्धत्वावच्छिन्नविशेष्यकस्वप्रकाशत्वप्रकारकबोधेन तादृशसंशयनिवृत्तिरिष्टैव ।

नचैवमुक्तप्रतिबन्धकज्ञानेनोक्तसंशयवारणेऽपि स्वप्रकाशत्वं शुद्धवृत्ति

न वेति संशयानिवृत्तिप्रसङ्ग इति वाच्यम्। तादृशसामग्र्यकल्पनादेवोक्तसंशया संभवात्। पूर्वोक्तरीत्या सामग्रीकल्पनेऽपि मणिमन्त्रादिन्यायेनोक्तनिश्चयस्योक्तसंशयप्रतिबन्धकत्वस्वीकारेण निरुक्तसंशयनिवृत्तेः संभवात्। तस्माच्छुद्धस्य वृत्त्यविषयत्वात्तत्र व्यभिचारो दुर्वचः।

न च—सत्यत्ववादिमतरीत्या ब्रह्मणि व्यभिचारो दुर्वारः, परमतरीत्या व्यभिचारज्ञाने च परेषां परामर्शानुदयः इति वाच्यम्। उभयसाधारणस्य ब्रह्मावृत्तिवृत्तिविषयत्वस्य हेतोर्व्यभिचाराभावेन परामर्शसंभवात्।

किञ्च, विवरणानुयायिमते शुद्धस्य वृत्तिविषयत्वमस्त्येव 'केवलो निर्गुणः' इतिश्रुत्या ब्रह्मणि परमार्थतो धर्मनिषेधेऽपि व्यावहारिकधर्माविरोधात्। अन्यथा उपहिततादात्म्यस्य शुद्धे अवश्यं वाच्यत्वेनोक्तश्रुतिबाधापत्तेः ब्रह्मणः स्वप्रकाशत्वेऽपि कल्पिताज्ञाननाशार्थं वृत्तिव्याप्यत्वस्य युक्तत्वात्।

तदुक्तम्—फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्यत्वमिष्यते ॥ इति।

तथा च शुद्धे व्यभिचारवारणाय शब्दाजन्यत्वं वृत्तिविशेषणमावश्यकम्। 'तन्त्वौपनिषदम्' इति श्रुत्या ब्रह्मणः शब्दजन्यवृत्तिविषयत्वसिद्धावपि तदजन्यवृत्तिविषयत्वाभावान्न तत्र व्यभिचारः। तुच्छेऽपि न व्यभिचारः। 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति **पातञ्जलसूत्रेण** तस्य शब्दजन्यवृत्तिविषयत्वप्रतिपादनेऽपि शब्दाजन्यवृत्तिविषयत्वाभावात्।

ननु ब्रह्मणः सर्वज्ञत्वसत्यसंकल्पत्वादिगुणस्य श्रुत्येकसमधिगम्यतया तत्रोक्तहेतोः भागासिद्धिः। न च सर्वज्ञत्वादिकं ब्रह्मधर्मः तथा श्रुतिबोध्यत्वात् इत्यानुमानिकवृत्तिविषयत्वमस्त्येवेति न भागासिद्धिरिति वाच्यम्। तथा सति अनुभूतिः स्वप्रकाशा अनुभूतित्वात् जीवः परमात्मनो न भिद्यते चेतनत्वात्

---

टि· **शुद्धस्य वृत्त्यविषयत्वादिति**। शुद्धं न वृत्तिविषयः इतिवाक्यजन्यवृत्तिविषयत्वं शुद्धस्यावश्यकमिति **वनमालिमिश्रोक्तं** दूषणन्तु अतीव बल्बजम्, तद्वाक्ये उपहितत्वं वृत्तिविषयत्वव्यापकमिति बोधजनकत्वस्य मूलेनैवोक्तप्रायत्वादिति बोध्यम्।

इत्याद्यनुमानैर्ब्रह्मणो वेद्यत्वेन तत्र व्यभिचारः, तुच्छं वृत्तिविषयः व्यवह्रियमाणत्वात् तुच्छं न क्षणिकं अकारणत्वात् इत्याद्यनुमानैस्तुच्छस्य वेद्यत्वेन तत्रापि व्यभिचारश्च, इति चेत् ।

न—उपनिषदेकसमधिगम्यत्वबोधिकायाः 'तन्त्वौपनिषदम्' इतिश्रुतेर्विरोधेन ब्रह्मणः आनुमानिकवृत्तिविषयत्वाभावात्, आनुमानिकवृत्तेः सप्रकारतया निर्विकल्पकज्ञानविषये तस्मिन् तद्विषयत्वासंभवाच्च । एतेन शुद्धस्य घटः सन्निति प्रत्यक्षविषयतापि निरस्ता वेदितव्या ।

यद्वा सप्रकारकवृत्तिविषयत्वस्य दृश्यत्वरूपत्वेन ब्रह्मणि न व्यभिचारः ।

किञ्च, सत्तादात्म्यप्रकारकवृत्तिविषयत्वं हेतुः । ब्रह्मणि तुच्छे च सत्प्रतियोगिकत्वविशिष्टतादात्म्याभावान्न व्यभिचारः । न च सत्तादात्म्ये भागासिद्धिः । स्वरूपसंबन्धेन स्वस्य स्ववृत्तित्वात् ।

एतेन—सत्तादात्म्ये भागासिद्धिवारणाय सत्तादात्म्यतत्त्वान्यतरप्रकारकवृत्तिविषयत्वविवक्षणे अन्यतरवत्त्वस्यैव हेतुत्वसंभवेन शेषवैयर्थ्यम् । तावन्मात्रस्यापि हेतुत्वं न युक्तम्, भवदभिमततादात्म्यस्योभयवाद्यसिद्धत्वादिति—परास्तम् ।

भवन्मते तन्तुपटयोः कार्यकारणभावः अविनाभावसंबन्धश्च स्वीक्रियते । अविनाभावश्च कार्यकारणभावानुपपत्त्या नात्यन्तिकः अभेदः किन्तु भेदसमानाधिकरण एवेति न काप्यनुपपत्तिः । एवञ्च सत्तादात्म्यतत्त्वान्यतरप्रकारकवृत्तिविषयत्वतदन्यतरवत्त्वयोरन्यतरस्य वा हेतुत्वं संभवति, विरोधाभावात् ।

---

**टि· तद्विषयत्वासंभवाच्चेति** । अनुभूतिः स्वप्रकाशा इत्यनुमितिरपि अनुभूतित्वरूपपक्षतावच्छेदकसंबन्धोपहितस्वरूपमेव विषयीकरोति, न शुद्धम्, निर्धर्मके तत्र हेतुसाध्यसंबन्धाभावेनानुमानाप्रवृत्तेरिति भावः ।

**स्ववृत्तित्वादिति** । प्रमेयत्वं प्रमेयमिति प्रतीतिवत् सत्तादात्म्यं सदिति प्रतीतेः सत्त्वादिति भावः ।

**न काऽप्यनुपपत्तिरिति** । भवतां मते सद्रूपतन्तुतादात्म्यं पटेऽस्ति, एवं प्रपञ्चे

किञ्च, स्वसमानसत्ताकज्ञानविषयत्वं दृश्यत्वम्। ज्ञाने स्वसमानसत्ताकत्वनिवेशात् ब्रह्मतुच्छयोर्न व्यभिचारः। स्वसमानसत्ताकत्वञ्च स्वानाशकज्ञानानाश्यत्वम्। तेन सत्तात्रैविध्यसिद्धेः मिथ्यात्वसिद्ध्यनन्तरभावित्वेऽपि नान्योन्याश्रयः। ज्ञानपदोपादानाच्च घटादिज्ञानस्य कस्यचित् घटाद्यनाशकेन पटादिज्ञानेन नाश्यत्वेऽपि न घटादावसिद्धिः। इच्छाऽव्यवहितपूर्वोत्पन्नज्ञानमादायैव हेतूपपादनात्। यादृशविषयविशेषविषयकज्ञानसामान्यमिच्छापूर्वमनुत्पन्नं तादृशविषयश्चाप्रसिद्ध एव, सर्वस्यापि वस्तुनः इच्छाऽव्यवहितपूर्ववर्तिनः सर्वं प्रमेयमित्याकारकस्य कस्य चिद् ज्ञानस्य विषयत्वात्। न च ब्रह्मणि प्रतिवादिरीत्या ब्रह्मानाशकज्ञानानाश्यज्ञानविषयत्वसत्त्वात् संदिग्धव्यभिचार इति वाच्यम्। स्वनाशकज्ञाननाश्यत्वेनाद्वैतमतसिद्धं यत् तदन्यज्ञानविषयत्वस्य विवक्षितत्वात्। ब्रह्मज्ञानसामान्यस्य ब्रह्मज्ञाननाश्यत्वेनाद्वैतमतसिद्धतया ब्रह्मणि तदन्यज्ञानविषयत्वाभावात्।

इत्थञ्च स्वनिष्ठनाशकतासंबन्धावच्छिन्नप्रतियोगिताकाभाववद्ज्ञाननाश्यत्वप्रकारकाद्वैत्यभिमतज्ञानविषयत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्ज्ञानविषयत्वतादात्म्योभयसंबन्धेन किञ्चिद्विशिष्टत्वं दृश्यत्वमिति फलितम्। तेन नाननुगमः, न वा घटादिकं स्वपदेनोपादाय ब्रह्मणि व्यभिचारः, तादात्म्यनिवेशादिति।

---

सद्रूपब्रह्मोपादेयतायाः भवन्मतसिद्धत्वात् सद्रूपब्रह्मतादात्म्यं सिद्धमेव, सत्तादात्म्यस्य सिद्धान्ते आध्यासिकत्वेऽपि न तेन रूपेण हेतुता किन्तु सत्तादात्म्यत्वेन, तद्रूपविशिष्टश्चोभयवादिसिद्धमेवेति भावः। 'सत्तादात्म्यपदेन सत्ताजातेर्विवक्षणे' इत्यादिकं **न्यायभास्कर**ोक्तमनुक्तोपालम्भनं बोध्यम्।

**विरोधाभावादिति**। धूमवत्त्वघटितस्य धूमवत्त्वप्रकारकप्रमाविषयत्वादेरिव सत्तादात्म्यतत्त्वान्यतरवत्त्वप्रकारकवृत्तिविषयत्वस्य हेत्वन्तरत्वेन शेषवैयर्थ्यं नास्तीति भावः।

एतावता मूलग्रन्थोक्तान् वृत्तिव्याप्यत्वपरिष्कारानुपपाद्य विद्वत्संमतानन्यान् वृत्तिव्याप्यत्वपरिष्कारान् समर्थयितुमुपक्रमते—**किञ्चेत्यादिना**।

ननु इच्छाऽव्यवहितपूर्ववृत्तिब्रह्मज्ञानमादाय ब्रह्मणि व्यभिचारो दुर्वारः। न च—स्वनिष्ठनाशकतासंबन्धावच्छिन्नप्रतियोगिताकाभाववद्‌ज्ञाननाश्यस्वस्वोपादानान्यतरकत्वेनाद्वैतमतसिद्धं यत् तद्भिन्नज्ञानविषयत्वस्य विवक्षितत्वान्न ब्रह्मणि व्यभिचारः, इच्छाऽव्यवहितपूर्वोत्पन्नब्रह्मज्ञानस्य ब्रह्मज्ञाननाश्यत्वविरहेऽपि तन्नाश्योपादानकत्वेनाद्वैतिमतसिद्धतया तद्‌भिन्नत्वाभावादिति—वाच्यम्। वृत्तेः सूक्ष्मावस्था हि संस्कारः, सैव तदुपादानम्। तथा चेच्छाऽव्यवहितपूर्वोत्पन्नघटादिज्ञानसंस्कारस्य तदुपादानात्मकस्य घटादिस्मृत्या चरमस्मृत्या वा नाशात् घटादावसिद्धिः। घटादिज्ञानस्य घटाद्यनाशकघटादिस्मृतिनाश्योपादानकत्वेनाद्वैतमतसिद्धतया तद्भिन्नत्वाभावात्, ब्रह्मज्ञानेन प्रपञ्चस्य नाशो न जन्यते किन्तु प्रपञ्चात्यन्ताभाव एव ब्रह्मज्ञानप्रयुक्तः इतिमतसाधारण्यविरहश्च, इति चेत्।

न—ब्रह्मणि व्यभिचाराभावात्, स्वानाशकज्ञानान्तर्गतस्य चरमसाक्षात्कारस्योत्तरमिच्छाया अभावेन सर्वस्यापि चरमसाक्षात्कारनिवर्त्यत्वेन च तदनाश्यज्ञानाप्रसिद्धेः।

स्वानाशकज्ञानजन्यनाशप्रतियोगिस्वस्वोपादानान्यतरकत्वेनाद्वैतिमतसिद्धं यत् तदन्यज्ञानविषयत्वविवक्षणेऽपि नासिद्धिर्घटादौ। संस्कारस्य स्मृतिनाश्यत्वे मानाभावात्। स्मृतौ हि जातायां संस्कारदार्ढ्यस्यैव प्रामाणिकै-

---

टि. **तदनाश्यज्ञानाप्रसिद्धेरिति।** अत्र नाश्यत्वं नाशयोग्यत्वम्। इच्छाऽव्यवहितपूर्वोत्पन्नब्रह्मज्ञानमपि चरमसाक्षात्कारजन्यनाशयोग्यमेवेति निरुक्तनाश्यत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वं इच्छाऽव्यवहितपूर्ववर्तिब्रह्मज्ञाने नास्तीति भावः।

स्वनाशकवृत्तिविषयत्वमपि लघु हेतुः संभवति। स्वनाशकत्वञ्च स्वनाशकत्वयोग्यत्वम्, तच्च 'अहं ब्रह्म आत्मभिन्नं विनाशि' इत्याकारकवृत्तेरस्तीति तद्विषयत्वस्य घटादौ दृश्ये सत्त्वमव्याहतम्, शुद्धस्यालीकस्य च नाशाभावेन स्वपदेनोपादानासंभवान्न तयोर्व्यभिचारः। इदञ्च ब्रह्मातिरिक्तविषयकस्य समूहालम्बनब्रह्मज्ञानस्य प्रपञ्चबाधकत्वपक्षाभिप्रायेण, इति श्रीपरीक्षिन्महाराजाः।

रङ्गीकारात् । संस्कारस्य स्मृतिनाश्यत्वेऽपि तस्योपादानत्वं न संभवति । पूर्वोत्तरावस्थयोः उपादानसंस्कारस्मृतिजनकसंस्कारयोर्भेदात् ।

ब्रह्मज्ञानेन प्रपञ्चनाशो जन्यते इतिमताभिप्रायेणोक्तहेतुरुपन्यस्तः । नाशानङ्गीकारे तु वृत्त्यवच्छिन्नचिद्विषयत्वं शुद्धचिदवृत्ति वृत्तिविषयत्वं वा हेतुः ।

यद्वा स्वनिष्ठबाधकतासंबन्धावच्छिन्नप्रतियोगिताकाभाववद्ज्ञानबाध्यत्वप्रकारकाद्वैतिसंबन्धिज्ञानविषयत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्ज्ञानविषयत्वतादात्म्योभयसंबन्धेन किञ्चिद्विशिष्टत्वमेव दृश्यत्वम् । तादृशज्ञानबाध्यत्वञ्च तत्प्रयुक्तस्वस्वोपादानान्यतरत्वावच्छिन्नाभावकत्वम् । तथा च घटादिज्ञानोपादानत्वावच्छिन्नाभावस्य ब्रह्मज्ञानमात्रप्रयुक्तत्वात् तस्य घटाद्यबाधकत्वविरहेण स्वाबाधकं शुक्त्यादिज्ञानमेव, तद्बाध्यत्वप्रकारकाद्वैत्यभिमतज्ञानविषयभिन्नञ्च घटादिज्ञानमिति न दोषः ।

ननु अद्वैतिनः सर्वंज्ञानंशुक्तिज्ञानबाध्यमितिभ्रमसंभवेन तदीयविषयतायाः सकलज्ञानसाधारण्यात् तादृशज्ञानविषयत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्ज्ञानाप्रसिद्ध्या स्वपदेन घटादेरुपादानासंभवादसिद्धिः । अद्वैतिसंबन्धिप्रमाविषयत्वनिवेशे च सदिग्धासिद्धिः, अद्वैतिनः तादृशबाध्यत्वप्रकारकज्ञाने प्रमात्वस्योभयवाद्यसिद्धत्वात् । अथ यादृशाद्वैतिव्यक्तेरेतादृशभ्रमो न प्रसिद्ध्यति तादृशाद्वैतिव्यक्तेरेव तद्व्यक्तित्वेन निवेशान्न दोषः । न च—तादृशाद्वैतिव्यक्तेरप्रसिद्धिरेव, सर्वेषामेव चेतनानामयोग्यताज्ञानविरहदशायां सर्वंज्ञानंशुक्तिज्ञानबाध्यमिति वाक्यात् बोधस्य दुरपह्नवत्वात् । अयोग्यताज्ञानजन्यसंस्कारस्य प्रतिबन्धकत्वेऽपि यद्रूपावच्छिन्नधर्मिकमयोग्यताज्ञानमुद्बुद्धसंस्कारो वा तदन्यरूपावच्छिन्नधर्मिकबोधस्य शब्दात् दुरपह्नवत्वादिति—वाच्यम् । यादृशकालावच्छेदेन यद्व्यक्तेरेतादृशभ्रमो नास्ति तादृशकालावच्छिन्नतत्पुरुषीयबाध्यत्वप्रकारकज्ञाननिवेशेनादोषादिति चेत् । मैवम्, परार्थानुमाने तदादिशब्देन निर्देशस्यासांप्रदायिकत्वात्, स्वनिष्ठबाध्यत्वप्रकार-

काद्वैतिसंबन्धिज्ञानविषयत्वतादात्म्योभयसंबन्धेन किञ्चिद्विशिष्टत्वस्यैव हेतुत्वसंभवेनेतरांशस्य वैयर्थ्याच्च इति चेत्।

न—स्वनिष्ठबाधकतासंबन्धावच्छिन्नप्रतियोगिताकाभाववद्ज्ञानबाध्यत्वप्रकारकत्वेन प्रमात्वेन चाद्वैतिसिद्धं यत् ज्ञानं तद्विषयत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्ज्ञानविषयत्वतादात्म्योभयसंबन्धेन किञ्चिद्विशिष्टत्वस्यादुष्टत्वात्। न हि सर्वं ज्ञानं शुक्तिज्ञानबाध्यमिति ज्ञानं प्रमात्वेनाद्वैतिसिद्धम्। नापि परार्थानुमाने तदादिशब्देन निर्देशोऽसांप्रदायिकः, एतद्रूपवानेतद्रसात् इत्यादेर्न्यायप्रयोगस्य संप्रदायसिद्धत्वात्। श्रीब्रह्मानन्दसरस्वतीनामसांप्रदायिकत्वोक्तिस्तु प्रौढिवादः। नापि बाध्यत्वप्रकारकाद्वैतिसंबन्धिज्ञानविषयत्वमादाय व्याप्यत्वासिद्धिः। तत्र बाध्यत्वस्य मिथ्यात्वरूपत्वादन्योन्याश्रयः। मिथ्यात्वप्रकारकज्ञानसिद्धौ बाध्यत्वरूपमिथ्यात्वसिद्धिः तत्सिद्धौ च तादृशज्ञानसिद्धिरिति।

किञ्च स्वानतिरिक्तविषयकज्ञानाबाध्यवृत्तिविषयत्वं दृश्यत्वम्। स्वपदं

---

**टि. प्रौढिवाद इति**। तथा च तद्व्यक्तित्वेनाद्वैतिव्यक्तिविशेषघटितपरिष्कारोऽपि निर्दुष्ट इति भावः।

**अन्योन्याश्रय इति**। प्राचीनमतेऽपि लघुधर्मे व्याप्यतावच्छेदकत्वसंभव एव तद्घटितगुरौ न व्याप्यतावच्छेदकत्वम्। प्रकृते च निरुक्तलघुधर्मस्यान्योन्याश्रयेण व्याप्यतावच्छेदकत्वासंभवेन तद्घटितस्य व्याप्यतावच्छेदकत्वमनपवादमिति न व्याप्यत्वासिद्धिरिति भावः।

एवं येन संबन्धेन यत्र यत्संबध्यते तत्र तत्संबन्धावच्छिन्नतदभावमङ्गीकुर्वतां स्वपदेन घटादेरुपादानेऽपि बाधकतासंबन्धेन घटाभाववद् ज्ञानं ब्रह्मज्ञानमपीति तदबाध्यज्ञानाप्रसिद्धिः, समानाधिकरणप्रतीतिस्थले भेदाभेदोभयाङ्गीकारेण ब्रह्मज्ञानबाध्येऽपि तद्भेदोपपादने च ब्रह्मणि व्यभिचारो दुर्वारः, भेदासहिष्णुतादात्म्यस्य भवद्भिरनङ्गीकारेण हेत्वप्रसिद्धिश्च, इति न्यायभास्करोक्तदूषणस्य लोकसिद्धविशेषणतासंबन्धेनाभाववत्त्वनिवेशेन अनौपाधिकभेदस्य अभेदासमानाधिकरणभेदस्य वा निवेशेन स्वस्मिन्नपि भिन्नरूपाभ्यां तादात्म्यसंभवेन च परिहारः द्वितीयमिथ्यात्वविचारदर्शितदिशा सुगम इति नात्र पृथगुक्त इति बोध्यम्।

**स्वानतिरिक्तविषयकेति**। स्वातिरिक्ताविषयकेत्यर्थः।

यस्मिन् दृश्यत्वमुपपादनीयं तत्परम् । ब्रह्मविषयकवृत्तेः ब्रह्मानतिरिक्तविषयकज्ञानबाध्यत्वान्न व्यभिचारः ।

यद्वा सत्यादिपदतात्पर्यविषयाविषयकवृत्तिविषयत्वं दृश्यत्वम् । अतो न कोऽपि दोषः ।

ननु भवन्मते घटादिविषयकज्ञानसामान्यस्य तदवच्छिन्नचैतन्यविषयकत्वेन घटादेः स्वपदेनोपादाने तदनतिरिक्तविषयकज्ञानाप्रसिद्ध्या हेत्वप्रसिद्धिः। न च स्वभिन्नं यत् चिद्भिन्नं तदविषयकत्वमेव स्वानतिरिक्तविषयकत्वं अतो नासिद्धिरिति वाच्यम् । एवमपि घटादिज्ञानस्य घटत्वादिविषयकत्वेन शुक्तिरूप्यादिज्ञानस्य शुक्त्यादिविषयकत्वेन चासिद्धिः, दृष्टान्ते साधनवैकल्यञ्च दुर्वारम् , दृष्टान्तपक्षसाधारणानुगतस्वत्वाभावेन हेतोरुभयसाधारण्यानुपपत्तिश्च इति चेत् ।

न—स्वानतिरिक्तविषयकपदेन स्वस्ववृत्तिधर्मस्वाधिष्ठानतावच्छेदकान्यतमभिन्नं यत् चिद्भिन्नं तदविषयकत्वस्य विवक्षितत्वेन दोषाभावात् । घटत्वादेः स्ववृत्तित्वात् शुक्त्यादेः स्वाधिष्ठानतावच्छेदकत्वाच्च । न चाननुगमः । प्राचीनमते स्वत्वस्यानुगतत्वात् । नवीनमते स्वबाधकज्ञानविषयत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वविषयत्वोभयसंबन्धेन वृत्तिविशिष्टत्वं दृश्यत्वमित्यनुगमसंभवाच्च ।

न च अहंब्रह्मघटोविनाशीति समूहालम्बनस्य बाधकतापक्षे स्वपदेन घटादिगोचरवृत्तेरुपादाने तद्बाधकोक्तसमूहालम्बनविषयत्वस्य घटादौ सत्त्वेनासिद्धिरिति वाच्यम् । स्वबाधकतावच्छेदकविषयत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदनिवेशेनोक्तासिद्धेरभावात् , घटादिविषयकसमूहा-

---

**टि. दोषाभावादिति** । वस्तुतस्तु स्वानतिरिक्तेत्यस्य स्वभेदाभाववानर्थः । भेदश्च नञुल्लेख्यः । तथा च घटत्वे घटस्य शुक्तौ रजतस्य च तादृशभेदाभावेन तयोरपि स्वानतिरिक्तत्वात् तद्विषयकज्ञानाबाध्यवृत्तिविषयत्वस्य नासिद्धिः न वा दृष्टान्ते साधनवैकल्यम् । तादात्म्येन स्वसंबन्धिविषयकत्वं वा स्वानतिरिक्तविषयकत्वं बोध्यम् ।

लम्बनस्य बाधकत्वेऽपि घटादिविषयताया बाधकतानवच्छेदकत्वात्। न च–प्रपञ्चाधिकरणकालपूर्वत्वाभावरूपे भवदभिमतबाधकत्वे ब्रह्मविषयताया अवच्छेदकत्वं न घटविषयताया इति वक्तुमशक्यम्, शुक्तौ रजतं नेति ज्ञाननिष्ठबाधकतावच्छेदककोटौ शुक्तिरूप्यविषयताया अपि प्रविष्टत्वेन दृष्टान्ते साधनवैकल्यञ्चेति वाच्यम्। ह्रदे वह्निमत्ताबुद्धिं प्रति वह्न्यभाववद्ध्रदविषयताया एव प्रतिबन्धकतावच्छेदकत्वं न तु समूहालम्बनीयघटादिविषयताया इत्यत्रेव प्रकृतेऽपि निरुक्तबाधकतावच्छेदकत्वं ब्रह्मविषयताया एव न समूहालम्बनीयघटविषयताया इत्यत्र व्यवहारस्यैव प्रमाणत्वात्। यदि च तत्र व्यवहारे प्रतिबन्धकतानतिरिक्तवृत्तित्वमेव तन्त्रमित्युच्यते तदा प्रकृतेऽपि निरुक्तबाधकतानतिरिक्तवृत्तित्वस्य ब्रह्मविषयतायां सत्त्वात् घटविषयतायाञ्चासत्त्वात् न कोऽपि दोषः। अत एव बाधकतावच्छेदकत्वं बाधकतानतिरिक्तवृत्तित्वमेव विवक्षितं बोध्यम्।

यद्वेत्यादिकमपि युक्तमेव। न च सत्यपदतात्पर्यविषयताया ब्रह्मणि सत्त्वेन तदविषयकवृत्तिविषयत्वस्य सिद्धान्ते घटादावसिद्धिरिति वाच्यम्। घटादिज्ञाने घटाद्यवच्छिन्नचैतन्यस्य भानेऽपि शुद्धस्याभानात्। शुद्धस्यैव सत्यपदतात्पर्यविषयत्वात्। न च ब्रह्मव्यतिरिक्तमिथ्यात्वनिश्चयं विना शुद्धे सत्यपदतात्पर्यस्य निश्चेतुमशक्यत्वेनान्योन्याश्रय इति वाच्यम्। तात्पर्यग्राहकलिङ्गादिभिरेव सत्यपदतात्पर्यस्यावधृतत्वेन मिथ्यात्वनिश्चयस्यानपेक्षणेनान्योन्याश्रयविरहात्। श्रुतिसिद्धमिथ्यात्वोपपत्तिरूपतया मिथ्यात्वानुमानप्रवृत्तेः।

---

**टि.** वृत्तिनिरूपितनिरवच्छिन्नविषयत्वरूपं वृत्तिव्याप्यत्वमपि साधु।

न च शुद्धे ब्रह्मणि व्यभिचारः। शुद्धे वृत्तिविषयतायाः वृत्त्युपहितावच्छिन्नवृत्तिकत्वेन निरवच्छिन्नविषयत्वाभावात्। न चैवं वियदादिनिष्ठविषयताया अपि वियत्त्वाद्यवच्छिन्नत्वेन स्वरूपासिद्धिरिति वाच्यम्। सप्तमीनिर्देश्यं यद्विलक्षणं दैशिकावच्छेदकत्वं तदनिरूपकत्वरूपनिरवच्छिन्नत्वस्य वियदादिनिष्ठायां विषयतायामप्रत्यूहत्वात्।

न च वियदादाविव ब्रह्मण्यपि वृत्तिविषयता अनवच्छिन्नेति वाच्यम्। 'यत्तदद्रेश्यम्' इति श्रुतिस्वारस्यात् ब्रह्मनिष्ठविषयताया अव्याप्यवृत्तित्वस्योपगन्तव्यत्वात्। न च

ततश्च वृत्तिव्याप्यत्वरूपं दृश्यत्वं निरपवादम् ॥

यत्तु—यदपि फलव्याप्यत्वं दृश्यत्वम्। फलञ्च स्वावच्छिन्नवृत्तिप्रतिबिम्बिता वृत्त्युपरक्तस्वप्रतिबिम्बिता वा चित्। तद्व्याप्यत्वं—तत्तादात्म्यम्। शरीरव्यापकस्यान्तःकरणस्य नेत्रादिद्वारा बहिर्निर्गत्य घटादिविषयदेशं गतस्य

---

विषयतासामान्यवाचिनः कर्मप्रत्ययस्यानवच्छिन्नविषयतापरत्वेऽपि श्रुतेर्यथाश्रुतार्थपरत्वरूपं स्वारस्यं न निर्वहतीति वाच्यम्। प्रथमश्रुतदृशिधातोः साकल्यविषयकदृष्टिरूपगुरुधर्मावच्छिन्ने लक्षणां पराभिमतामुपेक्ष्य जघन्यस्य प्रत्ययस्यैव विलक्षणावच्छेदकत्वानिरूपकविषयतात्वरूपलघुधर्मावच्छिन्ने लक्षणाया एवाभ्युपगन्तुं युक्तत्वात्।

न च घटाद्यवच्छिन्नचैतन्यनिष्ठविषयतायाः घटाद्यवच्छेदेन प्रसृतान्तःकरणवृत्तिनिरूपिताया घटाद्यवच्छिन्नत्वेन निरवच्छिन्नवृत्तिविषयत्वाभावेन भागासिद्धिरिति वाच्यम्। 'यत्तदद्रेश्यम्' इतिश्रुतिस्वारस्येन शुद्धब्रह्मनिष्ठविषयतायाः अवच्छिन्नवृत्तिकत्वरूपाव्याप्यवृत्तित्वोपगमेऽपि घटावच्छिन्नचैतन्यस्य दृश्यस्य विषयतायाः तादृशाव्याप्यवृत्तित्वे मानाभावेन घटावच्छिन्नचैतन्ये भागासिद्धेरभावात्।

न च दृश्यत्वस्यापि मिथ्यात्वेनावच्छेदकभेदं विनैव तदभावोपपत्त्या ब्रह्मणि विषयताया निरवच्छिन्नत्वेऽपि 'यत्तदद्रेश्यम्' इति श्रुत्युपपत्तेः तत्र कर्मप्रत्ययस्य लक्षणाकल्पनमयुक्तमिति वाच्यम्। घटवति भूतले अघटं भूतलमिति प्रयोगाभावेन लोकसिद्धविशेषणतासंबन्धेनाभावबोधकतायाः नञ्पदे व्युत्पन्नत्वात् निरुक्तलक्षणां विना 'अद्रेश्यम्' इतिश्रुतिस्वारस्यासंभवात्।

न च शुद्धे वृत्तिविषयता वृत्त्युपहितावच्छेदेन घटावच्छेदेन शरीराद्यवच्छेदेन वा जायते इत्यत्र विनिगमनाविरहात् अनन्तावच्छेदकताव्यक्तीनां कल्पनेन अवच्छेदकतासंबन्धेन ब्रह्मनिष्ठविषयतां प्रति तादात्म्यसंबन्धेन बहूनां हेतुताकल्पनेन घटादाविव ब्रह्मण्यपि निरवच्छिन्नविषयताया उत्पत्तिवारणाय कस्यचित् प्रतिबन्धकताकल्पनेन च महागौरवमिति वाच्यम्। वृत्त्युपहितस्य शुद्धब्रह्मवृत्तिविषयतावच्छेदकत्वकल्पने नियतत्वस्यैव विनिगमकत्वेनानन्तावच्छेदकताकल्पनादिगौरवस्याभावात्। ब्रह्मणि निरवच्छिन्नविषयतावारणाय प्रतिबन्धकताकल्पनस्य प्रामाणिकत्वेनादोषत्वात्। श्रुतिप्रामाण्येन ब्रह्मणि निरवच्छिन्नविषयताया उत्पादकसामग्र्यभावेन तदुत्पत्त्यापत्तेरेवासंभवेन प्रतिबन्धकताकल्पनस्यानावश्यकत्वाच्च। सत्यत्ववादिरीत्या ब्रह्मणि व्यभिचारश्च तन्मतसिद्धब्रह्मणः पक्षकोटिनिविष्टत्वेन पक्षीयव्यभिचार इति न दोषः इति।

एतत्सर्वं मनसि निधायाह—**वृत्तिव्याप्यत्वरूपं दृश्यत्वं निरपवादमिति।**

तत्तदाकाराया वृत्तेरतिस्वच्छत्वेन प्रतिबिम्बोत्पत्तियोग्यत्वात् , घटादेरस्वच्छत्वेऽपि स्वच्छवृत्तिसंबन्धेन प्रतिबिम्बोत्पत्तियोग्यत्वम्। स्वतः प्रतिबिम्बोत्पत्त्ययोग्याया अपि भित्तेः जलादिसंबन्धेन तद्योग्यत्वदर्शनात् द्वितीयकल्पोऽप्युपपन्नः। इत्यनूद्य, तन्न, नित्यातीन्द्रिये गुरुत्वादौ भागासिद्धेः। परोक्षवृत्तौ प्रतिबिम्बसंभवेऽपि तादृशवृत्तेः विषयदेशप्राप्त्यभावेन स्वावच्छिन्नवृत्तिप्रतिबिम्बितचित्तादात्म्याभावात् इति दूषणमुक्तम्।

तत् सिद्धान्तिनिग्रहाप्रयोजकम्। 'फलव्याप्यत्वव्यतिरिक्तस्य सर्वस्यापि पक्षस्य क्षोदक्षमत्वात्' इति मूलेनैव तत्पक्षस्य दूषितत्वात्। फलव्याप्यत्वस्य हेतुत्वाभावकथनं फलपदस्य भग्नावरणकचित्परत्वाभिप्रायेण न तु वृत्तिप्रतिबिम्बितचित्परत्वाभिप्रायेणेति यद्युच्यते तदाऽपि न दोषः कश्चित्। ईश्वरीयमायापरिणामरूपायां विद्यमानसर्वविषयिकायां वृत्तौ प्रतिबिम्बितस्य चैतन्यस्य तादात्म्यरूपविषयताया गुरुत्वशुक्तिरूप्यसुखदुःखादिसाधारणत्वात्। उक्तञ्च **विवरणे** 'ईश्वरस्य सर्वकर्तृत्वादेव विद्यमानसर्वविषयज्ञता' इति। उक्तञ्च **तत्त्वदीपने** 'ईश्वरोपाधिः सत्वप्रधानमाया विद्यमानसर्वविषयाकारेण परिणमते। तस्मिंश्च परिणामे प्रतिबिम्बितं चैतन्यं सर्वं पश्यत्याध्यासिकसंबन्धात्' इति। एवञ्च नासिद्धिः।

ननु फलशब्दस्य प्रमाफलार्थकत्वे ईश्वरीयमायावृत्तेः प्रमात्वाभावादसिद्धिः, येन पुरुषेण यदज्ञातं तद्विषयकवृत्तेः प्रमात्वात्, ईश्वरेणाज्ञातस्य कस्याप्यभावात्। न च—फलपदार्थकोटौ प्रमात्वस्य निवेशे प्रयोजनाभावः, निवेशेऽपि स्मृत्यादिसाधारणस्याबाधितविषयकत्वरूपस्य तस्य संभवान्नासिद्धिरिति—वाच्यम्। द्वैतवादिमते स्वाकारवृत्तिप्रतिबिम्बितचितोऽनङ्गीकारेण संदिग्धासिद्धिः चित्तादात्म्यमात्रस्य हेतुत्वसंभवेनान्यवैयर्थ्येन व्याप्यत्वासिद्धिश्च इति चेत्।

न— स्वाकारवृत्तिप्रतिबिम्बितत्वेनाद्वैत्यभिमतचित्तादात्म्यस्य हेतुत्वस्वीकारात्, व्यर्थविशेषणस्थले दीधितिकारादिभिः सद्धेतुत्वस्वीकारात्,

स्वाश्रयचित्तादात्म्यसंबन्धेन वृत्तिप्रतिबिम्बस्यैव हेतुत्वेन विवक्षिततया व्याप्यत्वासिद्धेरनवकाशाच्च।

नन्वेवमपि नीरूपस्य निरवयवस्य चैतन्यस्य नीरूपायामन्तःकरणवृत्तौ प्रतिबिम्बासंभवादसिद्धिः। अन्यथा गगने कालस्यापि प्रतिबिम्बापत्तिः। न च नीरूपस्य रूपस्य सङ्ख्यापरिमाणादेः शब्दस्य च प्रतिबिम्बदर्शनेन सावयवस्य सरूपस्यैव प्रतिबिम्ब इति न नियम इति वाच्यम्। नीरूपस्य रूपादेः प्रतिबिम्बसंभवेऽपि नीरूपस्य द्रव्यस्य प्रतिबिम्बासंभवात्। न च नीरूपस्य गगनस्य साभ्रनक्षत्रस्य जले प्रतिबिम्बदर्शनेन व्यभिचार इति वाच्यम्। एवमपि नीरूपोपाधौ प्रतिबिम्बो न संभवति, अन्यथा गगने कालप्रतिबिम्बापत्तेः, इति चेत्।

न—अन्तःकरणस्य तैजसत्वेन तद्वृत्तौ नीरूपत्वाभावेन प्रतिबिम्बसंभवात्। वस्तुतस्तु 'रूपं रूपं प्रतिरूपो बभूव' 'मायाऽभासेन जीवेशौ करोति' इत्यादिश्रुत्या 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इत्यादिस्मृत्या 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति प्रवेशश्रुत्यर्थापत्त्या 'आभास एव च' 'अत एव चोपमा सूर्यकादिवत्' इत्यादिब्रह्मसूत्रैश्च अन्तःकरणे चित्प्रतिबिम्बस्य सिद्धत्वात् तत्रैव व्यभिचारेण रूपवत एव प्रतिबिम्ब इत्यादिनियमो न सिद्ध्यतीति बोध्यम्। स्पष्टञ्चैतदद्वैतसिद्धौ।

वृत्तिव्याप्यत्वफलव्याप्यत्वान्यतरवत्त्वरूपं दृश्यत्वमपि हेतुः। अन्यतरत्वस्यान्यान्यत्वरूपत्वे स्वघटकवृत्तिव्याप्यत्वान्यभागवैयर्थ्यम्। अतः तदुभयमुख्यविशेष्यकं यत् ज्ञानं तन्मुख्यविशेष्यत्वमन्यतरत्वम्। तद्व्यक्तित्वेन ज्ञानस्य निवेशः। तेन न वृत्तिव्याप्यत्वातिरिक्तवैयर्थ्यम्।

न च वृत्तिव्याप्यत्वस्य पूर्वोक्तरीत्या ब्रह्मणि व्यभिचरितत्वेनोक्तान्यतरवत्त्वस्यापि तत्र व्यभिचारः न्यायप्रयोगे तदादिशब्दप्रयोगस्यासांप्रदायिकत्वञ्च इति वाच्यम्। ब्रह्मव्यावृत्तस्य वृत्तिव्याप्यत्वस्योक्तत्वेन निरुक्तान्यतरवत्त्वस्य तत्र

---

टि· उद्भूतरूपवत्येव प्रतिबिम्बः इत्यादिपरिष्कृतनियमभङ्गापत्तिरपि नास्तीत्याह—वस्तुतस्त्विति।

व्यभिचारविरहात्, एतद्रूपवानेतद्रसात् अयमात्मा ज्ञानात् इत्यादौ तदादिशब्देन न्यायप्रयोगदर्शनाच्च ।

यद्वा, कदाचित् कथञ्चित् चिद्विषयत्वं किञ्चित्कालावच्छिन्नमावृतानावृतसाधारणं चित्तादात्म्यरूपं दृश्यत्वम् । अत्र चित्तादात्म्यमेव हेतुः । दैशिकसंबन्धेन हेतुमत्ताऽभावावच्छिन्नान्तम् । कालिकसंबन्धेन हेतुत्वे चाविद्यादिष्वनादिपदार्थेषु भागासिद्धेः ।

यत्तु---यद्वेत्यादिकमपि न युक्तम्, चित्तादात्म्यस्य ब्रह्मणि सत्त्वेन व्यभिचारात् । चित्प्रतियोगिकत्वविशिष्टतादात्म्यानुयोगित्वस्य हेतुत्वेऽपि तादृशस्य प्रातिभासिकस्य ब्रह्मण्यपि संभवेन व्यभिचारात् । प्रातिभासिकान्यस्य चित्तादात्म्यस्य हेतुत्वे दृष्टान्ते साधनवैकल्यात् । हेतोरुभयवाद्यसिद्धत्वेन संदिग्धासिद्धेश्च । न च चिदवृत्तित्वविशिष्टतादात्म्यत्वेन हेतुत्वाङ्गीकारात् न कोऽपि दोष इति वाच्यम् । तादृशतादात्म्यस्यापि ब्रह्मणि भ्रमसंभवेन तादृशप्रातिभासिकोत्पत्त्या व्यभिचारस्य दुर्वारत्वात्, भवदभिमततादात्म्यस्योभयवाद्यसिद्धत्वेन संदिग्धासिद्धेश्चेति ।

तन्न । अनुयोग्यन्यूनसत्ताकस्य चित्तादात्म्यस्य हेतुतया ब्रह्मनिष्ठस्य तादात्म्यस्य ब्रह्मन्यूनसत्ताकत्वेन व्यभिचाराभावात् । नापि दृष्टान्ते साधनवैकल्यम्, शुक्तिरूप्यगतचित्तादात्म्यस्य रूप्यन्यूनसत्ताकत्वाभावात् । नापि संदिग्धासिद्धिः, भवताऽपि तन्तुपटयोरिव ब्रह्मजगतोरविनाभावसंबन्धस्वीकारात्, तस्य च भेदाभेदघटितत्वात्, अन्यथा कार्यकारणभावभङ्गापत्तेरिति ।

यद्वा, स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिरूपं दृश्यत्वमपि हेतुः । अत्र संवित्पदेन विषयाभिव्यक्तं वृत्त्यभिव्यक्तं शुद्धं वा चैतन्यमात्रमभिप्रेतम् ।

---

टि. अत्र शुद्धचिति प्रातिभासिकं चिदवृत्तित्वविशिष्टं तादात्म्यं नोत्पत्तुमर्हति प्रातिभासिकोपादानाज्ञानस्यावच्छिन्नचिदाश्रितत्वेन शुद्धचित्यभावेन तन्निष्ठाज्ञानपरिणामत्वस्य निरुक्ततादात्म्येऽसंभवादिति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः** । स्वसमानसत्ताकचित्तादात्म्यवत्त्वं हेतुः । स्वसमानसत्ताकत्वञ्च स्वानाशकज्ञानानाश्यत्वं स्वाबाधकाबाध्यत्वं वा । तेन सत्तात्रैविध्यस्य मिथ्यात्वसिद्ध्यनन्तरभावित्वेऽपि न क्षतिः इत्यपि बोध्यम् ।

अभिव्यक्तशब्देनावरणभङ्गविशिष्टं बोध्यते। व्यवहारशब्देन च स्फुरणशब्द-प्रयोगेच्छाप्रवृत्त्यादयो बोध्यन्ते। तथा च स्वभिन्नचित्प्रयोज्यस्वविषयक-स्फुरणादिसाधारणव्यवहारसामान्यकं यत् तत्त्वमित्यर्थः। घटोऽपरोक्षः इत्याकारके घटविशेष्यकापरोक्षत्वव्यवहारे अनावृतचितः तादात्म्येन हेतुत्वात् घटादाव-परोक्षत्वस्यानावृतचित्तादात्म्यरूपत्वात् व्यवहारे व्यवहर्तव्यस्य प्रयोजकतायाः सर्वसिद्धत्वात् नित्यातीन्द्रिये अस्तित्वव्यवहारस्यासत्त्वापादकाज्ञानशून्यचित्प्रयो-ज्यत्वादुक्तचित एवास्तित्वरूपत्वात् सुखादौ साक्षिभास्ये प्रत्यक्षत्वव्यवहारस्य च साक्षिचित्सापेक्षत्वात् ऐन्द्रियिकातीन्द्रियसाक्षिभास्येषु हेतुसत्त्वमुपपन्नम्।

न च—ब्रह्मविषयकेच्छारूपव्यवहारे ब्रह्मज्ञानप्रतिबिम्बितचैतन्यब्रह्मवि-षयकासत्त्वापादकाज्ञानाभावविशिष्टचैतन्यान्यतरात्मकब्रह्मान्यविशिष्टचैतन्यरूप-संविदपेक्षणेन ब्रह्मणि व्यभिचारः, एवं ब्रह्मविषयकशाब्दबोधस्य ब्रह्मातिरिक्त-पदज्ञानादिरूपसंवित्सापेक्षत्वेन तत्रैव व्यभिचारः—इति वाच्यम्। ब्रह्मेच्छेत्यत्र शुद्धब्रह्मोपादाने तस्य स्वप्रकाशत्वेन तदिच्छायां स्वातिरिक्तवृत्तिप्रतिबिम्बित-चैतन्यानपेक्षणात्। उपहितोपादाने तत्र तदपेक्षणेऽपि तस्य मिथ्यात्वेन हेतुसत्त्वे बाधकाभावात्। शाब्दबोधात्मकस्फुरणस्य स्वातिरिक्तपदज्ञानरूपविशिष्टचिद-धीनत्वेऽपि व्यवहारसामान्यान्तर्गते चिदंशे अज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपे अनादिसिद्धे स्फुरणे स्वातिरिक्तचिदधीनत्वाभावेन स्वगोचरस्फुरणाद्यन्यतमत्व-व्यापकस्वातिरिक्तचित्प्रयोज्यताकत्वस्य हेतोः शुद्धे असत्त्वेन व्यभिचारविरहात्। निरुक्तहेतोः स्वत्वघटितत्वेनाननुगमे तु स्वभिन्नत्वस्वव्याप्यत्वोभयसंबन्धेन चितो हेतुत्वं बोध्यम्। स्वविषयकव्यवहारत्वं व्याप्यतावच्छेदकसंबन्धः। प्रयोज्यत्वं व्यापकतावच्छेदकसंबन्धः।

---

टि. उभयसंबन्धेनेति। स्वभिन्नत्वसंबन्धेन घटादिवृत्त्यवच्छिन्नचिद्रूपहेतुमति शुद्धचिति व्यभिचारवारणाय व्याप्यत्वनिवेशः। चिद्विषयकव्यवहाराणां सर्वेषां शुद्धचिद-धीनत्वेन शुद्धचिति शुद्धचिद्रूपहेतोः व्याप्यत्वसंबन्धेन सत्त्वात् व्यभिचारवारणाय स्वभिन्न-त्वनिवेशः।

यद्वा स्वगोचरस्फुरणत्वव्यापकस्वातिरिक्तचिदपेक्षत्वकत्वं लघु हेतुरिति न किञ्चिदनुपपन्नम्।

यत्तु—असत्त्वापादकाज्ञानशून्यचितोऽस्तित्वमपि न युक्तम्। तथा सति अस्तिस्फुरत्योरेकार्थत्वेन घटो मे स्फुरतीतिवत् घटो मेऽस्तीति व्यवहारापत्तेः। चैत्रस्य स्फुरति न मैत्रस्य इतिवत् चैत्रस्यास्ति न मैत्रस्येति व्यवहारापत्तेश्च। परन्तु कालसंबन्धित्वमेवास्तित्वमिति युक्तमिति।

तन्न। प्राचीननैयायिकमते गमिस्पन्द्योरेकार्थत्वेऽपि स्पन्देः द्वितीयान्तपदसमभिव्याहारस्येव अस्तेः षष्ठ्यन्तपदसमभिव्याहारस्य शाब्दबोधकारणत्वानङ्गीकारेण मे अस्ति इत्यादिप्रयोगापत्तेरयोगात्। कालसंबन्धित्वमेवास्तित्वमित्यपि न युक्तम्, कालस्य सत्त्वाभावप्रसङ्गात्।

यत्तु—व्यवहारे व्यवहर्तव्यस्य कारणत्वमपि न युक्तम्। व्यवहर्तव्यसत्त्वेपि तदज्ञानदशायां तद्व्यवहारानुत्पत्तेः। न च व्यवहर्तव्यज्ञानं हेतुरिति वाच्यम्। शुकादिव्यवहारे व्यभिचारादिति।

तन्न। बुबोधयिषाधीनव्यवहारस्य विवक्षितत्वेनादोषात्।

अस्वप्रकाशत्वरूपं दृश्यत्वमपि हेतुः। तच्च स्वप्रकाशत्वावच्छिन्नप्रतियोगिताकभेदानुयोगित्वम्। स्वप्रकाशत्वञ्च स्वान्यचित्त्वावच्छिन्नानपेक्षापरोक्षताकत्वम्। अपरोक्षत्वञ्च विषयनिष्ठं अज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपम्, न तु वृत्तिविषयत्वं विषयतासंबन्धेन वृत्तिमत्त्वं वा। वृत्तित्वं इन्द्रियजन्य-

---

**टि· स्वगोचरस्फुरणत्वव्यापकेति।** शुद्धविषयकशाब्दबोधात्मकस्फुरणस्य स्वातिरिक्तपदज्ञानादिचिदपेक्षत्वेऽपि स्फुरणत्वाक्रान्ते पूर्वोक्तानादिसिद्धस्फुरणे स्वातिरिक्तचिदधीनत्वाभावेन व्यापकताघटितहेतोः शुद्धे विरहान्न व्यभिचार इति भावः।

**शाब्दबोधकारणत्वानङ्गीकारेणेति।** इयञ्च रीतिः अस्वप्रकाशत्वविचारप्रसङ्गागतविचारे 'कृञ्धातुसमानार्थकयतेरिव सन्नन्तसमानार्थक्यजन्तादेरपि कर्मबोधकसुप्साकाङ्क्षत्वानुपगमेन तण्डुलं पिपक्षतीतिवत् तण्डुलं पाकीयतीति प्रयोगाप्रसङ्गात्' इति ग्रन्थेन न्यायभास्करकारैरादृतेति बोध्यम्।

**न तु वृत्तिविषयत्वमिति।** वृत्तिविषयत्वस्य स्वप्रकाशत्वघटकापरोक्षत्वरूपतानिरासेन 'अपरोक्षतायाः प्रत्यक्षात्मकान्तःकरणवृत्तिविषयत्वरूपत्वे अर्थसंबद्धवृत्ति-

ज्ञानत्वं ज्ञानाकरणकज्ञानत्वं वा। आद्ये अनुमितावतिव्याप्तिः। द्वितीये विशेषणज्ञानजन्ये विशिष्टज्ञानेऽव्याप्तिः। चिदंशनिष्ठापरोक्षत्वस्य स्वान्याविद्यापेक्षणात् चिदिति विशेष्योपादानम्। आनन्दांशस्य स्वान्यचिदंशाधीनापरोक्षताकत्वान्न स्वप्रकाशत्वम्। न च चिदंशेऽप्युक्तलक्षणस्यासंभवः स्वान्यचिदप्रसिद्धेरिति वाच्यम्। स्वान्यत्वाभावविशिष्टा स्वनिष्ठापरोक्षत्वापेक्षणीया चित् यस्य तत्त्वं स्वप्रकाशत्वम्। स्वापरोक्षत्वापेक्षणीया चित् यदन्या न भवति तत्त्वं तदिति यावत्। स्वपदाभ्यां स्वपदयत्पदाभ्यां चैका व्यक्तिर्ग्राह्या।

यत्तु—शुद्धगतानन्दांशस्यास्वप्रकाशत्वे तत्र व्यभिचारः, तस्य मिथ्यात्वे च मोक्षे आनन्दावाप्तिबोधकश्रुतेरनुपपत्तिः। 'मोक्षे आनन्दावाप्तिबोधकश्रुतीनामनावृतानन्दैक्यमर्थः न त्वानन्दसंबन्धः अभेदे संबन्धानुपपत्तेः' इति भवतैवोक्तत्वात्। न चेत्यादिकमपि न युक्तम्। चिदंशस्य स्वपदेनोपादाने स्वान्यस्या जीवचितः प्रसिद्धत्वेनाप्रसिद्धिविरहादिति।

तन्न। आनन्दत्वविशिष्टे व्यभिचारः आपाद्यते आनन्दत्वोपलक्षिते वा। विशिष्टस्यास्वप्रकाशत्वेऽपि तस्य मिथ्यात्वेन न व्यभिचारः। उपलक्षिते मिथ्यात्वाभावेऽपि स्वप्रकाशत्वेन हेतोरभावान्न व्यभिचारः।

न चेत्यादिकमपि युक्तमेव। चित्त्वावच्छेदेन स्वान्यत्वविवक्षणेन जीवचिन्निष्ठचिद्भेदस्य चित्त्वावच्छिन्नत्वाभावेनाप्रसिद्धेः।

यत्तु—'यदप्यत्रापरोक्षत्वं नोक्तवृत्तिरूपं किन्तु अज्ञानविषयत्वाभाव-

---

रूपत्वे वा स्वान्यचिदप्रयोज्यापरोक्षत्वस्याप्रसिद्धेः' इत्यादिः **न्यायभास्करग्रन्थः** अनुक्तोपालम्भनरूपः इत्युक्तं बोध्यम्।

**विशिष्टस्यास्वप्रकाशत्वेऽपीति**। आनन्दत्वविशिष्टस्य स्वपदेनोपादाने तदन्यत्वस्य चिति सत्त्वेन तत्प्रयोज्यापरोक्षताकत्वस्य सत्त्वादिति भावः।

**स्वप्रकाशत्वेनेति**। स्वपदेनानन्दत्वोपलक्षितोपादाने तदन्यत्वस्य चित्यसत्त्वेन स्वान्यचित्प्रयोज्यापरोक्षताकत्वस्य तत्रासत्त्वादिति भावः।

**चित्त्वावच्छिन्नत्वाभावेन**—चित्त्वावच्छिन्नानुयोगिताकत्वाभावेन।

प्रयोजकविशिष्टचिद्रूपम्। तथा च नाप्रसिद्धिः। ब्रह्मनिष्ठोक्तापरोक्षत्वस्याधिष्ठानविधया स्वप्रयोज्यत्वेऽपि स्वान्यचिदप्रयोज्यत्वेन ब्रह्मणि निरुक्तस्वप्रकाशत्वस्य प्रसिद्धेः। तत्र तद्भेदाभावाच्च नोक्तव्यभिचारः। इत्यनूद्य, तन्न, ब्रह्मगतस्योक्तापरोक्षत्वस्य वेदान्तजन्यवृत्त्यवच्छिन्नचिद्रूपस्य स्वातिरिक्तपदज्ञानादिरूपचित्प्रयोज्यत्वेन निरुक्तस्वप्रकाशत्वस्याप्रसिद्धेः पूर्वोक्तरीत्या व्यभिचाराच्च' इत्युक्तम्।

तन्न—चित्त्वावच्छेदेन स्वान्यत्वस्य विवक्षितत्वेन पदज्ञानादिरूपचितः तादृशस्वान्यत्वाभावेन व्यभिचाराभावात्। यथा चेश्वरप्रत्यक्षस्येतरानपेक्षत्वं तथा 'यत्साक्षात्' इति श्रुतिसिद्धप्रत्यक्षस्याधिष्ठानेतरानपेक्षत्वमेव।

निरुक्तस्वप्रकाशत्वघटकमपरोक्षत्वं अज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपमेव न तु अज्ञानाविषयचिद्रूपम्। साक्षात्करोतेः सकर्मकत्वानुरोधेन अपरोक्षताया उक्तरूपत्वावश्यकत्वात्। धात्वर्थतावच्छेदकफलशालित्वं हि कर्मत्वम्। फलप्रयोजकव्यापारघटितवाचकत्वं धातोः सकर्मकत्वमिति तार्किकादयः। स्ववाच्यव्यापारव्यधिकरणं यत्फलं तद्वाचकत्वं धातोः सकर्मकत्वम्। फलतत्प्रयोजकयोः धातुवाच्याघटकत्वे धातोः सकर्मकत्वानुपपत्तिः। अत एव जानात्यर्थस्य स्फुरणस्याप्यसत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपत्वमेव। न त्वसत्त्वापादकाज्ञानाविषयत्वविशिष्टचिद्रूपत्वम्। जानातेः सकर्मकत्वानुपपत्तेः।

ननु अज्ञानाविषयचिदेव साक्षात्करोतेरर्थः। आख्यातार्थव्यापारप्रयोज्यतद्व्यधिकरणफलाश्रयत्वं कर्मत्वम्। तादृशफलवाचकत्वमेव धातोः सकर्मकत्वम्। फलं धात्वर्थः, आश्रयत्वं कर्मप्रत्ययार्थः, आख्यातार्थो व्यापारः। तथा चाज्ञानाविषयत्वविशिष्टचिदर्थकस्य साक्षात्करोतेः निरुक्तं सकर्मकत्वमुपपद्यते इति अज्ञानाविषयत्वप्रयोजकविशिष्टचितः साक्षात्करोत्यर्थत्वमनावश्यकमिति चेत्।

---

**टि॰ पूर्वोक्तरीत्येति**। असतः भेदं स्वीकृत्य पक्षे तदुपपादने तद्रीत्या ब्रह्मणि व्यभिचारः इति भावः।

अपरोक्षत्वस्य विशेषणज्ञानाद्यधीनस्यैव लोके प्रसिद्धत्वात् अन्यानधीनापरोक्षत्वमप्रसिद्धमित्याशङ्क्याह—**यथा चेति**

न—अन्यविषयकप्रत्यक्षसमानविषयकानुमित्यादिप्रतिबन्धकगच्छतीत्यादिवाक्यजन्यशाब्दबोधसामग्रीशरीरे धातुजन्यफलोपस्थित्याख्यातजन्यव्यापारोपस्थित्योः योग्यताज्ञानादिकारणान्तरे वैशिष्ट्यनिवेशे विनिगमनाविरहेणोक्तसामग्र्यां त्रयाणां विशेषणविशेष्यभावापत्त्या प्रतिबन्धकताषट्ककल्पने गौरवम्। धातोः फलावच्छिन्नव्यापारवाचकत्वे तु एकस्याः फलविशिष्टव्यापारोपस्थितेरेव कारणान्तरे वैशिष्ट्यनिवेशेन प्रतिबन्धकताकल्पनालाघवमिति फलावच्छिन्नव्यापारवाचकतापक्षस्यैव युक्तत्वात्। अनेनैवाभिसन्धिना साक्षात्करोतेः अज्ञानाविषयत्वप्रयोजकविशिष्टचिदर्थकत्वं श्रीब्रह्मानन्दसरस्वतीभिः प्रतिपादितमिति बोध्यम्।

यत्तु—साक्षात्करोतेः जानातेश्चोक्तार्थे शक्तिस्वीकारे ईश्वरः सर्वं साक्षात्करोति सर्वं जानातीति च व्यवहारानुपपत्तिः, ईश्वरस्याज्ञानाभावेन अज्ञानविषयत्वाभावप्रयोजकविशिष्टचित्तादात्म्यस्य तत्र बाधादिति।

तन्न—तत्तत्पुरुषीयत्वेनाज्ञानस्य साक्षात्करोत्यर्थकोटावप्रवेशेन ईश्वरस्य कर्तुः अज्ञानाप्रसिद्धावपि घटादिनिष्ठाज्ञानविषयत्वाभावस्य ईश्वरीयमायावृत्तिप्रयोज्यत्वेन अज्ञानविषयत्वाभावप्रयोजकविशिष्टचित्तादात्म्यस्य ईश्वरे सत्त्वेन तादृशप्रयोगोपपत्तेः।

यत्तु—अत्र अज्ञानाविषयचिद्रूपापरोक्षत्वस्यैव निवेशो युक्तः। धातोः सकर्मकत्वोपपत्तये धातुवाच्यतावच्छेदकगर्भे फलतत्प्रयोजकयोर्निवेशावश्यकत्वेऽपि हेतुकोटौ तन्निवेशस्य विफलत्वादिति।

तन्न—अज्ञानविषयताशून्यचिद्रूपापरोक्षत्वघटितस्य हेत्वन्तरत्वेनादोषात्।

ननु साक्षात्करोतेः सकर्मकत्वोपपत्तये निरुक्तफलावच्छिन्नव्यापारार्थकत्वं नावश्यकम्, घटमिच्छति करोति द्वेष्टि इत्यादौ सविषयवाचकधातुसमभिव्या-

---

**टि. प्रयोगोपपत्तेरिति।** ईश्वरः सर्वं साक्षात्करोतीत्यत्र विषयताविशेषरूपफलविशिष्टज्ञानविशेषे साक्षात्करोतेः निरूढलक्षणेति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः।**

हारे विषयतारूपं गौणं कर्मत्वमित्यस्यावश्यं वाच्यत्वेन विषयतानिरूपकवस्तुवाचकत्वरूपसकर्मकत्वस्य फलादेर्धातुवाच्याघटकत्वेऽप्युपपन्नत्वादिति चेत्

न—विषयतानिरूपकवस्तुवाचकत्वस्य सकर्मकत्वे विषयतायाश्च कर्मत्वरूपत्वे पर्वतंसाक्षात्करोतीत्यत्र पर्वतमनुमिनोतीति प्रयोगापत्तिः। याचितमण्डनन्यायेन ज्ञानीयविषयताया इच्छायां भानेन यत्र घटपटविषयकसमूहालम्बनज्ञानेन पटेच्छा जाता तत्र घटमिच्छतीतिव्यवहारापत्तिश्च। मुख्यकर्मत्वे संभवति गौणकर्मत्वाङ्गीकारस्यायुक्तत्वात्। गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः इति परिभाषया 'कर्मणि द्वितीया' इति सूत्रस्य गौणे कर्मण्यप्रवृत्तेः घटंजानातीत्यादौ घटादिपदोत्तरं द्वितीयानुपपत्तेश्च। तथा च इच्छति करोति द्वेष्टीत्यादेरपि फलावच्छिन्नव्यापारवाचकत्वादेव सकर्मकत्वम्।

---

**टि. अनुमिनोतीति**। पर्वतांशे अपरोक्षरूपायां सन्निकृष्टपर्वते वह्न्यनुमितौ पर्वतस्य विषयत्वादिति भावः।

अनुमित्यर्थकधातुयोगे विधेयताख्यविषयताया एव द्वितीयार्थत्वमित्युक्तावप्याह—**याचितमण्डनेति**।

**घटमिच्छतीतिव्यवहारापत्तिरिति**। घटविषयकसमूहालम्बनजन्यत्वेन इच्छायां घटविषयकत्वसत्त्वादिति भावः। **मुख्यकर्मत्व इति**। द्वितीयाया विषयतार्थकत्वे द्वितीया न साधुः स्यात्। कर्मणि द्वितीया इत्यादौ कर्मण्येव द्वितीया इति नियमस्याश्रयणात्। तथा च भाष्यवार्तिकम्—

सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु च ॥ इति।

**नैयायिकास्तु** घटं जानातीत्यादौ घटविषयकज्ञानाश्रयत्वशाब्दबोधं स्वानुभवसिद्धमूरीकृत्य तदनुसारेण धातोः ज्ञानमात्रार्थकत्वं कर्मप्रत्ययस्य विषयत्वार्थकत्वञ्च स्वीकुर्वन्ति। 'कर्तुरीप्सिततमं कर्म' इति सूत्राप्रवृत्त्या घटादेः कर्मत्वमुपपादयितुं विषयत्वं गौणं तदिति चाभ्युपगच्छन्ति। **अपरे नैयायिकाः** 'अकथितञ्च' इति सूत्रे चकारेण घटादेः कर्मसंज्ञां भाष्याद्यनारूढसरण्या वदन्ति। नारायणं नमस्करोतीत्यत्रेव साक्षात्करोतीत्यत्रापि साक्षादिति निपातार्थफलाश्रयत्वेन कर्मत्वोपपादनाय कर्मताशरीरघटकं धात्वर्थतावच्छेदकत्वमन्यथा परिष्कुर्वन्ति। सर्वोऽप्ययं क्लेशः स्वानुभवमूलक एव कल्प्यते। **नव्यनैयायिकाः गोकुलनाथोपाध्यायप्रभृतयः** घटादेः मुख्यकर्मत्वमुपपादयितुं जानातेः विषय-

फलप्रयोजकेच्छा तादृशद्वेषश्च इच्छतिद्वेष्टयोरर्थः। इच्छायाः फलं सुखादौ प्रमातृसंबन्धः। गवादिषु स्वत्वादिः। द्वेषस्य च सर्पादौ तत्तदनिष्टम्। सुखानुत्पत्तावपि इच्छादेरुक्तसंबन्धस्वरूपयोग्यत्वानपायात् सुखमिच्छतीत्यादिप्रयोग उपपन्नः ग्रामप्राप्त्यनुपधानेऽपि ग्रामं गच्छतीति प्रयोगवत्। एवं कालसंबन्धप्रयोजकः उत्पत्तिप्रयोजको वा यत्नः कृञ्धात्वर्थः। घटं करोतीत्यादौ घटनिष्ठकालसंबन्धप्रयोजकयत्नबोधात्। उक्तञ्च कर्मवत्कर्मणा तुल्यक्रिय इति सूत्रे वैयाकरणैः—

कृञोऽकर्मकतापत्ते र्न हि यत्नोऽर्थ इष्यते।
किन्तूत्पादनमेवातः कर्मवत्स्याद्यगाद्यपि॥ इति।

उत्पादनं—उत्पत्तिप्रयोजकव्यापारः।

ननु तथा सति पुत्रादिसुखेच्छया व्यजनादिचालने सामग्रीवशाच्च यत्र सन्निहितशत्रोरपि सुखोत्पत्तिः तत्र पुत्रस्य सुखमिच्छतीतिवत् शत्रोस्सुखमिच्छतीति प्रयोगापत्तिः। तत्र तादृशेच्छाप्रयोज्यस्योत्पत्त्यादिरूपफलस्य पुत्रसुख इव शत्रुसुखेऽपि सत्त्वात्। विषयताया द्वितीयार्थत्वे तु शत्रुसुखविषयकेच्छाविरहान्न तदापत्तिः। एवं यत्र द्वेषप्रयोजकसामग्र्या शत्रोरिव मित्रस्याप्यनिष्टोत्पत्तिः तत्र मित्रं द्वेष्टीति व्यवहारापत्तिः। एवमुत्पत्तिप्रयोजकयत्नस्य करोतिवाच्यत्वे जलाहरणाद्यनुकूलयत्नेन श्रमाद्युत्पत्तौ जलाहरणं करोतीतिवत् श्रमं करोतीति व्यवहारापत्तिः श्रमं न करोतीति व्यवहारानुपपत्तिश्च इति चेत्

न—ग्रामगमने प्रवृत्तस्य दैवान्नदीसंयोगे नदीं गच्छतीति प्रयोगवारणाय तत्तत्फलाश्रयत्वेनोद्देश्यत्वरूपस्यैव कर्मत्वस्य वक्तव्यतया न शत्रोःसुख-

---

तावच्छिन्नज्ञानार्थकत्वं वदन्ति। तस्मात् जानातेः सकर्मकत्वानुरोधेन निरुक्तफलप्रयोजकव्यापारघटितार्थकत्वमेव न्याय्यम्। प्रघट्टकेऽस्मिन् न्यायभास्करग्रन्थः नैयायिकाभिमतशाब्दबोधप्रक्रियावबोधेऽतीवोपकरोति न तु प्रकृतोपयोगीति तदीयविचारस्त्यक्तो ग्रन्थकृतेति बोध्यम्।

मिच्छतीति प्रयोगः। एतेन उत्पत्तिप्रयोजकयत्नस्य करोतिवाच्यत्वे जलाहरणानुकूलयत्नेन श्रमाद्युत्पत्तौ जलाहरणंकरोतीतिवत् श्रमंकरोतीति व्यवहारापत्तिरिति निरस्तम्। श्रमस्य फलाश्रयत्वेनोद्देश्यत्वाभावात्।

यत्तु—साक्षात्करोतेः जानातेश्चोक्तार्थकत्वे शुक्तिरूप्यं साक्षात्करोति जानाति इत्यनयोरनुपपत्तिः। शुक्तिरूप्यस्याज्ञानविषयतानवच्छेदकत्वेन शुक्तिरूप्यनिरूपितावच्छेदकत्वसंबन्धावच्छिन्नाधेयत्वस्योक्ताज्ञानविषयत्वाभावे बाधादिति।

तन्न—अवच्छेदकत्वसंबन्धावच्छिन्नाज्ञानविषयत्वाभावस्य शुक्तिरूप्ये सत्त्वेन तद्व्यवहारे बाधकाभावात्।

यत्तु—स्ववाच्यव्यापारस्य व्यधिकरणं यत्फलं तद्वाचकत्वं धातोः सकर्मकत्वमित्यपि न युक्तम्, फलस्यापि किञ्चिदपेक्षया व्यापारत्वेन स्ववाच्यव्यापारव्यधिकरणफलाप्रसिद्धेरसंभवापत्तेरिति।

तन्न—पचतीत्यादौ विक्लत्तेः फलत्वानुपपत्तेः। तस्या अपि किञ्चिदपेक्षया व्यापारत्वापातात्। विक्लत्तिः फलमिति हि व्यवहारः। विक्लत्तिपर्यन्तक्रिया व्यापारः तज्जन्यं फलं विक्लत्तिः न तु फलस्य व्यापारत्वं अतो नोक्तदोषः।

---

**टि. उद्देश्यत्वाभावादिति।** कर्मत्वस्येच्छाघटितत्वादेव यत्र दैवात् अन्नभोजनं विषभोजनं संपन्नं तत्र विषं न भुज्यते अनेन इति प्रयोग उपपद्यते। स्पष्टञ्चेदं **व्युत्पत्तिवादे चतुर्थ्यर्थविचारे कर्मत्वसंप्रदानत्वयोर्विशेषनिरूपणावसरे** इति बोध्यम्।

इच्छत्यादिस्थले प्रमातृसंबन्धादिधात्वर्थफलस्य धात्वर्थव्यापारे स्वानुकूलत्वविषयत्वोभयं संबन्धतया भासते इति नोक्तप्रयोगापत्तिरिति **श्रीहरिहरशास्त्रिणः**। पूर्वप्रयोगाभावान्न तथा प्रयोगः इति **श्रीरामसुब्रह्मण्यशास्त्रिपादाः**।

**नोक्तदोष इति।** धातुजन्योपस्थितिनिरूपितानुकूलतासंबन्धावच्छिन्नप्रकारताश्रयस्य फलत्वम्। तादृशप्रकारतानिरूपितविशेष्यतावत्त्वं व्यापारत्वम्। तथा च

यद्वा स्वान्यचिदविषयत्वं स्वप्रकाशत्वम्, तच्च शुद्धेऽस्तीति न व्यभिचारः।

अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वाभावरूपं दृश्यत्वमपि हेतुः। वेद्यत्वञ्च स्वावच्छिन्नचिद्विषयकं यदभानापादकमज्ञानं तन्निवर्तकवृत्तिविषयत्वरूपं फलव्याप्यत्वम्। तच्च न ब्रह्मणि। यत्रोक्तं व्याप्यत्वं स्थाप्यं तस्यैव स्वपदार्थतया ब्रह्मावच्छिन्नचितोऽप्रसिद्धेः। तथा च निरुक्तवेद्यत्वाभावसमानाधिकरणस्याभानापादकाज्ञाननिवर्तकवृत्तिविषयत्वरूपापरोक्षव्यवहारयोग्यत्वस्य ब्रह्ममात्रनिष्ठत्वात् तदभावरूपं दृश्यत्वं निरवच्छिन्नविशेषणतासंबन्धेन प्रपञ्चे अक्षु-

---

पचधात्वर्थविक्लृत्तिः फलमेवेति भावः।

एतेन—एधते इत्यादिधातूनामपि परस्परव्यधिकरणनानावृद्धिवाचकत्वेन तादृशवृद्धेरपि अन्यवृद्ध्यपेक्षया फलत्वेन निरुक्तसकर्मकत्वलक्षणस्य एधत्यादावतिव्याप्तिरिति न्यायभास्करोक्तं परास्तम्। वृद्धेः एधधातुजन्योपस्थितिनिरूपितानुकूलतासंबन्धावच्छिन्नप्रकारताश्रयत्वरूपफलत्वाभावात्।

यत्तु—घटं साक्षात्करोतीत्यादौ चाक्षुषादिवृत्त्यवच्छिन्नचितः प्रमातरीव घटादावपि तादात्म्यसंबन्धेन सत्त्वात् अज्ञानविषयत्वाभावरूपफलस्य व्यापारव्यधिकरणत्वाभावेन सकर्मकत्वानुपपत्तितादवस्थ्यमिति।

तन्न—धातूपात्तव्यापारस्य कर्तरि यः संबन्धः तेन संबन्धेन व्यापारव्यधिकरणत्वं फलस्य सकर्मकत्वलक्षणप्रविष्टम्। अन्यथा गमेरपि सकर्मकत्वानुपपत्तेः। पुरुषवृत्तेरपि गमनव्यापारस्य कालिकसंबन्धेन ग्रामादिकर्मणि सत्त्वेन फलस्य व्यापारव्यधिकरणत्वाभावात्। इत्थञ्च घटं साक्षात्करोति चैत्रः इत्यत्र धात्वर्थव्यापारस्य वृत्त्यवच्छिन्नचैतन्यस्य प्रथमान्तपदार्थे प्रमातृचैतन्ये यत्तादात्म्यं संबन्धः न तेन तादात्म्येन तस्य घटवृत्तिता। तथा सति चैत्रः साक्षात्करोतीतिवत् घटःसाक्षात्करोतीति व्यवहारप्रसङ्गात्। ततश्च धात्वर्थव्यापारस्य प्रथमान्तार्थे यः संबन्धः तत्संबन्धघटितं व्यापारव्यधिकरणत्वं तादृशफलेऽव्याहतमिति सकर्मकत्वानुपपत्तिविरहादिति बोध्यम्।

**स्वान्यचिदविषयत्वमिति।** स्वान्यचिद्विषयः यो यः तत्तद्भिन्नत्वमित्यर्थः। तेन नाप्रसिद्धिः।

**निरवच्छिन्नविशेषणतेति।** अभानापादकाज्ञाननिवर्तकवृत्तिविषयत्वस्य वृत्तिकाल एव सत्त्वेन कालिकाव्याप्यवृत्तितया तदभावस्य वृत्तिशून्यकाले ब्रह्मणि सत्त्वेन

णम् । शुक्तिरूप्यादेरभानापादकाज्ञाननिवर्तकवृत्तिविषयत्वाभावेनावेद्यत्वेऽपि हेतुसत्त्वमुपपन्नम् ।

न चोक्तस्वप्रकाशत्वस्यापि मिथ्यात्वेन तदभावस्य ब्रह्मणि सत्त्वेन व्यभिचार इति वाच्यम् । लोकसिद्धनिरवच्छिन्नविशेषणतासंबन्धेन हेतुत्वविवक्षणेनादोषात् । निरुक्तस्वप्रकाशभेदस्य हेतुत्वे व्यभिचाराप्रसङ्गाच्च ।

यत्तु—ब्रह्म स्वप्रकाशमिति समानाधिकरणप्रतीत्या ब्रह्मणि तादृशभेदस्यापि सत्त्वेन व्यभिचारतादवस्थ्यमिति ।

तन्न—स्वप्रकाशत्वप्रकारकप्रतीतिविरोधिप्रतीतिविषयभेदस्यैव स्वप्रकाशभेदपदेन विवक्षितत्वात् समानाधिकरणप्रतीतिसिद्धभेदस्य च तादृशभेदत्वाभावेन निरुक्तव्यभिचारासंभवात् । स्वप्रकाशत्वावच्छिन्नाधिकरणताकभेदप्रतियोगित्वं दृश्यत्वं पर्यवसितम् । अन्यत् सर्वं स्पष्टमित्युपरम्यते ।

**इति महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिविरचिते**
**ब्रह्मानन्दीयभावप्रकाशे दृश्यत्वविचारः समाप्तः ॥**

---

व्यभिचारवारणाय निरवच्छिन्नविशेषणतायाः हेतुतावच्छेदकसंबन्धत्वानुसरणम् ।

वस्तुतस्तु ब्रह्मानन्दीये उक्तदोषपरिहाराय अभानापादकाज्ञाननिवर्तकवृत्तिविषयत्वपदेन तादृशवृत्तिविषयत्वयोग्यत्वं विवक्षितं तच्च ब्रह्मतद्घटान्यतरत्वपर्यवसितं व्याप्यवृत्त्येवेति निरूपितमिति विभावनीयम् ।

ननु ब्रह्मनिष्ठतद्व्यक्तित्वापेक्षयोक्तस्वप्रकाशत्वस्य गुरुत्वेन तदवच्छिन्नभेदरूपहेत्वप्रसिद्धिरिति दूषणमुद्धरति—**स्वप्रकाशत्वावच्छिन्नेति** । गुरुधर्मस्यानुयोगितावच्छेदकत्वं सर्वतान्त्रिकसंमतमेवेति भावः । अत्र पञ्चमप्रकाराविद्यानिवृत्तौ व्यभिचारवारणाय अज्ञानाप्रयुक्तं सत् यज्जन्यं तदन्यत्वं विशेषणं देयम् । अज्ञानाप्रयुक्तत्वञ्च अज्ञानतद्क्लेशान्यतरतादात्म्यानापन्नत्वमिति ब्रह्मानन्दीये प्रतिपादितम् । तत्र अज्ञानप्रयुक्तत्वेतरांशवैयर्थ्यदोषः न्यायभास्करोक्तः न प्रसरति, परिष्कृते हेतौ अज्ञानप्रयुक्तत्वस्याप्रवेशेन तेन वैयर्थ्यापादनासंभवात् अज्ञाने भागासिद्ध्या अज्ञानप्रयुक्तत्वस्य हेतुत्वासंभवाच्चेति सुगममित्याशयेनोपसंहरति—**अन्यत् सर्वं स्पष्टमित्यादि** ।

**इति दृश्यत्वविचारः समाप्तः ॥**

## अथ जडत्वविचारः

जडत्वमपि हेतुः। तच्चाज्ञानत्वमनात्मत्वं वा। अज्ञानत्वञ्च ज्ञानपदजन्यधीमुख्यविशेष्यत्वावच्छिन्नप्रतियोगिताकभेदः। वृत्तेश्चिदुपरागार्थत्वपक्षे प्रतिबिम्बप्रयोजकमनोऽवच्छिन्नचैतन्यं जानात्यर्थः। मनोऽवच्छिन्नचितो घटाद्याकारवृत्तौ प्रतिबिम्बोदयात् घटादिज्ञानं निर्वाह्यम्। घटं जानाति चैत्र इत्यादौ घटादिकं स्वाकारवृत्तिनिष्ठत्वसंबन्धेन जानात्यर्थैकदेशे प्रतिबिम्बरूपफलेऽन्वेति। सुखादौ वृत्तिस्वीकारे स्वाकारवृत्तिनिष्ठत्वसंबन्धेनैव प्रतिबिम्बे सुखादेरन्वयः। तदस्वीकारपक्षे सुखादावेव मनोऽवच्छिन्नचितः प्रतिबिम्बोदयस्वीकारात् स्वनिष्ठत्वसंबन्धेनैव तत्र तदन्वयः। सुखत्वं जानातीत्यादौ सुखत्वादौ वृत्तेः प्रतिबिम्बस्य चास्वीकारेपि स्वाश्रयसुखनिष्ठत्वसंबन्धेन सुखत्वादेः प्रतिबिम्बेऽन्वयः। तथा चात्र कल्पे जानातिसमभिव्याहृतद्वितीयायाः स्वनिष्ठत्वस्वाकारवृत्तिनिष्ठत्वस्वाश्रयनिष्ठत्वाद्यन्यतमसंबन्धोऽर्थः। वृत्तेरावरणभङ्गार्थत्वपक्षे तु असत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचैतन्यं जानात्यर्थः। घटं जानातीत्यादौ आधेयत्वस्य द्वितीयार्थस्य तादृशाज्ञानविषयत्वाभावे अन्वयः। तथा च कल्पद्वयेऽपि जानात्यर्थे विशेष्यतया चितः प्रवेशात् तद्भेदस्य दृश्यमात्रनिष्ठस्य हेतुतासंभवः।

ननु ज्ञानपदप्रयोज्यशाब्दबोधीयमुख्यविशेष्यत्वावच्छिन्नभेदस्य हेतुत्वे ज्ञानविषयः सर्वमिति वाक्यजन्यबोधीयाया विषताया ज्ञानपदप्रयोज्यायाः सर्वसाधारण्येन तादृशविशेष्यत्वावच्छिन्नभेदाप्रसिद्धिः। न च—शाब्दबोधीयमुख्यविशेष्यतायां ज्ञानपदप्रयोज्यत्वं हि ज्ञानपदजन्यतावच्छेदकत्वं वाच्यम्। अन्यस्य दुर्वचत्वात्। तथा च तादृशचिन्निष्ठविषयताशालिबोधं प्रत्येव

---

॥ अथ जडत्वविचारः ॥

**टि.** जडत्वस्वरूपविकल्पेषु अज्ञातृत्वकल्पस्य ग्रन्थकारैः दूषितत्वात् तं परित्यज्य कल्पद्वयं परिष्कर्तुमारभते—**तच्चेति**। जडत्वंहीत्यादिः उक्तभेदस्याप्रसिद्धत्वादित्यन्तः न्यायभास्करग्रन्थः ग्रन्थोक्तदूषणानुवाद एवेति नात्र प्रदर्शितः।

विभक्तेः सार्थकत्वमतेनाह—**द्वितीयाया इति**।

ज्ञानपदस्य कारणत्वेन तादृशचिन्निष्ठमुख्यविशेष्यताया अपि तादृश-विषयतात्वेन जन्यतावच्छेदकत्वात् उक्तबोधीयसर्वत्वावच्छिन्नविषयतायाश्चातथात्वान्नासिद्धिरिति—वाच्यम् । तथा सति पर्यायपदान्तरजन्यबोधे व्यभिचारवारणायाव्यवहितोत्तरत्वस्य जन्यतावच्छेदककोटौ निवेशावश्यकत्वेन विषयतायास्तत्रानिवेशेन निरुक्तप्रयोज्यत्वस्य विषयतायामसंभवेनासिद्धेः । ज्ञानपदप्रयोज्या या विषयताव्यक्तिः तस्याः तद्व्यक्तित्वेन स्वरूपतो वा भेदप्रतियोगितावच्छेदकत्वसंभवेन ज्ञानपदप्रयोज्यविषयतात्वविशिष्टस्य गुरुत्वेन तदवच्छिन्नावच्छेदकताकभेदाप्रसिद्धेश्च । न च ज्ञानपदप्रयोज्यां चिन्निष्ठविषयताव्यक्तिं तद्व्यक्तित्वेन गृहीत्वा तन्निष्ठनिरवच्छिन्नावच्छेदकताकभेदस्य तद्व्यक्तित्वावच्छिन्नावच्छेदकताकभेदस्य वा हेतुत्वमनुमतमिति वाच्यम् । तदादिशब्देन हेत्वादिनिर्देशस्य न्यायप्रयोगे असांप्रदायिकताया भवद्भिरेवासकृदुक्तत्वात् इति चेत्

न—सत्यंज्ञानमितिश्रुतिघटकज्ञानपदप्रयोज्यबोधनिरूपितमुख्यविशेष्यतात्वावच्छिन्नावच्छेदकताकभेदवत्त्वं उक्तमुख्यविशेष्यतानिष्ठनिरवच्छिन्नावच्छेदकताकभेदवत्त्वं वा जडत्वम् । ततश्च न ज्ञानविषयःसर्वमितिवाक्यजन्यबोधविषयतामादायाप्रसिद्धिः । न वा घटं जानातीत्यादिवाक्यजन्यबोधीयविशिष्टचिन्निष्ठमुख्यविशेष्यतामादाय भागासिद्धिः । न च ज्ञानपदस्य विशिष्टशक्तस्य कथं संसर्गाविषयकधीजनकत्वमिति वाच्यम् । विशिष्टशक्तस्यापि पदस्य निर्विकल्पकोपस्थितिद्वारा निर्विकल्पकशाब्दधीजनकत्वसंभवात् । तदुक्तं मणौ 'इच्छन्ति हि आकाशादिपदादपि निर्विकल्पकं स्मरणम्' इति ।

एतेन विषयतायां ज्ञानपदप्रयोज्यत्वनिबन्धनाः सर्वे दोषाः परिहृता वेदितव्याः ।

---

**टि. मुख्यविशेष्यतेति** । प्रकारतासंसर्गताभिन्नविषयतात्वं मुख्यविशेष्यतात्वं बोध्यम् । **एतेनेति** । न्यायप्रयोगे तदादिना निर्देशस्य सांप्रदायिकताया असकृदुक्तत्वात्

ननु तादृशविशेष्यता उपहितनिष्ठैव न तु शुद्धनिष्ठा, शुद्धस्यावेद्यत्वात्। तथा चोक्तमुख्यविशेष्यत्वावच्छिन्नभेदः शुद्धचित्यपीति व्यभिचारो दुर्वारः। न च—तत्तदुपहितत्वावच्छिन्नभेदस्य तत्तद्विशिष्टत्वावच्छिन्नभेदस्य च शुद्धचिति सत्त्वेऽपि उपहितघटकविशेष्यांशत्वावच्छिन्नभेदस्य अनङ्गीकारान्न व्यभिचारः। तादृशविशेष्यांशत्वावच्छिन्नभेदस्यैवोक्तमुख्यविशेष्यत्वावच्छिन्नभेदत्वेन निवेशादिति वाच्यम्। चैत्रीयघटाकारवृत्तिनिष्ठप्रतिबिम्बप्रयोजकशुद्धचितमादाय मैत्रीयज्ञानव्यवहारापत्तेर्वारणाय ज्ञाधात्वर्थे शुद्धचितो न प्रवेशः किन्तु मनोऽवच्छिन्नचितः इति स्वीकरणीयतया मनोऽवच्छिन्नचित एव विशेष्यांशत्वेन तदवच्छिन्नभेदस्य मनोऽवच्छिन्नचित्यभावेन भागासिद्धेः शुद्धचिति व्यभिचारस्य च प्रसङ्गात् इति चेत्

न—चैत्रोजानातीत्यादौ धर्मितावच्छेदकान्तःकरणविशेषस्यापि ज्ञाधात्वर्थचिति धर्मिपारतन्त्र्येणावच्छिन्नत्वसंबन्धेन भानान्नोक्तापत्तिरिति मनोऽवच्छिन्नचितः धात्वर्थप्रवेशो प्रयोजनाभावेनोक्तदोषविरहात्।

यत्तु—स्वनिष्ठत्वस्वाकारवृत्तिनिष्ठत्वस्वाश्रयनिष्ठत्वान्यतमसंबन्धो जाना-

---

ज्ञानपदप्रयोज्यचिन्निष्ठविषयताव्यक्तिं तद्व्यक्तित्वेनोपादाय तदवच्छिन्नभेदनिवेशोऽपि निर्दुष्ट इति बोध्यम्।

वस्तुतस्तु 'ज्ञानपदवाच्यस्य भेदः' इति लघुचन्द्रिकाग्रन्थात् ज्ञानपदजन्योपस्थितिविशेष्यतानिवेश एव ब्रह्मानन्दीयाभिमत इत्यवसीयते। अतः ज्ञानपदजन्यशाब्दबोधमादाय दोषकथनस्यावसर एव नास्तीति मन्तव्यम्।

**धर्मिपारतन्त्र्येणेति**। पर्वतोवह्निमानितिवाक्यजन्यबोधे धर्मितावच्छेदकपर्वतत्वस्य स्वावच्छिन्नत्वसंबन्धेन विधेये भानस्य सर्वतान्त्रिकानुमतत्वादिति भावः।

ज्ञाधात्वर्थे मनोऽवच्छिन्नचितः प्रवेशेऽपि प्रतिबिम्बप्रयोजकमनोऽवच्छिन्नचिदात्मकचिदेव ज्ञाधात्वर्थः। साक्षिणः शुद्धचिद्रूपस्यैवाधिष्ठानत्वेन ज्ञानत्वात्। तादृशचितश्च प्रथमान्तार्थेऽन्वये विशेषणीभूतमनोऽवच्छिन्नचितोऽपि तादात्म्येन तत्रान्वयाङ्गीकारेण निरुक्तव्यवहारापत्तिर्न संभवति। स्पष्टञ्चेदं लघुचन्द्रिकायां बिन्दुटीकायाञ्च। एवञ्च शुद्धचित एव विशेष्यत्वान्न व्यभिचारः इति बोध्यम्।

* * * *

तिसमभिव्याहृतद्वितीयाविभक्त्यर्थः इत्यपि न युक्तम्। सुखत्वं जानातीतिवत् सुखवृत्तियावद्धर्मान् जानातीति व्यवहारापत्तेरिति।

तन्न— सुखज्ञानस्थले सुखत्वस्येव सुखवृत्तियावद्धर्माणां भानसामग्र्याः संनिकर्षघटितायाः सत्त्वेन भवन्मतेऽपि सुखवृत्तियावद्धर्मान् जानातीति व्यवहारापत्तेर्दुर्वारत्वात्। अदृष्टविशेषस्य प्रतिबन्धकत्वं कल्पयित्वा वारणन्तु समानम्।

किञ्च ज्ञानत्वावच्छिन्नभेदो जडत्वम्। ज्ञानत्वञ्च न जातिः, अखण्डे तदयोगात्। किन्तु अर्थप्रकाशत्वम्। तथा चार्थोपलक्षितप्रकाशभिन्नत्वं जडत्वमिति न शुद्धे व्यभिचारः। तस्यार्थोपलक्षितप्रकाशत्वात्।

ननु मुक्तौ प्रकाश्याभावेन प्रकाशत्वस्यैवासंभवादर्थोपलक्षितप्रकाशत्वस्याप्यसंभवः मुक्तिसाधारणप्रकाशत्वञ्च दुर्वचमिति चेत्

न—प्रकाश्याभावेऽपि सविता प्रकाशते इति व्यवहारेण मुक्तौ प्रकाश्याभावेऽपि प्रकाशोपपत्तेः।

न च—ज्ञानत्वं सविषयकत्वव्याप्यम्। सविषयकत्वञ्च स्वसमानसत्ताकविषयसंबन्धव्याप्यम्। इच्छादौ तथा दर्शनात्। तथा च सर्वदृश्योच्छेदे मोक्षे वर्तमानस्य शुद्धस्य सविषयकत्वासंभवेन ज्ञानत्वोपलक्षितस्वरूपत्वासंभवात् तद्भेदस्य हेतुत्वे शुद्धे व्यभिचारो दुर्वार इति-वाच्यम्। सविषयकत्वे स्वसमानसत्ताकविषयसंबन्धव्याप्तिरेवासिद्धा, इच्छायां सविषयकत्वस्यैवासिद्धेः। याचितमण्डनन्यायेन स्वजनकज्ञानीयविषयतयैवेच्छादौ सविषयकत्वव्यवहारात्। ज्ञानविषययोस्तादात्म्येष्वेव विषयतात्वस्य क्लृप्तत्वात्।

ननु घटमिच्छतीत्यादौ विषयतानिरूपकज्ञानजन्यत्वं द्वितीयार्थ इति भवद्भिर्वक्तव्यम्। तथा च घटः इष्टसाधनं पटश्च प्रमेयः इति समूहालम्बन-

---

**टि. प्रकाशोपपत्तेरिति।** चिद्रूपत्वमेव मुक्तिसाधारणं प्रकाशत्वमिति भावः। नैयायिकमते मुक्तिदशायामात्मनि ज्ञानाभावेऽपि यथा चेतनत्वं तथा मुक्तौ प्रकाश्याभावेऽपि कादाचित्कप्रकाश्यसंबन्धमादाय प्रकाशत्वमुपपद्यते इति **श्रीपरीक्षिन्महाराजाः।**

ज्ञानजन्येच्छादशायां घटमिच्छतीतिवत् पटमिच्छतीति व्यवहारप्रसङ्गः। न च स्वजनकतावच्छेदकविषयतावत्त्वमेवेच्छायाः संबन्धः तथा च नोक्तदोष इति वाच्यम्। तथापीष्टसाधनत्वविषयतायाः स्वजनकतावच्छेदकत्वेन घटमिच्छतीतिवत् इष्टसाधनत्वमिच्छतीति व्यवहारापत्तेः। न च स्वजनकतावच्छेदकेष्टसाधनत्वप्रकारतानिरूपितविशेष्यतावच्छेदकघटत्वादिमत्त्वमेवेच्छायाः संबन्ध इति नेष्टसाधनत्वमिच्छतीतिव्यवहारापत्तिरिति वाच्यम्। एवमपि नित्येच्छास्थले उक्तसंबन्धासंभवेन तस्याः सर्वविषयकत्वानुपपत्तेरिति चेत्

न—ईश्वरेच्छाया अप्यविद्यापरिणामरूपाया जन्यत्वेन नित्येच्छाया एवाभावेन निरुक्तसंबन्धोपपत्तेः। जीवेच्छाया एव निरुक्तसंबन्धस्वीकारेणेश्वरेच्छाया नित्यत्वेऽपि दोषाभावाच्च।

ननु ज्ञानस्य ज्ञातृज्ञेयनिरूप्यत्वात् ज्ञानप्रकाशत्वस्य विषयादिप्रकाशत्वव्याप्यत्वं सिद्धम्। तथा च भवन्मते ज्ञेयज्ञातृविशेषितशुद्धचिद्रूपेणाप्यसंप्रज्ञातसमाधौ मोक्षेचात्मनः प्रकाशमानत्वान्न ज्ञानत्वोपलक्षितस्वरूपत्वम्। अत एवोक्तं विवरणे 'ज्ञातुरर्थप्रकाशस्य ज्ञानत्वात्' इति। एवञ्च शुद्धात्मनि व्यभिचारो दुर्वार इति चेत्

न—निर्विकल्पकसमाधौ मोक्षेचात्मनो न ज्ञातृज्ञेयविशेषितरूपेण भानं किन्तु शुद्धरूपेणैवेति तत्र ज्ञानत्वसत्त्वेन व्यभिचाराभावात्। भवन्मते ज्ञातृज्ञेयाविशेषितरूपेण भासमानानां जीवेश्वरनित्यविभूतीनामिव शुद्धस्यापि ज्ञानरूपत्वसंभवाच्च।

यत्तु—तेषां न तथा भानम्, किन्तु जीवेश्वरयोः प्रत्यक्त्वविशिष्टतयैव भानाभ्युपगमेन स्वात्मकज्ञातृज्ञेयविशेषितरूपेणैव भानम्। प्रत्यक्त्वस्य स्वकर्तृक-

---

टि. **दोषाभावाच्चेति**। नित्येच्छावादिनां मते तादृशेच्छायाः स्वसमानाधिकरणज्ञानविषयत्वमेव संबन्ध इति भावः।

**निर्विकल्पकसमाधाविति**। श्रुतिस्मृतिनिकुरुम्बैः तस्यां दशायां शुद्धात्मभानं सिद्धमिति भावः।

व्यवहारजनकतावच्छेदकस्वनिरूपितविषयताश्रयत्वरूपत्वात् । नित्यविभूतेश्च ज्ञेयाविशेषितरूपेण भानविरहः, स्वप्रकाशत्वेनैव भानेन स्वात्मकज्ञेयविशेषिततयैव भानात् इत्युक्तम् ।

तन्न—जीवेश्वरनित्यविभूतीनां स्वात्मकज्ञातृज्ञेयविशेषितरूपेण भानस्य कर्मकर्तृत्वविरोधेन दुर्घटत्वात् । ब्रह्मातिरिक्तायाश्च विभूतेः नित्यत्वं कथं संगच्छेत । 'अतोऽन्यदार्तम्' 'एकमेवाद्वितीयम्' इत्यादिश्रुतिविरोधात् । न च—'अतोऽन्यदार्तम्' इति श्रुतेः ब्रह्मभिन्नो जीवो दुःखीत्यर्थकत्वेन विरोधो न भवति । 'समानमितरच्छयेनेन' इतिन्यायेन अन्यशब्दस्य तद्भिन्नतत्सजातीयपरत्वेन ब्रह्मभिन्नतत्सजातीयचेतनजीवपरत्वावश्यकतया आर्तशब्दस्यापि चैत्र आर्तः इत्यादौ दुःखिनि प्रयोगदर्शनेन विभूतेर्ब्रह्मभिन्नाया अपि नित्यत्वमुपपन्नमिति—वाच्यम् । अन्यशब्दस्य समभिव्याहृतेतरसामान्यवाचकस्य जीवमात्रविषयतया संकोचे नियामकाभावात् ब्रह्मभिन्नघटादौ दुःखित्वबाधात् आर्तशब्दस्य ध्वंसप्रतियोग्यर्थकत्वात् 'यस्योभयं हविरार्तिमाच्छेत्' इत्यादौ ध्वंसप्रतियोगित्वे आर्तिशब्दप्रयोगदर्शनात् अन्यशब्दस्य लाघवेन तत्प्रतियोगिकभेदवदर्थकत्वात् ब्रह्मभिन्नं नाशप्रतियोगीत्यर्थकताया एव निरुक्तश्रुतेरुचितत्वात् । न च 'समानमितरच्छयेनेन' इत्यधिकरणविरोधः । सति बाधके तत्परत्वेऽपि प्रकृते तदयोगात् ।

एवं-यथा जातेर्व्यक्तिनिरूप्यत्वेऽपि गोत्वप्रकारेणाश्वावगाहिभ्रमे व्यभिचारेण जातिप्रत्यक्षत्वस्य न व्यक्तिविषयकत्वव्याप्यता किन्तु भ्रमान्यजातिप्रत्यक्षत्वस्यैव, तथा ज्ञानस्य ज्ञेयादिनिरूप्यत्वेऽपि ज्ञानत्वविशिष्टप्रकाशत्वमेव विषयप्रकाशत्वव्याप्यं न ज्ञानत्वोपलक्षितप्रकाशत्वम्, उदाहृतविवरणवाक्यमपि ज्ञानत्वविशिष्टस्य ज्ञेयादिनिरूप्यतापरमिति न दोषः ।

ननु अश्वादौ गवादेस्तादात्म्येन भ्रमस्य भवन्मतसिद्धतया गोव्यक्त्यविशेषितगोत्वप्रकारकभ्रमासिद्ध्या दृष्टान्तासिद्धिः । न च गोनिष्ठविशेष्यतानिरूपितप्रकारत्वानवच्छिन्नाश्वनिष्ठविशेष्यतानिरूपितगोत्वनिष्ठप्रकारताशालिज्ञानं

ज्ञायतामितीच्छायां नोक्ततादात्म्यारोपसंभव इति वाच्यम्। तद्दशायामपि अवच्छेद्यावच्छेदकभावानापन्नगोत्वनिष्ठप्रकारताद्वयनिरूपकस्य तादात्म्यारोपस्य संभवात्। न च गोतादात्म्याविषयकज्ञानं जायतामितीच्छायां न तत्संभव इति वाच्यम्। तथा सति तुल्ययुक्त्या प्रातिभासिकाविषयकज्ञानं जायतामितीच्छादशायां जायमानभ्रमे प्रातिभासिकभानासंभवेनान्यथाख्यातिस्वीकारापत्तिरिति चेत्

न—सर्वत्र धर्माध्यासे धर्म्यध्यासपूर्वकत्वमिति न नियमः। लोहितः स्फटिकः इत्यादौ व्यभिचारात्। संनिकृष्टे अन्यथाख्यातेः परिभाषाकारमते स्वीकारेण गोतादात्म्यारोपं विनाऽप्यश्वादौ गोत्वारोपः संभवत्येव। अत एव सिद्धान्ते अन्तःकरणनिष्ठकर्तृत्वादेरात्मन्यारोपः स्वीकृतः। न चान्यथाख्यात्यापत्तिः। इदं रजतं साक्षात्करोमीति प्रतीतिविषयताया आश्रयान्तरानुपपत्त्या अनिर्वचनीयरजतसिद्धेः मूले स्पष्टमुपपादितत्वात्। अन्यथाख्यातिस्वीकारे संनिकर्षाभावेन साक्षात्करोमीति प्रत्ययानुपपत्तेः। न च तर्हि प्रकृते अनिर्वचनीयख्यातिभङ्ग इति वाच्यम्। गोत्वतादात्म्योत्पत्त्योपपत्तेः।

न च यन्निरूपितविषयिता विषयविषयकत्वाभावव्याप्या तस्य घटादिवत् ज्ञानत्वासंभवेन निर्विकल्पकज्ञाननिष्ठायाः शुद्धविषयितायाः स्वविषयविषयकत्वाभावव्याप्यत्वात् शुद्धस्य ज्ञानत्वासंभव इति वाच्यम्। अनुकूलतर्कविरहेण स्वविषयविषयकत्वाभावव्याप्यस्वनिरूपितविषयिताकत्वे ज्ञानत्वाभावव्याप्तेर्ग्रहासंभवात्।

---

टि. **गोत्वतादात्म्योत्पत्त्योपपत्तेरिति**। प्रकृते अनिर्वचनीयख्यात्युपपत्तेरित्यर्थः।

यत्तु 'अस्तु वा धर्मितादात्म्यारोपं विनैव धर्मसंसर्गारोपः, तथापि व्याप्यतावच्छेदके भ्रमान्यत्वनिवेशनमफलम्। तादृशभ्रमदशायामश्वे गोत्वसंसर्गोत्पत्त्या अश्वस्यैव गोत्वाश्रयव्यक्तित्वात् जातिप्रत्यक्षत्वस्य तदाश्रयव्यक्तिप्रत्यक्षत्वव्याप्यत्वाविरोधात्' इतिन्यायभास्करोक्तम्, तन्न—स्वसमानसत्ताकजात्याश्रयस्यैवात्र व्यक्तिपदार्थत्वेन निरुक्तदोषवारणाय भ्रमभिन्नत्वनिवेशस्यावश्यकत्वात् इति बोध्यम्।

किञ्च, ज्ञानस्य सज्ञेयत्वं न स्वाभाविकम्। तद्धि ज्ञेयजन्यत्वं वा ज्ञेयव्याप्यत्वं वा। नाद्यः। परोक्षज्ञाने ईश्वरज्ञाने चाभावात्। परमते ईश्वरज्ञानस्याजन्यत्वात्। अस्मन्मतेऽपि इन्द्रियसंनिकर्षस्येव विषयस्यापि तत्राहेतुत्वात्। न द्वितीयः। यदा यस्यार्थस्य ज्ञानं तदा सोऽर्थ इति कालिकव्याप्तौ परोक्षज्ञाने ईश्वरज्ञाने च व्यभिचारात्, ज्ञानार्थयोर्दैशिकव्याप्तेश्चासंभवात्, ज्ञातरि ज्ञानवत्यर्थाभावात्।

ननु यत्र ज्ञानत्वं तत्र विषयितासंबन्धावच्छिन्नप्रतियोगिताकप्रमेयाभाववद्भेदः इति व्याप्तेः स्वीकारात् शुद्धस्य निर्विषयतया विषयितासंबन्धावच्छिन्नप्रमेयाभाववत्त्वेन ज्ञानत्वासंभवः। विशिष्टाद्वैतसिद्धान्ते जीवब्रह्मणोः नित्यविभूतेश्च ज्ञानत्वेऽपि तत्र विषयितासंबन्धेन स्वात्मकप्रमेयवत्त्वेनोक्तसंबन्धावच्छिन्नप्रमेयाभावविरहेणोक्तव्याप्तौ व्यभिचाराभावात्। असद्विषयकविकल्पाख्यवृत्तेश्च ज्ञानत्वाभावेन तादृशवृत्तौ विषयितासंबन्धावच्छिन्नप्रमेयाभाववत्त्वेऽपि व्यभिचाराभावादिति चेत्

न—विकल्पाख्यवृत्तेरन्तःकरणपरिणामत्वेनातीतादिवृत्तिवत् ज्ञानत्वपक्षे तत्र व्यभिचारात्, जीवब्रह्मनित्यविभूतिषु व्यभिचाराच्च। स्वविषयकत्वे कर्मकर्तृत्वविरोधात् यत्र ज्ञानत्वं तत्र विषयितासंबन्धेन स्वातिरिक्तप्रमेयाभाववद्भेदः इति व्याप्तेर्लोकसिद्धत्वात् जीवब्रह्मनित्यविभूतीनामपि भवन्मते ज्ञानत्वासिद्धेश्च। तत्र व्याप्तावप्रयोजकत्वं चेत् समानमत्रापि।

एवं ज्ञानस्य सज्ञातृकत्वमपि न स्वाभाविकम्। तद्धि न ज्ञातृजन्यत्वम्, भवदभिमतनित्यविभूतौ नैयायिकमते ईश्वरज्ञाने च नित्ये व्यभिचारात्। सिद्धान्तेऽपि वाचस्पतिमिश्रमते मायापरिणामात्मकवृत्तिरूपज्ञानानङ्गीकारेण चैतन्य-

---

**टि· यत्रज्ञानत्वमित्यादि**। ज्ञानत्वशब्देनात्र ज्ञानत्वजातिविवक्षणे तस्याः वृत्तिविशिष्टचैतन्येषु अस्माभिरङ्गीकारेण तेषु विषयितासंबन्धावच्छिन्नप्रमेयाभाववद्भेदस्यापि सत्त्वेनोक्तव्याप्तेः क्षत्यभावात् उक्तविशिष्टभिन्ने शुद्धे ज्ञानत्वजातेरभावेन व्यभिचारविरहात्। यदि ज्ञानत्वजात्युपलक्षितचिद्रूपत्वं विवक्षितम् तदा तस्य त्वया अनङ्गीकारेण तथा व्याप्तिः कल्पयितुमशक्येति **श्रीहरिहरशास्त्रिणः**।

स्यैवेश्वरज्ञानरूपत्वात् तत्र व्यभिचाराच्च। न च तन्मते विषयावच्छिन्नचिद्रूपेण ज्ञातृजन्यत्वमस्त्येवेति वाच्यम्। अविद्याद्यनादिविषयस्यानादित्वेन तयोर्जन्यजनकभावविरहात् तत्रैव ज्ञाने व्यभिचारात्। जन्यज्ञानत्वस्य ज्ञातृजन्यत्वव्याप्यत्वाङ्गीकारे तु नास्माकं काचित् क्षतिः। शुद्धस्याजन्यत्वात्।

यत्र ज्ञानत्वं तत्र ज्ञातृसमवेतत्वमिति व्याप्तौ च अप्रयोजकता। ज्ञानस्य ज्ञात्रजन्यत्ववत् ज्ञात्रसमवेतत्वस्यापि संभवात्। कदाचित ज्ञातृसंबन्धेनैवोक्तव्याप्तेरुपपत्तया सर्वदा ज्ञातृसंबन्धासाधकत्वात्। ज्ञानस्य गुणत्वक्रियात्वयोरनभ्युपगमेन द्रव्याश्रितत्वानुमानायोगात्। अनादेश्च क्रियात्वासंभवात्। नचैवं अस्ति ब्रह्मेत्यत्र कर्तरि लकारो न स्यात् सत्ताया अनादित्वेन क्रियात्वासंभवादिति वाच्यम्। मणिकारमते चैत्रोजानातीत्यादौ ज्ञानानुकूलकृतेरप्रसिद्ध्या ज्ञानकर्तृत्वादेरसंभवात् ज्ञानाश्रयत्वादिलक्षणायां गौरवाच्च अवच्छेदकतासंबन्धेन ज्ञानप्रकारकशाब्दधीस्वीकारात् आख्यातस्य कर्तृत्वार्थकत्वासंभवात् साधुत्वार्थकत्ववत् प्रकृते ब्रह्मसत्ताया अनादित्वेन तत्कर्तृत्वबोधासंभवात् घटोऽस्तीत्यादावपि क्रियाऽभावेन कारकान्वयबोधासंभवादाश्रयत्वस्यैवाख्याततो बोधनाच्च ब्रह्मास्तिपदाभ्यामखण्डब्रह्मबोधस्वीकारेण आख्यातस्य साधुत्वमात्रार्थत्वात्।

ननु यत्र ज्ञानत्वं तत्राधेयतया प्रमेयाभाववच्छेदः इति व्याप्तौ न दोषः। जीवस्य नित्यविभूतेश्च ज्ञानस्वरूपत्वेऽपि तत्राधेयतया ईश्वरस्य सत्त्वात्, ईश्वरस्य तथात्वेऽपि 'यः पृथिव्यां तिष्ठन्' इत्यादिश्रुत्युक्तरीत्या सर्वत्रापि सत्त्वेन तेषु व्यभिचारविरहात्। ज्ञानस्य च धात्वर्थत्वरूपक्रियात्वसत्त्वेन किञ्चिदाश्रितत्वमावश्यकम्। अस्तिब्रह्मेत्यत्र आख्यातस्य साधुत्वमात्रार्थकत्वमप्ययुक्तम्। सत्ताया अनादित्वेन तदनुकूलकृतेरप्रसिद्धावपि तदाश्रयत्वस्य प्रसिद्ध्या तद्बोधे बाधकविरहात् इति चेत्

न—कुण्डेबदरमितिवत् बदरेकुण्डमिति व्यवहारापत्तेः आधेयताया-

वृत्त्यनियामकत्वेनाभावप्रतियोगितानवच्छेदकत्वात् यत्र ज्ञानत्वं तत्र आधेयतासंबन्धेन प्रमेयाभाववद्भेदः इति व्याप्तेरसिद्धेः ।

किञ्च, वृत्तिमतां परिच्छिन्नत्वदर्शनेन ब्रह्मणो वृत्तिमत्त्वे परिच्छिन्नत्वेन मिथ्यात्वापत्तेः 'स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति' इति निराधारत्वबोधकश्रुतिविरोधात् 'यः पृथिव्यां तिष्ठन्' इत्यस्यानुप्रवेशार्थकतयोपपत्तेः अक्ष्यादिस्थाननिर्देशस्योपासनार्थत्वेन काल्पनिकसंबन्धेनैवोपपत्तेश्च ब्रह्मणो वृत्तिमत्वाभावात् तत्र व्यभिचारेणोक्तव्याप्तेरसिद्धिः ।

अस्तिब्रह्मेत्यादौ सत्ताया धात्वर्थत्वरूपक्रियात्वेऽपि शुद्धसद्रूपत्वेन तदाश्रयत्वस्याप्रसिद्धेः शुद्धस्य सप्रकारकज्ञानाविषयत्वाच्च तत्र लकारस्य साधुत्वार्थकताया अवश्यवक्तव्यत्वात् ।

न च सत्ताया बाध्यत्वाभावरूपतया ब्रह्मणः भावधर्मानाश्रयत्वेऽपि अभावाश्रयत्वस्योक्तत्वेन निरुक्तसत्ताश्रयत्वप्रकारकबोधो भवत्येवेति वाच्यम् । प्रथममिथ्यात्वविचारे ब्रह्मणो निर्धर्मकत्वेनाभावाधिकरणत्वरूपधर्माश्रयत्वासंभवस्याप्युपपादितत्वात् । किञ्च सत्ताश्रयत्वप्रकारकबोधस्वीकारे निर्धर्मितावच्छेदकशाब्दबोधाङ्गीकारापत्तिः । न च निष्प्रकारकशाब्दबोधस्वीकर्तॄणां भवतां निर्धर्मितावच्छेदकशाब्दबोधाङ्गीकारे न बाधकमिति वाच्यम् । निर्धर्मितावच्छेदकशाब्दबोधस्य निर्विकल्पकत्वस्वीकारेण सप्रकारकत्वानङ्गीकारात् ।

---

**टि· अनङ्गीकारादिति** । बाध्यत्वाभावः सत्तेति पक्षे असत्त्वापादकाज्ञानविरोधिचित् सत्ता इति पक्षे च तादृशसत्तारूपधात्वर्थविशेष्यकः ब्रह्माश्रिता सत्ता इत्याकारको बोधः संभवति । तत्र पक्षे लकारस्याश्रयत्वार्थकत्वमेव, न साधुत्वार्थकता । परन्तु शुद्धचिदेव सत्तेति प्राचीनसिद्धान्ते शुद्धब्रह्मविशेष्यकस्य सत्ताविशेष्यकस्य वा बोधस्य निर्धर्मितावच्छेदकत्वेनासंभवात् सत्यंज्ञानमितिवाक्यवत् ब्रह्मास्तीतिवाक्यमखण्डार्थं लकारस्तु साधुत्वार्थः इति ब्रह्मानन्दीये स्पष्टं निरूपितम् । न्यायभास्करकारैस्तु तदभिमतार्थो न दूषित इति सुधीभिर्विभावनीयम् ।

अस्वप्रकाशत्वं वा जडत्वम् । तच्च पूर्वमेवोपपादितमिति शिवम् ॥

इति महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिविरचिते
ब्रह्मानन्दीयभावप्रकाशे जडत्वविचारः समाप्तः ॥

---

टि. अनात्मत्वं जडत्वमिति पक्षस्य न्यायभास्करे विमृष्टत्वाभावात् अत्र ग्रन्थकृता उपक्रमोक्तोऽपि अनात्मत्वंजडत्वमिति पक्षो न निरूपितः इति च बोध्यम् ॥

इति जडत्वविचारः समाप्तः ॥

---

## अथ परिच्छिन्नत्वविचारः

परिच्छिन्नत्वमपि हेतुः। तच्च त्रिविधम्। देशपरिच्छिन्नत्वं कालपरिच्छिन्नत्वं वस्तुपरिच्छिन्नत्वञ्चेति। तत्रात्यन्ताभावप्रतियोगित्वं देशपरिच्छिन्नत्वम्। ध्वंसप्रतियोगित्वं कालपरिच्छिन्नत्वम्। अन्योन्याभावप्रतियोगित्वं वस्तुपरिच्छिन्नत्वम्।

कथमुक्तार्थलाभ इति चेत्। इत्थम्—देशस्याधारविधयापरिच्छेदकत्वं अन्ययोगव्यवच्छेदकतया विशेषणत्वं परिच्छेद्यघटादेः देशान्तरवृत्त्यभावप्रतियोगित्वपर्यवसितम्, एतत्कालस्य ध्वंसानधिकरणतया विशेषणत्वं कालान्तरवृत्तिध्वंसप्रतियोगित्वपर्यवसितमिति, परिच्छिन्नत्वशब्दादेवोक्तार्थलाभः। तत्रापि देशान्तरादिघटितस्य हेतुत्वे सर्वदृश्याननुगतत्वात् अत्यन्ताभावप्रतियोगित्वादिभिन्नांशवैयर्थ्याच्च उक्तप्रतियोगित्वादेरेव हेतुत्वम्।

एतेन—'परिच्छिन्नत्वमपि न हेतुः। तद्धि व्यावर्तितत्वम्, आरुण्यादिगुणेन क्रयसाधनगवादिकं परिच्छिन्नमिति व्यवहारात्। व्यावर्तितत्वञ्च इतरभेदविधेयकानुमितिविषयत्वम्। तस्य च न हेतुतासंभवः, ब्रह्मतुच्छयोर्व्यभिचारात् विषयत्वमात्रस्य हेतुतासंभवेनेतरांशवैयर्थ्याच्च' इति निरस्तम्।

परिच्छिन्नत्वस्यात्यन्ताभावादिप्रतियोगित्वरूपतया व्याख्यातत्वात्।

ननु समवायसंबन्धावच्छिन्नाभावप्रतियोगिताया ब्रह्मणि सत्त्वेन व्यभिचारः। संयोगसंबन्धावच्छिन्नाभावप्रतियोगित्वविवक्षणेऽपि ब्रह्मणि अमूर्तनिष्ठसंयोगसंबन्धावच्छिन्नाभावप्रतियोगिनि व्यभिचारः। न च तत्र व्यभिचारवारणाय मूर्तनिष्ठात्यन्ताभावीयसंयोगसंबन्धावच्छिन्नप्रतियोगिताया हेतुत्वमङ्गीक्रियते इति वाच्यम्। आकाशकालप्रकृत्यादावसिद्धेः। सर्वमूर्तेष्वाकाशमिति प्रतीतेः वृत्तिनियामकसंयोगेनाप्याकाशस्यात्यन्ताभावविरहात्। ध्वंसप्रतियोगित्वरूपद्वितीयहेतोश्च प्रकृतिकालादावसिद्धिः। 'गौरनाद्यन्तवती नित्या सततवि-

क्रिया' इत्यादिभिः प्रकृत्यादेः नित्यत्वावगमात्। भेदप्रतियोगित्वरूपतृतीय-हेतोश्च ब्रह्मणि व्यभिचारः। तस्य जडनिष्ठभेदप्रतियोगित्वात् अन्यथा जडत्वापत्तेः इति चेत्

न—अत्यन्ताभावान्योन्याभावयोः प्रतियोगिसमसत्ताकत्वविशेषणेनादोषात्। मिथ्यात्वघटकाभावस्य पारमार्थिकतापक्षे प्रतियोग्यन्यूनसत्ताकत्वं विशेषणम्। तेन शुक्तिरूप्याभावस्य व्यावहारिकत्वेऽपि न साधनवैकल्यावकाशः। ब्रह्मणि च न व्यभिचारः। अभावस्य तन्न्यूनसत्ताकत्वात्। नापि प्रकृत्यादौ द्वितीयहेतोरसिद्धिः। प्रकृतिशब्दिताविद्यायाः अविद्याचित्संबन्धरूपकालस्य च तत्त्वज्ञाननाश्यत्वात्। उदाहृतवचनस्याजरामरन्यायेन चिरकालस्थायित्वरूप-नित्यत्वपरतयाऽप्युपपत्तेः। अन्यथा अतोऽन्यदार्तमितिश्रुतिविरोधापत्तेः।

एतेन—अविद्याकाशादेर्व्यावहारिकस्य पारमार्थिकाभावपक्षे स्वसमान-सत्ताकाभावप्रतियोगित्वाभावेनासिद्धिः, शुक्तिरूप्यादेर्व्यावहारिकाभावप्रतियो-गित्वेन दृष्टान्ते साधनवैकल्यञ्च। न च स्वान्यूनसत्ताकत्वविवक्षणान्न दोष इति वाच्यम्; स्वत्वस्याननुगतत्वेन भागासिद्धेः इति—निरस्तम्।

प्राचीनमते स्वत्वस्यानुगतत्वात्। अननुगतत्वमतेपि लाघवात् आत्मा-वृत्तित्वविशिष्टप्रतियोगितासंबन्धेनाभावस्य हेतुत्वस्वीकारेणादोषाच्च।

---

॥ अथ परिच्छिन्नत्वविचारः ॥

**टि. समसत्ताकेति**। स्वसमसत्ताकत्वं स्वानाशकज्ञानानाश्यत्वं ब्रह्मप्रमाति-रिक्तबाध्यत्वतदभाववत्कादाचित्कत्वान्यतररूपेण स्वसजातीयत्वं वा बोध्यम्। तेन सत्तात्रै-विध्यस्य मिथ्यात्वसिद्धेः प्रागसिद्धावपि न क्षतिरिति बोध्यम्।

**अननुगतत्वमतेऽपीति**। प्रतियोगित्वाधेयत्वोभयसंबन्धेन अभावविशिष्टत्वं हेतुः, आधेयता च स्वन्यूनसत्ताकत्वसंबन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्त्वसंबन्धेन इत्यपि बोध्यम्।

एवं स्वान्यूनसत्ताकाभावप्रतियोगित्वमित्यस्य पारमार्थिकनिष्ठं यत् व्यावहारिका-भावप्रतियोगित्वं तदन्यत्वे सति पारमार्थिकनिष्ठं यत् प्रातिभासिकाभावप्रतियोगित्वं तद्भिन्नप्रतियोगित्वे तात्पर्यान्न स्वत्वाननुगमनिबन्धनभागासिद्धिः। न चात्र व्यावहारिक-

ननु घटो नास्ति घटत्वेन प्रमेयं नास्ति इतिप्रतीतिसिद्धाभावतत्प्रतियोगितयोरैक्येन प्रतियोगितायाः प्रमेयसामान्यान्तर्गतात्मनिष्ठत्वेन घटादिनिष्ठप्रतियोगिताया उक्तरीत्या आत्मावृत्तित्वासंभवेनासिद्धिः दृष्टान्ते साधनवैकल्यञ्च इति चेत्

न—घटत्वावच्छिन्नायाः घटमात्रनिष्ठायाः प्रतियोगिताया एव घटत्वेन प्रमेयं नास्तीति प्रतीतौ प्रमेयत्वसामानाधिकरण्येन भानस्य **श्रीगदाधरभट्टाचार्यैः** प्रतिपादितत्वेन निरुक्तप्रतियोगिताया आत्मनिष्ठत्वाभावेनोक्तदोषविरहात् ।

ननु घटो नास्तीति बुद्धौ प्रतियोगिन एवाभावांशे प्रकारतया भानात् मण्यभावादेः कारणत्वे प्रतियोगिनोऽवच्छेदकत्वाच्चाभावनिष्ठस्य प्रतियोगिनिरूपितानुयोगिताख्यसंबन्धस्यावश्यमङ्गीकार्यत्वेऽपि प्रतियोगिनि अभावविशिष्टबुद्ध्यात्मकस्य अभावीयो घटः इत्याकारकस्यानुभवविरुद्धत्वात् प्रतियोगिव्यवहारस्यानुयोगितानिरूपकतयैवोपपत्तेश्च अभावीयप्रतियोगिताख्यस्वरूपसंबन्धे मानाभावात् प्रतियोगितासंबन्धेनाभावादेर्हेतुत्वं न युक्तमिति चेत्

न—अनुयोगितानिरूपकत्वात्मकप्रतियोगितासंबन्धेनाभावस्य हेतुत्वसंभवात् । अभावस्य घटः इति प्रतीतिविरहेण निरुक्तप्रतियोगित्वस्य संबन्धताऽनङ्गीकारेऽपि अभावीयनिरुक्तप्रतियोगित्वस्यैव हेतुत्वसंभवात् । अनुयोगित्वं वा प्रतियोगितानिरूपकत्वरूपं प्रतियोगित्वं वा अनुयोगितानिरूपकत्वरूपमित्यत्र विनिगमनाविरहादुभयोरपि सिद्धेः । **श्रीगदाधरभट्टाचार्यैः व्युत्पत्तिवादे** लिडर्थस्य वर्तमानध्वंसस्याख्यातार्थकृतौ प्रतियोगितासंबन्धेनान्वयनिरूपणेन

---

त्वप्रातिभासिकत्वादीनां सत्यत्ववादिमतेऽसिद्धतया तद्घटितहेतोरुभयवाद्यसिद्धत्वमिति न्यायभास्करोक्तं शङ्कनीयम् । ब्रह्मप्रमातिरिक्ताबाध्यत्वरूपव्यावहारिकत्वस्य ब्रह्मप्रमातिरिक्तबाध्यत्वरूपप्रातिभासिकत्वस्य च प्रवेशेन हेतोरुभयवाद्यसिद्धताविरहात् । स्पष्टाचेयं रीतिः **सिद्धान्तवैजयन्त्यामिति** विभावनीयम् ।

**निरूपकत्वात्मकेति** । अनुयोगितातिरिक्तस्य निरूपकत्वस्य वादि-

कण्ठत एव प्रतियोगितायाः संबन्धताऽभिधानात् अभावस्य घटः इति प्रयोगवारणस्य शाखाया वृक्षः इति प्रयोगवारणसमानयोगक्षेमत्वात् प्रतियोगितासंबन्धेनाभावस्य हेतुत्वसंभवाच्च ।

एवं ध्वंसं प्रति प्रतियोगिनः कारणत्वात् तादृशकारणतानिरूपितकार्यतावच्छेदकसंबन्धतया प्रतियोगित्वं सिद्ध्यति । न च अत्यन्ताभेदे तादात्म्यानङ्गीकर्तॄणां भवतां प्रतियोगितासंबन्धेन ध्वंसं प्रति तादात्म्येन प्रतियोगिनो हेतुत्वस्यैवासंभव इति वाच्यम् । अत्यन्ताभेदे तादात्म्यासंभवेऽपि दृश्यत्वोपहितघटत्वोपहितयोरिव प्रतियोगित्वोपहिततद्व्यक्तित्वोपहितयोरपि तादात्म्यसंभवेन निरुक्तहेतुताया अक्षतेरिति ।

एवं घटादयः स्वानुगतप्रतिभासे वस्तुनि कल्पिताः विभक्तत्वात् स्वानुगतप्रतिभासे रज्ज्वा इदमंशे कल्पितसर्पमालादिवत् इत्यनुमानात् मिथ्यात्वसिद्धिः । स्वानुगतप्रतिभासे कल्पितत्वञ्च स्वनिष्ठविशेष्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नप्रकारताव्यापकस्वनिवर्तकधीविषयताकत्वं तादृशप्रकारताव्यापकस्वात्यन्ताभावकत्वं वा । स्वानुगतप्रतिभासेकल्पितपदेन कथमुक्तार्थलाभ इति चेत् । इत्थम्——स्वानुगतप्रतिभासे-स्वतादात्म्येन स्वरूपतो भानयोग्ये स्वतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारतावतीति यावत् । सप्तम्या व्यापकत्वमर्थः । व्यापकतानिरूपकत्वञ्च तादात्म्येन । तथाच यद्यदुक्तप्रकारताविशिष्टं तत्र तत्र कल्पिता इत्यर्थः । कल्पितत्वं ज्ञाननिवर्त्यत्वं स्वाभाववति

---

संमतत्वात् तस्यैव प्रतियोगित्वपदेन व्यवहारादिति भावः ।

**प्रतियोगित्वमिति** । अत्र आत्मावृत्तित्वविशिष्टसंबन्धेनाभावादेर्हेतुत्वमित्येतावतैव निर्वाहे तत्र संबन्धतावच्छेदके प्रतियोगितात्वनिवेशवैफल्यमिति न्यायभास्कराभिधानमसांप्रदायिकम् । न हि द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादिति प्रयोगे स्वरूपसमवायोभयघटितसामानाधिकरण्येन गुणकर्मान्यत्वविशिष्टस्य समवायेन हेतुत्वेनैव निर्वाहे सत्तात्वेन हेतुनिवेशो विफल इत्युद्भावयन्ति कथकाः इति **श्रीपरीक्षिन्महाराजाः** ।

ज्ञेयत्वं वा। तथाच उक्तप्रकारताव्यापकस्वनिवर्तकधीविषयताकत्वं उक्तप्रकारताव्यापकस्वात्यन्ताभावकत्वं वा पर्यवस्यति। उक्तप्रकारतासामानाधिकरण्यमात्रस्य विषयतादौ निवेशे पटादेः स्वतादात्म्यभ्रमविषयघटत्वादौ कल्पितत्वमादाय परैरर्थान्तरं वाच्यम्, अतो व्यापकत्वमुक्तम्। स्वमते हि पटादेरुक्तभ्रमे नारोपितत्वं किन्तु तत्तादात्म्यस्येति तन्निवर्तकधीविषयत्वमेव घटत्वादेः न तु पटादिनिवर्तकधीविषयत्वमिति स्वानभिमतं तत्। परानभिमतमपि, परस्य तार्किकादेरन्यथाख्यातिस्वीकारेण पटादिनिवर्तकधीविषयत्वस्य घटत्वादिजातावनङ्गीकारात्। अतः उभयवाद्यनभिमतसिद्ध्याऽर्थान्तरं स्यात्। व्यापकत्वनिवेशे तु तादृशप्रकारतायाः सद्रूपेऽपि सत्त्वात् तस्य स्वनिवर्तकधीविषयत्वसिद्ध्या मदिष्टसिद्धिः। न च स्वमते बाधः घटत्वादेः व्यावहारिकपटादिनिवर्तकबुद्ध्यविषयत्वादिति वाच्यम्। जातिमात्रस्य सद्रूपताया मूल एव वक्ष्यमाणत्वात्। तादृशप्रकारतावति द्रव्यगुणादौ स्वनिवर्तकधीविषयत्वाभावादनवच्छिन्नेति प्रकारताविशेषणमुक्तम्। प्रतियोगिताविषयतादेरनवच्छिन्नप्रकारतास्वीकारे तत्र स्वतादात्म्यभ्रमीयतादात्म्यविषयतानिरूपितानवच्छिन्नप्रकारतावति स्वनिवर्तकधीविषयत्वाभावेन व्यभिचारात् निरूपितान्तस्थले स्वतादात्म्यसमानाधिकरणेति वाच्यम्। तथाच प्रतियोगी घटः इत्यत्र प्रतियोगितादेः विशेषणतासंबन्धेनैव स्वनिष्ठत्वेन स्वतादात्म्याभावान्न व्यभिचारः। एवञ्च सामानाधिकरण्यमपि व्यापकत्वस्थाने वक्तुं शक्यमिति। विभक्तत्वञ्च स्वसमानसत्ताकभेदप्रतियोगित्वमिति न ब्रह्मणि व्यभिचारः।

ननु खण्डो गौरित्यनुगतप्रतीतौ गवादिषु तादात्म्येन प्रकारीभूते गोत्वादौ गवादिनिवर्तकधीविषयत्वाभावेन प्रथमसाध्ये बाधः। न च—खण्डो गौरित्यादौ प्रकारीभूतं गोत्वं सद्रूपमेव, पराभिमता यावत्यो व्यक्तयः तावदन्यतमोपरक्तसद्रूपस्यैव गौरित्यादिव्यवहारकारणत्वात्, घट इति व्यवहारेऽपि तादृशयावद्व्यक्त्यन्यतमोपरक्तसद्रूपस्यैव कारणत्वात्, तथा च न बाधः इति —वाच्यम्। तावदन्यतमत्वघटकभेदानां विशेषणविशेष्यभावे विनिगमना-

विरहेण तावदन्यतमोपरक्तसद्रूपस्य गौरित्यादिव्यवहारकारणताया आनन्त्यप्रसङ्गात् गौरवात् दुर्ज्ञेयत्वाच्चोक्तान्यतमत्वघटितस्य तथात्वासंभवेनातिरिक्तगोत्वादेः कल्पनस्यैव युक्तत्वात् तावदन्यतमोपरक्तप्रमेयत्ववस्तुत्ववाच्यत्वादीनां तथात्वकल्पनमादाय विनिगमनाविरहाच्च इति चेत् ।

न—उक्तान्यतमत्वस्याखण्डस्य स्वरूपत एव निवेशात् न कारणतानन्त्यं न वा गौरवं नापि दुर्ज्ञेयता । तृणारणिमणिस्थले कतिपयव्यक्तिषु प्रथमं तावदन्यतमत्वेन वह्निकारणत्वग्रहानन्तरं व्यक्त्यन्तरे कार्यान्वयव्यतिरेकग्रहे तद्घटितान्यतमत्वेन व्यक्त्यन्तरे इव उपस्थितकतिपयव्यक्त्युपहितसद्रूपे कारणत्वग्रहानन्तरमुपस्थितव्यक्त्यन्तरोपहितसद्रूपे कारणत्वग्रहसंभवात् । प्रमेयत्वादीनां सखण्डत्वादखण्डजातिरूपत्वासंभवात् । तत्राखण्डत्वस्य तान्त्रिकैरनभ्युपगमात् । स्वयमभ्युपगमे सद्रूपाविशेषाच्च ।

न च तादृशान्यतमत्वस्यैव जातिरूपतौचित्यात् तत्र गवादीनां कल्पितत्वाभावेन बाधो दुर्वार इति वाच्यम् । तादृशान्यतमत्वविशिष्टसद्रूपस्य कल्पनाधिष्ठानत्वेन तद्घटकान्यतमत्वे कल्पितत्वसत्त्वेन बाधाभावात् ।

किञ्च तावद्व्यक्तीनां यावन्ति सद्रूपेण सह तादात्म्यानि तावदन्यतमत्वविशिष्टसंबन्धेन सद्रूपविशिष्टं गौरित्यादिव्यवहारविषयः । तेन संबन्धेन सद्रूपं तन्निष्ठकारणतावच्छेदकम् । तथाच खण्डो गौरित्यादिप्रतीतौ सत एव प्रकारत्वात्तत्र गवादीनां कल्पितत्वेन न बाधः । कारणताबाहुल्यगौरवदुर्ज्ञेयत्वादिकं पूर्वोक्तरीत्या निरसनीयम् ।

---

**टि· सखण्डत्वादिति ।** प्रमेयत्वमपि प्रमेयोपहितसद्रूपमेव । सत एव भावप्रत्ययार्थत्वात् । तथाच प्रमेयत्वादिकमादाय विनिगमनाविरहस्यावसरो नास्तीति **श्रीहरिहरशास्त्रिणः ।**

**बाधाभावादिति । आनन्दबोधाचार्यो**क्तनिरुक्तानुमाने साध्यकोटौ स्वाभाववतिज्ञेयत्वरूपमेव कल्पितत्वं प्रविष्टम्, न ज्ञाननिवर्त्यत्वम् । अत एव तैः 'रज्ज्वा इदमंशे विभज्यते' इत्युक्तम् । न चेदमंशज्ञानेन सर्पादिकं निवर्तते । स्पष्टञ्चेदं ब्रह्मा-

यत्तु—एतेन अनन्ता हि मूलाज्ञानीयाः कार्यजननानुकूलाः विक्षेपनामकशक्तयः निर्विषयकाः। आवरणशक्तेरेव सविषयकत्वात्। तथाच घटव्यक्तिभिरवच्छिन्ना जलाहरणादिकार्यानुकूला तादृशशक्तिः घटत्वम्। एवं पटत्वादिकमपि वाच्यमिति प्रत्युक्तमित्युक्तम्।

तदसत्। उक्तशक्तीनां कार्यानुकूलतया क्लृप्तत्वेन अतिरिक्तनित्यगोत्वकल्पनापेक्षया लाघवेन तासां जातिरूपत्वौचित्यात्।

एवं घटादिकं सद्रूपे कल्पितं तदनुविद्धत्वेन प्रतीयमानत्वात् चन्द्रानुविद्धत्वेनप्रतीयमानजलतरङ्गचन्द्रवत् इति **ब्रह्मसिद्धिकारोक्ताद**नुमानात् मिथ्यात्वं सिद्ध्यति। तत्र सद्रूपेकल्पितत्वं सद्रूपज्ञाननिवर्त्यत्वम्। तदनुविद्धत्वेन प्रतीयमानत्वं सत्तादात्म्येन प्रतीयमानत्वम्। तथाच घटादीनां सर्वेषां सन् घट इति सत्तादात्म्येन प्रतीयमानत्वात् घटादिकं सर्वं सद्रूपज्ञाननिवर्त्यमिति पर्यवसितम्। तरङ्गस्थचन्द्रःसन्निति प्रतीत्या सत्तादात्म्यस्य सद्रूपज्ञाननिवर्त्यत्वस्य च तरङ्गचन्द्रे सत्त्वादुदाहरणसंगतिरिति।

---

**नन्दीये**। तथाच निरुक्तान्यतमत्वे स्वाभावसत्त्वेन स्वनिष्ठविशेष्यतानिरूपितनिरवच्छिन्नप्रकारताव्यापकस्वाभावकत्वरूपं साध्यं पक्षे अव्याहतमिति भावः। एतेन 'अत्र साध्यघटकीभूतं स्वनिवर्तकधीविषयत्वम्' इत्यादिना 'व्यापकतान्तनिवेशवैयर्थ्यात्' इत्यन्तेन ग्रन्थेन न्यायभास्करकाराणां दूषणमनुक्तोपालम्भनं बोध्यम्।

स्वनिष्ठविशेष्यतानिरूपितनिरवच्छिन्नप्रकारताव्यापकाभावप्रतियोगित्वरूपनिरुक्तसाध्ये प्रतियोगितायां स्वनिष्ठविशेष्यतावच्छेदकावच्छिन्नत्वतादात्म्यसंबन्धावच्छिन्नत्वयोः निवेशेन विशिष्टाभावोभयाभावसंबन्धान्तरावच्छिन्नाभाववारणं सुकरम्। स्वानधिकरणे एव स्वनिष्ठविशेष्यतानिरूपितप्रकारतासिद्ध्याप्युक्तसाध्यस्य पर्यवसानसंभवेन तदधिकरणे तदत्यन्ताभावासिद्धिरित्यर्थान्तराभिधानं तान्त्रिकसंप्रदायविरुद्धम्। एतादृशार्थान्तरकथनस्यासांप्रदायिकत्वं पूर्वमेवावेदितमिति नात्र ग्रन्थकृता विचारः कृत इति विभावनीयम्।

जातीनां सद्रूपत्वं अविद्याशक्तिविशेषरूपत्वं वेति पक्षद्वयमस्मदीयैः **कैयटादिभिश्चाचार्यै**रुक्तम्। तत्र प्रथमपक्षं निरूप्य इदानीं द्वितीयपक्षं समर्थयितुं परोक्तं दूषणमनुवदति—**यत्त्विति**।

ननु रूपादिहीनस्य ब्रह्मणः चाक्षुषादिविषयत्वं न संभवतीति चेत्

न—रूपिद्रव्यचाक्षुषे एव रूपस्य कारणता, न चाक्षुषमात्रे। रूपचाक्षुषे व्यभिचारात्। आत्मनो द्रव्यत्वस्य अस्थूलादिवाक्येन चतुर्विधपरिमाणनिषेधेनानभ्युपगमाच्च।

अस्तु वा द्रव्यत्वम्। तथाऽपि नानुपपत्तिः। अध्यस्तद्रव्यत्ववति गुणादौ रूपानपेक्षचाक्षुषत्वदर्शनेन धर्म्यन्यूनसत्ताकद्रव्यत्ववत्येव चक्षुषो रूपापेक्षणात्। प्रतिनियतेन्द्रियग्राह्येष्वेव चाक्षुषादौ रूपाद्यपेक्षणात् सर्वेन्द्रियग्राह्ये सद्रूपे रूपानपेक्षणात्। सद्रूपस्य ब्रह्मणः सत्ताजातिरूपतया द्रव्यतादात्म्यापन्नजातिनिष्ठलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रति स्वाश्रयतादात्म्यसंबन्धेन रूपस्य कारणत्वेन तेन संबन्धेन सद्रूपब्रह्मणो रूपादिमत्त्वाच्च।

ननु तथापि आसंसारमज्ञानावृतत्वेन ब्रह्मणः न चाक्षुषं संभवतीति चेत्

न—सद्भानानन्दांशानां मध्ये आनन्दांशरूपेणैव ब्रह्म मूलाज्ञानावृतम्। न सद्भानांशाभ्याम्। सद्भाने भासेते इति प्रत्ययात्। न च सद्भानांशयोरनावृतत्वे घटाकारवृत्त्यभावकालेऽपि घटस्सन् घटोभातीति व्यवहारप्रसङ्ग इति वाच्यम्। तयोर्मूलाज्ञानानावृतत्वेऽपि घटाद्यवच्छिन्नचिदज्ञानेन तूलाज्ञानशब्दितेनावरणस्वीकारेण वृत्त्यभावकाले तथा व्यवहारापादनासंभवात्। वृत्त्या तन्नाशे तथा व्यवहाराच्च। एकाज्ञानपक्षे मूलाज्ञानेनैव सद्भानांशयोरावृतत्वेऽपि वृत्त्या तदुच्छेदासंभवेऽपि घटस्सन् घटो भातीत्यादिव्यवहारं प्रति घटाद्याकारवृत्त्यभावविशिष्टमूलाज्ञानविषयताया एव प्रतिबन्धकत्वेन वृत्तिदशायां प्रतिबन्धकविरहात् घटस्सन्निति बुद्धौ ब्रह्मणः स्फुरणेऽनुपपत्त्यभावात्।

ननु ब्रह्मणः सर्वप्रत्ययवेद्यत्वे शब्दाजन्यवृत्तिविषयत्वस्य तत्र सत्त्वात् दृश्यत्वहेतोर्व्यभिचार इति चेत्

न—सर्वप्रत्ययनिरूपितप्रकारताश्रयत्वस्योपहित एव संभवेन व्यभिचाराभावात्। शुद्धे शब्दजन्यनिर्विकल्पकधीविशेष्यत्वस्यैव स्वीकारात्। न च

'न चक्षुषा गृह्यते' इति श्रुतिविरोधः। तस्याः शब्दाजन्यनिर्विकल्पकधीविशेष्यत्वाभावपरत्वात्।

ननु घटं न जानामीति साक्षिधिया घटादेरेवाज्ञानविषयत्वावगाहनेन तन्निवर्तकचाक्षुषादिवृत्तौ घटादेरेव भानमुचितम्, न सद्रूपस्य। न च घटाद्यवच्छेदेन चितःस्फुरणवारणाय तदवच्छेदेन चिति अज्ञानविषयत्वानां कल्पनीयतया तदवच्छेदकत्वेनैव घटादीनामस्फुरणोपपत्तौ तेष्वज्ञानविषयत्वान्तरकल्पने गौरवमिति वाच्यम्। घटाद्युपहितचैतन्यानां केवलचिदन्यत्वपक्षे तेषु अज्ञानविषयत्वानां घटादिषु तदवच्छेदकत्वानाञ्च कल्पनीयतया तदपेक्षया घटादिषु अज्ञानविषयत्वानां कल्पनाया एव लघीयस्त्वात्। तादृशचैतन्यानां केवलचिदभिन्नत्वपक्षेऽपि घटादिविशेषितचिद्रूपे संशयाद्यभावरूपस्फुरणस्य घटादावज्ञानविषयत्वाङ्गीकारमात्रेणैव निर्वाहात् तादृशचिद्रूपे अज्ञानविषयत्वाकल्पनात्। न च आद्यपक्षे घटादावच्छेदकत्वानि न कल्पनीयानि तत्राज्ञातचित्तादात्म्येनैवाज्ञातत्वव्यवहारोपपत्तेरिति वाच्यम्। विनिगमकाभावात् घटादावज्ञातत्वस्वीकारेऽपि अज्ञातघटतादात्म्यादेव तदुपहितचिति अज्ञातत्वव्यवहारनिर्वाहात्। न च—चिति अज्ञातत्वस्वीकारे अज्ञातत्वशून्यचिद्रूपमपरोक्षज्ञानमिति संभवति। घटादौ तत्स्वीकारे तु नापरोक्षत्वं तथा। घटाद्याकारवृत्त्यनुत्पत्तिकालेऽपि घटादेरपरोक्षत्वापत्तेः। किन्तु अज्ञातत्वशून्योपहितत्वविशिष्टचिद्रूपं तथा वाच्यमिति गौरवम्। चित्यज्ञातत्वस्वीकारे तु लाघवमिति—वाच्यम्। घटादावज्ञातत्वस्वीकारपक्षेऽपि अज्ञातत्वाभावस्यैवापरोक्षतारूपत्वसंभवात्। नचैवमलीकस्याप्यपरोक्षत्वापत्तिः तस्याज्ञातत्वशून्यत्वादिति वाच्यम्। वृत्त्यभावदशायामज्ञातत्वसत्त्वेऽपि प्रातिभासिकस्याज्ञातत्वाभावस्य संभवेन तद्दशायामपरोक्षत्वव्यवहारवारणाय स्वसमानसत्ताकाज्ञातत्वसामान्याभावस्यैवापरोक्षतारूपत्वावश्यकतया अलीकस्यापरोक्षत्वापत्तिविरहादिति चेत्

न, —जडतया अप्रसक्तप्रकाशानां कार्याणामनाद्यज्ञानविषयत्ववर्णनस्य निर्युक्तिकत्वात् घटोत्पत्तेः प्रागज्ञानस्य निर्विषयत्वापत्तेः चैतन्यनिष्ठाज्ञान-

विषयताऽवच्छेदकतया घटादीनां भानमादायैव साक्षिप्रत्यक्षाद्युपपत्तेश्च । किञ्च चैतन्यस्य स्वप्रकाशत्वेन प्रसक्तप्रकाशे तस्मिन्नावरणकृत्यं भवेत् । जडे त्वज्ञानकल्पिते अप्रसक्तप्रकाशतया नावरणकृत्यं संभवति । लोके हि प्रसक्तप्रकाशमादित्यादिकं ज्योतिः आवृतमिति व्यवहारः न तु तम आवृतमिति । तस्याप्रकाशरूपत्वात् । तस्मादज्ञानस्य चिद्विषयकत्वात् घटादिवृत्त्या तदवच्छेदेनाज्ञानावरणभङ्गे सन् घट इत्यादिप्रत्यक्षे सद्रूपभानेऽनुपपत्त्यभावेन सत्तादात्म्येन प्रतीयमानत्वयोग्यत्वरूपायाः सदवृत्तित्वविशिष्टभेदप्रतियोगितायाः जलतरङ्गचन्द्रे इव घटादावपि सत्त्वात्तेषां सद्रूपे कल्पितत्वरूपमिथ्यात्वसिद्धिर्निष्प्रत्यूहा ।

एतेन—चैतन्ये अज्ञातत्वस्वीकारे गौरवं घटादौ वृत्तिशून्यकालेऽपि तेषामज्ञातत्वाभावेन प्रत्यक्षत्वापत्तिः अलीकस्यापरोक्षत्वापत्तिः अज्ञातत्वाभावे स्वसमानसत्ताकत्वविशेषणेन तत्परिहारश्चेत्येतत् सर्वं प्रत्युक्तम् ।

किञ्च ब्रह्मणः चाक्षुषाद्यविषयत्वेऽपि नास्माकं क्षतिः । घटादिविषयकवृत्त्या घटाद्यवच्छेदेन सद्रूपावरणाभिभवे घटादौ तत्तादात्म्यभानसंभवात् । अज्ञाताविषयकत्वेऽपि अज्ञाततावच्छेदकविषयकत्वेन वृत्तेः प्रमात्वसंभवात् । तात्त्विकप्रमात्वमेवाज्ञातविषयकत्वघटितं ब्रह्माकारवृत्ताविति वक्तुं शक्यत्वात् । तावताऽपि सत्तादात्म्येन प्रतीयमानत्वस्य हेतोरसिद्धिविरहात् ।

वस्तुतस्तु ज्ञानाज्ञानयोः समानविषयकत्वेन निवर्त्यनिवर्तकभावनिर्वाहाय घटादिज्ञानप्रामाण्यस्यानुभवसिद्धस्योपपादनाय च सद्रूपस्यैव वृत्तिविषयता, घटादीनां तु तदवच्छेदकत्वमिति युक्तम् । अत एवोक्तं **वार्तिके**—'अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः' इति ।

ननु केवलवह्निव्याप्तिज्ञानात् सत्ताविशिष्टवह्न्यनुमितेरसंभवात् केवलवह्निवाचकपदेन सत्ताविशिष्टवह्निबोधासंभवाच्चानुमित्यादौ सत्ताभानानु-

---

टि. भाविविषयकज्ञानस्यैव घटोत्पत्तेः पूर्वमज्ञानस्यापि घटविषयकत्वं संभवतीत्याशङ्क्याह—किञ्चेति ।

पपत्तिरेव। वह्निर्नसन्निनितिज्ञानानन्तरजातानुमितौ वह्नौ सत्ताभानासंभवश्चेति चेत्

न—व्याप्त्यादिज्ञानेऽपि सत्ताविशिष्टवह्न्यादेरेव भानात् अनुमितौ सत्ताविशिष्टवह्न्यादिभानसंभवात्। वह्निर्नसन्निनितिधीकालेऽपि सत्तावह्नित्वयोरेकत्रद्वयमितिरीत्या प्रकारत्वसंभवात्, वह्नित्वावच्छिन्ने सद्भेदावगाहिनः पूर्वोक्तनिश्चयस्य एकत्रद्वयमितिरीत्या जायमानज्ञाने प्रतिबन्धकत्वविरहात्।

वस्तुतस्तु **नव्यप्राभाकरमते** विषयावभासकसामग्र्या एव ज्ञानग्राहकत्ववत् **मीमांसकमते** कालसंबन्धिग्राहकसामग्र्याः कालग्राहकत्ववच्च सत्ताश्रयग्राहकसामग्र्याः सत्ताग्राहकत्वाङ्गीकारात् सत्तारूपं ब्रह्म सर्वप्रत्ययेषु भासते। 'न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते' इति शाब्दिकोक्तनियमवत् 'न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते' इति मीमांसकोक्तनियमवच्च 'न सोऽस्ति प्रत्ययो लोके यत्र सत्ता न भासते' इति नियमस्य सिद्धान्ते स्वीकारादिति।

ननु एवं सति सामानाधिकरण्येन साध्यसिद्धिप्रतिबध्यतावच्छेदकगर्भे शुद्धवह्नित्वावच्छिन्नविधेयत्वशुद्धपर्वतत्वावच्छिन्नोद्देश्यत्वादेर्निवेशानुपपत्तिः। वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नसत्तानिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वरूपशुद्धवह्नित्वावच्छिन्नत्वस्य विधेयतायां निवेशे च शुद्धपर्वतत्वावच्छिन्नत्वशुद्धसंयोगावच्छिन्नत्वयोरपि उक्तरीत्या निवेशनीयतया अधिकभेदनिवेशात् विशेषणविशेष्यभावे विनिगमनाविरहात् गुरुतरप्रतिबध्यप्रतिबन्धकभावबाहुल्यापत्तिरिति चेत्

न—फलमुखत्वेनास्य गौरवस्यादोषत्वात्। अन्यथा अनेकघटव्यक्तीनामसिद्ध्यापत्तिः। अनन्तानां व्यक्तीनां तत्प्रागभावप्रध्वंसानां तदीयसंयोगादिसंबन्धानां तदीयाधिकरणत्वप्रतियोगित्वाधेयत्वविषयत्वादीनां तद्घटितानां कार्यकारणभावानां प्रतिबध्यप्रतिबन्धकभावानाञ्च कल्पनेन महागौरवात्। फलमुखत्वं तु गौरवस्य समानमिति।

एतेन—'एवं परामर्शकार्यतावच्छेदकबाधप्रतिबध्यतावच्छेदककोटावपि तथा निवेशावश्यकतया बहुतरगौरवं दुर्वारम्' इत्यादिना 'सत्ताऽन्यनिष्ठत्वस्य निवेश्यतया गौरवात्' इत्यन्तेन ग्रन्थेन प्रतिपादितं दूषणजातं परास्तं वेदितव्यम् । तस्मात् सर्वप्रत्ययेषु सद्रूपस्य भानमनाविलमिति सिद्धम् ॥

इति महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिविरचिते ब्रह्मानन्दीयभावप्रकाशे परिच्छिन्नत्वविचारः समाप्तः ॥

---

**टि. अनाविलमिति** । अत्र हेतुभूतं सत्तादात्म्येन प्रतीयमानत्वं तद्योग्यत्वरूपं सदवृत्तित्वविशिष्टभेदप्रतियोगित्वे पर्यवसितम् । अत्र सदवृत्तित्वविशिष्टवत्त्वस्यैव हेतुत्वसंभवेन भेदप्रतियोगित्ववैयर्थ्यम्, अलीके व्यभिचारः, जगत्सत्यत्ववादिमते सदवृत्तित्वविशिष्टप्रतियोगित्वादेः प्रपञ्चेऽस्वीकारेण संदिग्धासिद्धिश्च, इति न्यायभास्करोक्तं दूषणजातं न विचारसहम् । द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्र सत्तात्वेन सत्तायाः प्रवेशे प्रयोजनाभावेऽपि न वैयर्थ्यं कथैरुद्भाव्यते । तद्वत् प्रकृतेऽपि भेदप्रतियोगित्वांशवैयर्थ्यापादनस्यासंगतत्वात् । कालवृत्तित्वस्यापि हेतौ प्रवेशेनालीके व्यभिचारविरहात् । सद्रूपत्वेनाद्वैत्यभिमतावृत्तिभेदप्रतियोगित्वस्य जगत्सत्यत्ववादिमतेऽपि पक्षे सत्त्वेन संदिग्धासिद्धिविरहाच्चेति **श्रीपरीक्षिन्महाराजाः** ।

**इति परिच्छिन्नत्वविचारः समाप्तः ॥**

# अथ अंशित्वविचारः

चित्सुखाचार्यास्तु—अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अंशित्वात् इतरांशिवत् इत्यनुमानात् मिथ्यात्वसिद्धिरित्याहुः।

अत्र तन्तुपदमुपादानपरम्। तेन एतत्तन्त्ववच्छिन्नचित एवैतत्पटोपादानत्वेन पटस्यैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि न सिद्धसाधनम्।

न चान्यासमवेतस्यांशित्वमेतत्तन्तुसमवेतत्वं विना न घटत इति विरुद्धो हेतुरिति वाच्यम्। एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि एतत्समवेतत्वस्य सत्त्वेनांशित्वस्य साध्येनाविरोधात्। एतत्तन्तुनिष्ठात्यन्ताभावाप्रतियोगित्वं हि एतत्तन्तुसमवेतत्वे न प्रयोजकं भवति। परमते केवलान्वयिधर्ममात्रस्य एतत्समवेतत्वापत्तेः। किन्तु एतन्निष्ठप्रागभावप्रतियोगित्वम्। तच्च एतन्निष्ठात्यन्ताभावप्रतियोगित्वेऽपि न विरुद्धम्। एतत्समवेतत्वञ्च एतदुपादानकत्वम्, न तु नित्यसंबन्धशालित्वम्। अनभ्युपगमात्।

अभावश्च एतत्पटानवच्छेदकावच्छिन्नवृत्तिकान्यत्वेन विशेषणीयः। तेन पटस्याव्याप्यवृत्तित्वमादाय नार्थान्तरम्। न वा मिथ्यात्वघटकाभावस्यावच्छिन्नवृत्तिकान्यत्वस्वीकारेऽपि क्षतिः। वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वे सति तादात्म्यसंबन्धावच्छिन्नत्वस्य प्रतियोगितायां निवेशेन विशिष्टाभावं उभयाभावं संबन्धान्तरावच्छिन्नाभावञ्चादाय सिद्धसाधनं वारणीयम्।

न च—प्रतियोगितायाः प्रतियोगिस्वरूपत्वपक्षे बाधः, एतत्पटत्वावच्छिन्नैतत्पटात्मकप्रतियोगिताया एव वैशिष्ट्याद्यवच्छिन्नत्वात्, संबन्धान्तरावच्छिन्नप्रतियोगिताया अपि तादात्म्यसंबन्धावच्छिन्नत्वात्। तस्या अतिरिक्तत्वेऽपि यादृशप्रातिभासिकविशेषस्य वैशिष्ट्यव्यासज्यवृत्तिधर्माभ्यामेव भानं तादृशप्रातिभासिके व्यभिचारः। तत्र वैशिष्ट्याद्यनवच्छिन्नप्रतियोगित्वसत्त्वे

---

अथ अंशित्वविचारः॥

टि. चित्सुखाचार्योक्तं मिथ्यात्वानुमानं निरूपयितुमारभते—चित्सुखेति।

मानाभावादिति—वाच्यम् । प्रतियोगितायाः प्रतियोगिस्वरूपत्वानभ्युपगमात् । अन्यथा पटे घटत्वावच्छिन्नप्रतियोगितानास्तीतिवत् द्रव्यत्वावच्छिन्नप्रतियोगितानास्तीतिप्रतीत्यापत्तेः । घटात्मकद्रव्यरूपप्रतियोगितायास्तत्राभावात् । वैशिष्ट्यव्यासज्यवृत्तिधर्माभ्यामेव भासमानस्य प्रातिभासिकस्याप्रामाणिकत्वाच्च ।

वस्तुतस्तु अव्यासज्यवृत्तिप्रतियोगितायाः साध्यत्वे पर्याप्तिसंबन्धेन एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वस्य साध्यत्वे वा उभयाभावादिकमादाय सिद्धसाधनं न संभवतीति बोध्यम् ।

किञ्च, एतत्पटत्वं एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकं अंशिवृत्तित्वात् घटत्ववत् इत्यनुमाने तात्पर्यान्न दोषः । न च कम्बुग्रीवादिमत्त्वे व्यभिचारः गुरुधर्मस्यानवच्छेदकत्वादिति वाच्यम् । कम्बुग्रीवादिमान्नास्तीति प्रतीत्या तस्यापि स्वरूपसंबन्धरूपावच्छेदकताया **दीधितिकारा**नुमतत्वात् । स्वविशिष्टसंबन्धिनिष्ठेत्यादिकस्य **दीधितिकारो**क्तस्य पारिभाषिकावच्छेदकत्वस्य साध्यतास्वीकारेण वा दोषाभावात् ।

'प्रतियोगितावच्छेदकत्वे सतीति हेतुविशेषणेऽपि तत्र व्यभिचारतादवस्थ्यात्' इत्यादिः 'भवन्मते विषयतायाः चिच्चेत्यतादात्म्यरूपत्वात्' इत्यन्तो ग्रन्थः अनुक्तोपालम्भनतया पराहतः ।

---

**टि. अप्रामाणिकत्वादिति** । अवच्छेदकावच्छेदेन मिथ्यात्वावगाहिनि ब्रह्मभिन्नंमिथ्येति ज्ञाने प्रातिभासिकस्य सर्वस्यापि विषयत्वादिति भावः ।

**आदिकमिति** । आदिपदेन विशिष्टाभावपरिग्रहः । विशिष्टाभावप्रतियोगिताया विशेषणान्तर्भावेण पर्याप्तिर्बोध्या ।

**सिद्धसाधनं न संभवतीति** । एतत्तन्तुनिष्ठात्यन्ताभावनिरूपितैकमात्रवृत्तिधर्मपर्याप्तावच्छेदकताकप्रतियोगित्वं साध्यम्, इत्थञ्च वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नाभावमादाय न सिद्धसाधनमिति **श्रीपरीक्षिन्महाराजाः** ।

**अनुक्तोपालम्भनतयेति** । इदमुपलक्षणम् । अन्ते 'तादात्म्यसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वे सतीति हेतुविशेषणेऽपि तद्दोषतादवस्थ्यम्', भवन्मते विषयतायाः

ननु साध्यप्रविष्टप्रतियोगितायां तादात्म्यसंबन्धावच्छिन्नत्वनिवेशे एतत्तन्तुसंयुक्तपटे व्यभिचारशङ्काया अनुत्थितिः तादात्म्यवतः संबन्धान्तरावच्छिन्नाभावमादाय सिद्धसाधनञ्चेति चेत् ।

न—यथाश्रुतसाध्ये एतत्तन्तुसंयुक्तपटे व्यभिचारशङ्काया उत्थितेः । तादात्म्यवतः संबन्धान्तरावच्छिन्नाभावप्रतियोगित्वमादाय सिद्धसाधनस्य तत्प्रतियोगितायाः संबन्धविधया तादात्म्यावच्छिन्नत्वाभावेनैव परिहर्तुं शक्यत्वात् । संबन्धावच्छिन्नाभावस्य संबन्धाभावरूपताया लघुचन्द्रिकादिषु व्यवस्थापितत्वेनोक्ताभावमादाय सिद्धसाधनोक्तेस्तदपरिशीलनविलसितत्वाच्च । संबन्धावच्छिन्नप्रतियोगिताकाभावाभ्युपगमेऽपि तादात्म्यातिरिक्तसंबन्धानवच्छिन्नत्वस्य प्रतियोगितायां निवेशेन संबन्धान्तरावच्छिन्नप्रतियोगितामादाय सिद्धसाधनवारणसंभवात् ।

न च—तथापि तादात्म्यसंयोगोभयसंबन्धावच्छिन्नाभावमादाय सिद्धसाधनवारणाय तादात्म्यातिरिक्तसंबन्धानवच्छिन्नत्वनिवेशे स्वाश्रयतादात्म्यसंबन्धावच्छिन्नाभावस्य अन्यानुयोगिकतादात्म्यसंबन्धावच्छिन्नाभावस्य चाव्यावृत्त्या सिद्धसाधनं दुर्वारम्, तादात्म्यत्वातिरिक्तधर्मानवच्छिन्नतादात्म्यनिष्ठावच्छेदकतानिवेशेऽपि स्वरूपतः अन्यानुयोगिकतादात्म्यनिष्ठावच्छेदकतामादाय दोषो दुर्वार इति—वाच्यम् । शुद्धतादात्म्यसंबन्धेन किञ्चिद्विशिष्टबुद्धिप्रतिबन्धकतावच्छेदकविषयताश्रयाभावनिवेशेनोक्ताभावस्योक्तविषयताश्रयत्वाभावेन सिद्धसाधनानवकाशात् ।

---

चिच्चेत्यतादात्म्यरूपत्वात्' इत्ययं ग्रन्थः अनुपपत्तिपराहतोऽपि । निरुक्तरीत्या कम्बुग्रीवादिमत्त्वे तादात्म्यसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्वीकारे साध्यस्यापि एतत्तन्तुनिष्ठाभावीयतादात्म्यसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्य तत्र सत्त्वेन व्यभिचाराप्रसक्तेः ।

**शुद्धतादात्म्येति ।** अन्यानुयोगिकतादात्म्यस्य संसर्गतया भानमप्रामाणिकम्, अन्यथा पर्वतस्संयोगेनवह्निमानित्यादिज्ञानानामपि अन्यानुयोगिकसंयोगविषयकत्वसंभवेन

अन्यासमवेतस्यांशित्वमेतत्तन्तुसमवेतत्वं विना न युक्तमिति हेतोर्विरुद्धतादोषः पूर्वमेव परिहृतः ।

यत्तु — एतत्तन्तुनिष्ठात्यन्ताभावाप्रतियोगित्वस्यैतत्समवेतत्वव्यापकतया व्यापकाभावात् व्याप्याभावे आपादिते व्यापकताखण्डनस्य युक्तत्वेन तदपहाय केवलान्वयिधर्मे व्यभिचारादुक्तात्यन्ताभावाप्रतियोगित्वस्यैतत्तन्तुसमवेतत्वव्याप्यत्वं न संभवतीति खण्डनमयुक्तमिति ।

तन्न—एतत्तन्तुनिष्ठात्यन्ताभावाप्रतियोगित्वमेतत्तन्तुसमवेतत्वप्रयोजकं न भवति इत्यस्य समव्यापकताखण्डने एव तात्पर्यम् । न तु व्याप्यत्वमात्रस्य व्यापकत्वमात्रस्य वा खण्डने । आद्ये तदुक्तेर्व्यर्थत्वात् । द्वितीये केवलान्वयिनि वक्ष्यमाणापत्त्यसंभवात् ।

एतेन—समव्यापकताखण्डनस्यानवसरग्रस्तत्वात् परोक्तापत्तिहेतुभूतव्यापकताखण्डनस्यैव युक्तत्वं समव्यापकताघटकव्यापकत्वांखण्डनेन तत्परत्वासंभवश्चेति निरस्तम् । एतन्निष्ठात्यन्ताभावाप्रतियोगित्वस्यैतत्समवेतत्वव्यापकत्वमप्रयोजकत्वदूषणग्रस्तमित्यस्य स्पष्टतया उपेक्षणोपपत्तेः ।

ननु एतन्निष्ठाभावाप्रतियोगित्वमेतन्निष्ठसमवायसंबन्धावच्छिन्नाभावाप्रतियोगित्वं वाच्यम् , अन्यथा सर्वस्यापि संबन्धान्तरावच्छिन्नाभावप्रतियोगित्वेनाप्रसिद्ध्यापत्तेः, तथा च प्रमेयत्वादौ व्यभिचारोक्त्यसंगतिरिति चेत् ।

न—अद्वैतिनां विशिष्टाद्वैतिनां वा मतमाश्रित्य प्रमेयत्वादेरेतत्समवेतत्वं वार्यते । नाद्यः, समवायानङ्गीकारात् । न द्वितीयः, विजातीयसंयोगविशिष्टतन्तूनामेव पटरूपतया तस्य तत्समवेतत्वाभावात् समवायसंबन्धाव-

भ्रमत्वव्यवहारापत्तेरिति भावः । यदि च तत्रेष्टापत्तिरित्युच्यते तदा एतत्तन्त्वनुयोगिकतादात्म्यसंबन्धावच्छिन्नप्रतियोगित्वमेव साध्यम् । तच्च स्वनिष्ठाभावीयत्वस्वानुयोगिकतादात्म्यसंबन्धावच्छिन्नत्वोभयसंबन्धेन एतत्तन्तुविशिष्टप्रतियोगित्वे पर्यवसितम् । इत्थञ्च स्वाश्रयतादात्म्यसंबन्धस्यापि स्वानुयोगिकत्वाभावेन तत्संबन्धावच्छिन्नप्रतियोगित्वमादाय न सिद्धसाधनावकाशः इति **श्रीपरीक्षिन्महाराजाः** ।

च्छिन्नाभावाप्रतियोगित्वस्यैतत्समवेतत्वव्यापकत्वाभावात् । किञ्च, संबन्धावच्छिन्नाभावस्य संबन्धाभावरूपतायाः पूर्वं मूलकारैरभिहितत्वेन तदनुसारे शङ्काया एवानुत्थितिरिति बोध्यम् ।

न च एतन्निष्ठप्रागभावप्रतियोगित्वस्य एतन्निष्ठात्यन्ताभावप्रतियोगित्वेनाविरोधकथनमसंगतं तयोर्विरोधादिति वाच्यम् । अन्तरा श्यामे रक्तं रूपं नास्तीति प्रत्ययेन तयोरविरोधस्य दीधितिकारसंमतत्वात् । तस्य प्रागभावविषयकत्वे पूर्वापररक्तिमध्वंसप्रागभाववति मध्यरक्तेऽपि तथा प्रत्ययापत्तेः ।

न च तत्र रक्तात्यन्ताभावानङ्गीकारेऽपि रक्तं नास्तीति प्रत्यये प्रतियोग्यनधिकरणकालावच्छिन्नस्वरूपस्यैव प्रागभावादिसंबन्धतया भानात् तथा प्रत्ययाभाव इति वाच्यम् । मध्यरक्ततादशायां रक्तो नष्टः रक्त उत्पत्स्यते इति व्यवहारोपपत्तये केवलस्वरूपस्य प्रागभावादिसंबन्धतया भानस्यावश्यकतया रक्तं नास्तीति प्रतीत्यापत्तिवारणाय तत्र प्रतियोग्यनधिकरणकालावच्छिन्नस्वरूपविशेषणदानस्य ध्वंसप्रागभावयोरत्यन्ताभावेन विरोधसंपादकस्य प्रक्षालनाद्धीतिन्यायग्रस्तत्वात् ।

ननु अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न एतत्तन्त्वारब्धत्वात् व्यतिरेकेण पटान्तरवत् इत्यनुमानेन प्रतिरोधः । न चाप्रसिद्धविशेषणत्वम्, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं किञ्चिन्निष्ठाभावप्रतियोगि संसर्गाभावप्रतियोगित्वव्याप्यत्वात् प्रागभावप्रतियोगित्ववत् इति सामान्यतस्तत्सिद्धेरिति चेत्

न—एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं किञ्चिन्निष्ठाभावप्रतियोगि इत्यादेरनुमानस्यासंभवदुक्तिकत्वात् । संसर्गाभावप्रतियोगित्वस्यैव तादात्म्येन हेतुत्वसंभवेन व्याप्यत्वांशवैयर्थ्यात् । किञ्च, व्याप्यत्वं यदि येनकेनचिद्रूपेणोच्यते तदा आकाशाभावस्यापि घटादिवृत्तित्वविशिष्टत्वेन संसर्गाभावप्रतियोगित्वव्याप्यत्वेन तत्र किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वाभावात् व्यभिचारः । अत्यन्ताभावप्रतियोगितात्वेन तदुक्तौ साधनवैकल्यम् । संसर्गाभावप्रतियोगितात्वेन

तदुक्तौ स्वव्यापकसाध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकरूपव्याप्तिशरीरे संसर्गाभावप्रतियोगितात्वस्य प्रविष्टत्वेन तस्यैव हेतुतावच्छेदकत्वसंभवेनेतरांशवैयर्थ्यमिति ।

यत्तु—संसर्गाभावप्रतियोगितात्वावच्छिन्नाभाववदवृत्तित्वविशिष्टस्यैव तद्व्याप्यत्वादित्यनेन विवक्षिततया वैयर्थ्याभावः । स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वमित्यत्र स्वसमानाधिकरणपदेन स्वव्यापकत्वस्यैव विवक्षितत्वेन संसर्गाभावप्रतियोगितात्वस्योक्तव्याप्यत्वे घटकत्वेऽपि तद्व्यापकत्वाभावाच्च । अन्यथा वह्निमदन्यावृत्तित्वस्य वह्निव्याप्यतावच्छेदकत्वानुपपत्तेरिति ।

तन्न—स्वव्यापकधर्मान्तराघटितत्वं न व्याप्यतावच्छेदकत्वाभावे प्रयोजकम्, अङ्कुरादिकं कर्तृजन्यमित्यत्र शरीरजन्यत्वाभावत्वस्यापि व्याप्यतावच्छेदकत्वापत्तेः, जन्यत्वाभावत्वे शरीरजन्यत्वाभावत्वव्यापकत्वाभावात् । किन्तु व्यर्थविशेषणघटितत्वम् । तत्रानुकूलतर्काभावेन व्याप्त्यग्रहात् । प्रकृते च व्यर्थविशेषणघटितत्वेन व्याप्तिग्रहासंभवात् । वह्निमदन्यावृत्तित्वे तदघटितत्वेन व्याप्यतावच्छेदकत्वोपपत्तेश्च ।

एवं यत्र एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्रैतत्तन्त्वारब्धत्वाभावः इति व्यतिरेकव्याप्तौ एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वात् प्रतिरोधस्य हीनबलत्वान्न सत्प्रतिपक्षता । एतत्तन्त्वारब्धत्वाभावव्यापकस्यैतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्य एतत्तन्त्ववच्छिन्नचिदुपादानकसर्पादौ एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाव्यापकत्वात् । एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वमित्यत्र एतत्तन्तुपदेन तदवच्छिन्नचित एव ग्रहणात् तन्निष्ठप्रागभावाप्रतियोगित्वस्य प्रातिभासिकसर्पादावभावात् उक्तव्यतिरेकव्याप्तौ तादृशसर्पे व्यभिचारस्य दुर्वारत्वात् ।

ननु प्रातिभासिकान्यत्वे सति एतत्तन्त्वारब्धत्वस्यैव प्रतिहेतुतया विवक्षितत्वेन तदभावस्य एतत्तन्त्ववच्छिन्नचिदुपादानकसर्पादिसाधारणतया एत-

तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्य तद्व्यापकत्वाभावेनोपाधित्वासंभवः, उक्त-प्रतियोगित्वरूपसाध्याभाववति सर्पे निरुक्तहेत्वभावस्यापि सत्त्वेन व्यभिचारा-भावश्च इति चेत्

न—ब्रह्मज्ञानेतरबाध्यत्वरूपप्रातिभासिकत्वस्य ब्रह्मज्ञानाव्यवहितपूर्व-वृत्तिभ्रमसिद्धे अभावेन उक्तप्रातिभासिकान्यत्वविशिष्टैतत्तन्त्वारब्धत्वाभावाभाव-वति तत्र एतत्तन्तुनिष्ठाभावप्रतियोगित्वसत्त्वेन व्यभिचारात्। प्रतिभासमात्रशरी-रत्वरूपप्रातिभासिकत्वस्य दृष्टिसृष्टिपक्षे स्वरूपासिद्धिप्रसङ्गेन निवेशासंभवाच्च।

किञ्च एतत्तन्तुनिष्ठप्रागभावप्रतियोगित्वप्रातिभासिकान्यत्वोभयाभाव-स्योक्तहेत्वभावव्यापकस्य पक्षावृत्तेः पक्षवृत्तितयासंदिह्यमानैतत्तन्तुनिष्ठात्यन्ता-भावप्रतियोगित्वाव्यापकत्वादुपाधित्वं दुर्वारमेव। न च साध्यासमानाधि-करणधर्मवत् यत् साधनवत् तन्निष्ठाभावप्रतियोगितावच्छेदकः साध्यस-मानाधिकरणवृत्तिर्यो धर्मः तद्वत्त्वरूपस्य **दीधितिकारो**क्तोपाधिलक्ष-णस्य तत्राभावेनोपाधित्वं न संभवतीति वाच्यम्। **उदयनाचार्य**मताभिप्राये-णोपाधिकथनात्। अन्यथा तव स्वबाधकाभिमतेत्याद्युपाधिकथनस्यासंग-त्यापत्तेः। तत्र दीधितिकारोक्तलक्षणाभावात्।

न च मिथ्यात्वघटकाभावस्य तात्त्विकत्वे अद्वैतश्रुतिविरोध इति वाच्यम्। तादृशश्रुतेः ब्रह्मभिन्नभावरूपधर्मशून्यत्वार्थकतया अभावरूपधर्माणामद्वैतभञ्जक-त्वाभावस्य **मण्डनमिश्रमत**सिद्धत्वेन श्रुतिविरोधाभावात्। तादृशश्रुतेर-खण्डार्थत्वाच्च। न चैवं तादृशाभावस्य तात्त्विकत्वं न संभवति तत्त्वावेदक-प्रमाणवेद्यत्वाभावादिति वाच्यम्। मिथ्यात्वानुमाने स्वसमानाधिकरणस्वाधि-कसत्ताकात्यन्ताभावस्य मण्डनमिश्रमते साध्ये निवेशेन तस्यैव तत्त्वावेदकत्वात् तात्त्विकद्वैताभावविषयकत्वेनैव तस्य द्वैतग्राहिप्रत्यक्षादिबाधकत्वमिति मण्डन-मिश्राभिप्रायात्।

---

**टि. उपाधिकथनादिति**। साध्यासमानाधिकरणधर्मवतः साधनवत्तया संदि-ग्धस्यापि तल्लक्षणघटकत्वे पृथिवी इतरेभ्यो भिद्यते इत्यादौ पाकजरूपाभावादेरुपाधित्वा-

किञ्च, तत्त्वज्ञानोद्देशेन मुमुक्षूणां प्रवृत्तेः तत्त्वज्ञानकार्यः अविद्याध्वंसः तात्त्विको वाच्यः। तस्य मिथ्यात्वे तत्त्वज्ञानबाध्यत्वेन तत्कार्यत्वानुपपत्तेः। एवञ्च मिथ्यात्वघटकः अत्यन्ताभावः अविद्याध्वंसश्च मण्डनमिश्रमते तात्त्विकः नत्वभावान्तरम्।

ननु अभावस्य सत्यत्वे तत्राभावत्वतत्संबन्धतदधिकरणत्वानां ब्रह्मणि चाभावसंबन्धतदनुयोगित्वयोरवश्यं वाच्यतया भावाद्वैतमपि दुर्लभमेव। न चाभावत्वतत्संबन्धादेराश्रयरूपत्वान्न दोष इति वाच्यम्। स्वंस्वीयमित्यननुभवेन स्वस्य संबन्धत्वे आत्माश्रयापत्त्या च स्वरूपस्य संबन्धत्वासंभवात्। अन्यथा गुणगुण्यादिस्थलेऽपि स्वरूपस्य संबन्धत्वापत्तौ भवतां तादात्म्यविलोपप्रसङ्गात्। इति चेत्

न—भूतलघटाभावयोः स्वरूपसंबन्धस्वीकारात्, ऐक्येऽपि घटाभावाधिकरणकघटाभावादौ आधाराधेयभावस्य सर्वसंप्रतिपन्नत्वात् अभावत्वतत्संबन्धादेराश्रयरूपत्वेऽपि स्वरूपसंबन्धावगाहिनः अभावत्वप्रकारकप्रत्ययस्योपपत्तेः, स्वं स्वीयमिति व्यवहारवारणस्योभयत्र तुल्यत्वाच्च। यत्र आधाराधेयभावावगाहिनी प्रतीतिः तत्र न तादात्म्यं संबन्धः, किन्तु स्वरूपं संबन्धान्तरं वा। यथा—घटाभावे घटो नास्ति भूतले घट इत्यादौ। यत्र तु आधाराधेयभावो न भासते इदं रजतं नीलो घट इत्यादौ तत्र इदं रजतं जानामि नीलं घटं

---

पत्त्या व्यतिरेक्युच्छेदापत्तिरिति न्यायभास्करकाराणां दूषणन्तु **मणि**वाक्यावष्टम्भेन प्रकृते संदिग्धोपाधिसंभवस्य व्यतिरेकिणि तदसंभवस्य च व्युत्पादकेन ब्रह्मानन्दीयेनैव सुपरिहरमिति ग्रन्थकृता नोद्भावितमिति बोध्यम्।

यत्तु न्यायभास्करे 'वस्तुतस्तु पूर्वोक्तस्थापनानुमाने सिद्धसाधनं दुर्वारं सिद्धान्ते अवयवातिरिक्तावयव्यनङ्गीकारेण' इत्यादिनोक्तं दूषणम्—तन्न संगच्छते—पटपदार्थस्य तन्तोश्च तादात्म्यसंबन्धस्यावश्याश्रयणीयतया पटतादात्म्यवति तन्तौ तादात्म्यसंबन्धावच्छिन्नाभावसाधने सिद्धसाधनासंभवात्। एवं अंशित्वादित्यनेन अवयवसमवेतत्वावयवजन्यत्वादेर्विवक्षणे स्वमते असिद्धिरित्यादिकमपि अनुक्तोपालम्भनं अंशित्वादित्यस्य कार्यत्वादिति ब्रह्मानन्दीये विवरणादित्यपि विभावनीयम्।

जानामि इत्याद्यनुव्यवसायबलात् तादात्म्यमेव संबन्ध इति स्वरूपातिरिक्ततादात्म्यस्य सिद्धेश्च ।

ननु अभावस्य सत्यत्वे ब्रह्मप्रमेत्यादिपक्षतावच्छेदकाक्रान्ते तत्र साध्याभावाद्बाधः । अभावान्यत्वस्य पक्षतावच्छेदकगर्भे निवेशे च जीवब्रह्मभेदादेर्मिथ्यात्वासिद्ध्या भेदवादापत्तिः । अनुमानान्तरेण तत्र मिथ्यात्वसाधनेऽपि उक्तानुमाने दृश्यत्वादेः पारमार्थिकाभावे व्यभिचारः । अभावान्यत्वस्य हेतुकोटौ निवेशे चाप्रयोजकता, मिथ्यात्वाभावेऽप्यभावे दृश्यत्वोपपत्तिवत् पक्षेऽपि तदुपपत्त्या वक्ष्यमाणतर्काणामनवकाशात् । अपि च अनुमानवेद्यस्याभावस्य पारमार्थिकतां स्वीकृत्याद्वितीयश्रुतिसंकोचाङ्गीकर्तॄणां शास्त्रप्रमितकल्याणगुणानामपि पारमार्थिकत्वाङ्गीकारस्य युक्तत्वात् उत्सर्गापवादन्यायेन निषेधस्य तदतिरिक्तपरत्वसंभवात् इति चेत्

न—पक्षतावच्छेदककोटौ हेतुतावच्छेदककोटौ चात्यन्ताभावभिन्नत्वस्य अविद्याध्वंसभिन्नत्वस्य च निवेशेन बाधव्यभिचारयोर्विरहात् । वह्निमान् महानसीयधूमात् इत्यत्र यदि वह्निर्नस्यात् तर्हि धूमोऽपि न स्यादित्यापत्तेरनुकूलतर्कत्ववत् सामान्यतो दृश्यत्वभङ्गापत्तेरेव अभावान्यत्वविशेषितदृश्यत्वहेतावनुकूलतर्कत्वसंभवेनाप्रयोजकत्वविरहात् ।

किञ्च अभावस्य नानुमानगम्यत्वेन तात्त्विकत्वं किन्तु श्रुतिगम्यत्वेनेति मन्तव्यम् । कल्याणगुणानां तात्त्विकत्वस्वीकारे केवलो निर्गुण इतिश्रुतिविरोधो दुष्परिहरः । न च गुणपदस्य हेयगुणपरतया न विरोध इति वाच्यम् ।

---

**टि. सिद्धेश्चेति ।** अभावत्वस्यातिरिक्तत्वे प्रतियोगित्वस्येवानुयोगित्वरूपस्यापि तस्य मिथ्यात्वमेवेति न भावाद्वैतविरोधः इत्यपि ब्रह्मानन्दीये निरूपितं बोध्यम् ।

**श्रुतिगम्यत्वेनेति ।** स्वाधिकसत्ताकाभावघटितमिथ्यात्वस्य ‘नेह नानास्ति किञ्चन’ इतिश्रुत्या बोधनादिति भावः ।

**इति अंशित्वविचारः समाप्तः**

यत्किञ्चिद्धटवत्यपि भूतले निर्घटंभूतलमिति तत्तद्धटाभावतात्पर्येण व्यवहारापत्तेः, प्रतियोगिविशेषणतया अनुल्लिखितधर्मस्य प्रतियोगितावच्छेदकताया उभयत्र समानत्वात् ।

न च सत्यकामादिश्रुत्या गुणपारमार्थिकत्वसिद्धिरिति वाच्यम् । सगुणब्रह्मोपासनाप्रकरणस्थानां तादृशश्रुतीनां उपासनापेक्षितव्यावहारिकगुणसमर्पकत्वेन निर्गुणप्रकरणस्थानाञ्च तासां अद्वितीयब्रह्मप्रतिपत्त्यनुकूलनिषेधापेक्षितप्रतियोगिसमर्पकत्वेन उपपत्त्या गुणे पारमार्थिकत्वासिद्धेः । न चापूर्वत्वात् गुणानां तादृशश्रुतीनां तत्परत्वमिति वाच्यम् । अन्यशेषस्य तत्परताया जर्तिलाधिकरणविरुद्धत्वात् । तत्र 'जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा जुहुयात् न ग्राम्यान् पशून् हिनस्ति नारण्यान्' इति जर्तिलयवाग्वादीनां होमसाधनत्वमुक्त्वा 'अथो खल्वाहुः अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' इति तन्निन्दया 'पयसा जुहुयात इति पयोविधानात् पयोविधिस्तावकत्वेन पयोविध्येकवाक्यतापन्नानां जर्तिलादिवाक्यानां स्वार्थे तात्पर्याभावस्य निर्णीतत्वात् ।

एवञ्च मिथ्यात्वघटकाभावस्य पारमार्थिकत्वे न कोऽपि विरोधः ।

तस्मान्निर्दुष्टमंशित्वानुमानं सिद्धम् ।

इति महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिविरचिते
ब्रह्मानन्दीयभावप्रकाशे अंशित्वविचारः समाप्तः ॥

---

# अथ निरुपाधिकत्वविचारः

ननु दृश्यत्वादिहेतवः सोपाधिकाः। तथा हि—स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वं स्वबाधकाभिमताबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वञ्च उपाधिः। यत्रोपाधिः स्थाप्यः स स्वपदार्थः। शुक्तिरूप्यादेः स्वपदेन ग्रहणे तद्बाधकत्वेनाभिमतं इयंशुक्तिरित्यादिज्ञानं तदबाध्यदोषश्च सादृश्यादिः तत्प्रयुक्तविषयताश्रयत्वस्य मिथ्याभूते शुक्तिरूप्यादौ सत्त्वेन साध्यव्यापकत्वात्। वियदादेः स्वपदेनोपादाने तद्बाधकब्रह्मज्ञानाबाध्यदोषाप्रसिद्ध्या तदुपादानासंभवेन शुक्तिरूप्यादौ प्रसिद्धस्य तस्य वियदादिसाधारणसाधनाव्यापकत्वात्। एवं स्वबाधकशुक्तिज्ञानाबाध्यबाधकं नात्ररजतमित्यादिज्ञानं तादृशबाधकं प्रति निषेध्यत्वेन शुक्तिरूप्यादेर्विषयत्वेन साध्यव्यापकत्वात्, आकाशाभावधियश्चाकाशादिबाधकब्रह्मज्ञानबाध्यत्वादाकाशादावुक्तोपाध्यभावेन साधनाव्यापकत्वाच्च इति चेत्

न—दीधितिकारोक्तोपाधिलक्षणानाक्रान्तत्वेनानयोरुपाधित्वासंभवात्। तन्मते हि साध्यासमानाधिकरणधर्मवत् यत् साधनवत् तन्निष्ठाभावप्रतियोगितावच्छेदको यः साध्यसमानाधिकरणवृत्तिधर्मः तद्वत्त्वमुपाधिलक्षणम्। धूमवान् वह्नेरित्यादौ धूमासमानाधिकरणधर्मः अयोगोलकत्वं तद्वत् यत् साधनवत् अयोगोलकं तन्निष्ठाभावप्रतियोगितावच्छेदकः साध्यसमानाधिकरणवृत्तिधर्मः आर्द्रेन्धनसंयोगत्वं तद्वत्त्वस्यार्द्रेन्धनसंयोगे उपाधौ सत्त्वात् समन्वयः। स्वबाधकेत्याद्युपाधौ च निरुक्तलक्षणं नास्ति, साध्यासमानाधिकरणधर्मवत्साधनवतोऽप्रसिद्धेरिति।

---

**अथ निरुपाधिकत्वविचारः**

**टि.** दृश्यत्वादिहेतूनां निरुपाधिकत्वं व्यवस्थापयितुं परोक्तमुपाधिं शङ्कते—**नन्विति।**

**लक्षणेति।** लक्ष्यपरिचायकेत्यर्थः। एतेन-लक्ष्यानुसारेण लक्षणकथनं न तु लक्षणानुसारेण लक्ष्यव्यवस्थेति नात्र हानिरिति निरस्तम्।

अपि च स्वत्वस्यानुगतस्याभावेन सकलप्रातिभासिकसाधारणमिथ्यात्वव्यापकत्वं नोक्तोपाध्योः संभवति। एवं स्वबाधकेत्यादौ स्वबाधकबाध्यत्वं यदि स्वजनकाज्ञाननिवर्तकनिवर्त्यत्वं तदा जनकत्वस्यावच्छेदकघटितत्वात् शुक्त्यवच्छिन्नचिद्विषयकाज्ञानत्वादिरूपावच्छेदकभेदेन भिन्नत्वात् निवर्तकत्वघटकनिवृत्तिजनकत्वस्य च शुक्तित्वप्रकारकेदंविशेष्यकत्वादिरूपावच्छेदकभेदेन भिन्नत्वादननुगमः। न हि स्वत्वस्यानुगतत्वेऽपि तदनुगमसंभवः, द्रव्यजनकतात्वेन रूपेण कपालतन्तुत्वाद्यवच्छिन्नजनकतानामनुगमापत्तेः। तथा च नोक्तोपाध्योः साध्यव्यापकता संभवति।

यदि च स्वबाधकबाध्यत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्दोषप्रयुक्तविषयत्वतादात्म्योभयसंबन्धेन किञ्चिद्विशिष्टत्वस्य तादृशभेदवद्बाधकज्ञाननिरूपितप्रतियोगित्वसंबन्धावच्छिन्नप्रकारत्वतादात्म्योभयसंबन्धेन किञ्चिद्विशिष्टत्वस्य चोपाधित्वे तात्पर्यात् स्वत्वस्याननुगतत्वेऽपि क्षतिविरहः, शुक्तिरूप्ये उपाधिसंगमने तज्जनकताया एव संसर्गत्वेन प्रविष्टतया जनकतानामननुगतत्वेऽपि क्षतिविरहः संबन्धाननुगमस्यादोषत्वात्, इत्युच्यते।

तदापि तूलाज्ञानास्वीकारपक्षे शुक्तिरूप्याद्युपादानभूतब्रह्माज्ञाननिवर्तकब्रह्मज्ञानाबाध्यदोषाप्रसिद्ध्या निरुक्तोपाधिर्न संभवति।

न च—तूलाज्ञानस्याङ्गीकारेणैवोक्तोपाधिकथनम्; तूलाज्ञानानङ्गीकारे तु स्वनिष्ठविषयताप्रयोजकदोषप्रयोज्यविषयताश्रयान्यत्वं स्वबाधकाभिमताबाध्यत्वम्, शुक्तिरूप्यनिष्ठविषयताप्रयोजकसादृश्यादिरूपदोषप्रयोज्यविषयताश्रयान्यत्वस्य सादृश्यादिदोषे सत्त्वात् तत्प्रयोज्यविषयतावत्त्वस्य साध्यव्यापकत्वात् घटादिनिष्ठविषयताप्रयोजकाविद्यारूपदोषप्रयोज्यविषयताश्रयत्वस्याविद्यारूपदोष-साधारण्यात् तदन्यदोषप्रयोज्यविषयताश्रयत्वविरहेण घटादौ साधनाव्याप-

---

टि· यदिचेत्यादि। स्वस्मिन् भेदघटितस्वतादात्म्यासंभवेन तादात्म्यसंबन्धघटितं परिष्कारं तत्र तत्र स्वयं दूषयित्वा अत्र तादात्म्यसंबन्धघटितपरिष्कारकरणं न्यायभास्करकाराणां पूर्वापरविरोधमावहतीति बोध्यम्।

कत्वाच्चेति—वाच्यम् । स्वनिष्ठविषयताप्रयोजकदोषप्रयोज्येत्यनेन तादृश-किञ्चिद्दोषप्रयोज्यत्वं विवक्षितं किं वा दोषसामान्यप्रयोज्यत्वम् । नाद्यः, साधनव्यापकतापत्तेः, घटादिनिष्ठविषयताप्रयोजकवासनाप्रयोज्यविषयताश्रया-न्याविद्यारूपदोषाधीनविषयत्वस्य प्रपञ्चे सत्त्वात् । न द्वितीयः, अप्रसिद्धेः, अविद्यायाः स्वप्रयोज्यत्वे सादृश्यस्यापि दोषप्रयोज्यत्वेन तदप्रयोज्यदोषाधीन-विषयताश्रयत्वस्य शुक्तिरूप्ये असत्त्वेन साध्याव्यापकत्वात् ।

यत्तु—तूलाज्ञानास्वीकर्तृमते अविद्यातिरिक्तदोषप्रयोज्यविषयताश्रयत्व-मुपाधिरिति ।

तन्न—साधनवत्पक्षमात्रव्यावर्तकविशेषणघटितत्वेन पक्षेतरत्वतुल्यत्वात्, मिथ्याभूते च देहात्मैक्ये अविद्यातिरिक्तदोषाभावात् उक्तोपाध्यभावेन साध्या-व्यापकत्वाच्च ।

यत्तु—स्वमिथ्यात्वनिश्चयानिश्चितमिथ्यात्वकदोषप्रयुक्तभानत्वमुपाधिः । दृष्टान्ते साध्यव्यापकत्वात् पक्षे साधनाव्यापकत्वाच्च । न च निश्चयत्वस्य धर्मितावच्छेदकादिभेदेन भिन्नत्वादननुगम इति वाच्यम् । स्वावच्छिन्नप्रति-बन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वस्वसामानाधिकरण्योभयसंबन्धेन विषयि-ताविशिष्टविषयिताशून्यत्वरूपानुगतनिश्चयत्वस्य संभवादिति ।

तन्न—नेहनानेतिश्रुतिजन्यमिथ्यात्वनिश्चयेन दोषस्यापि मिथ्यात्वनि-श्चयात् शुक्तिरूप्ये साध्याव्याप्तेः ।

यत्तु—नेहनानेतिश्रुतिजन्यबोधस्य मिथ्यात्वनिश्चयरूपत्वासिद्धिः । सिद्धौ वा दोषभिन्नं यत् स्वभिन्नं तदविशेष्यकमिथ्यात्वनिश्चयानिश्चितमिथ्या-त्वकदोषप्रयुक्तविषयताश्रयत्वमुपाधिः । उक्तश्रुतिजन्यबोधस्य दोषभिन्नस्वभिन्न-विशेष्यकत्वेन तदविशेष्यकत्वाभावात् । स्वभिन्नाविशेष्यकमिथ्यात्वनिश्चया-निश्चितमिथ्यात्वकदोषप्रयोज्यविषयताश्रयत्वस्य घटादावपि सत्त्वात् साधनाव्याप-कत्वनिर्वाहाय दोषभिन्नेति । स्वभिन्नं यद्दोषभिन्नमीश्वरः तदविशेष्यकेण

घटाविद्ये मिथ्या इतिनिश्चयेन अविद्याया अपि मिथ्यात्वं निश्चितमिति साधनाव्यापकत्वनिर्वाहः इति ।

तन्न—नेहनानेतिश्रुतिजन्यबोधस्य सर्वदृश्यमिथ्यात्वनिश्चयरूपतया तदतद्रूपत्वकथनस्यायुक्तत्वात् । अतद्रूपत्वेऽपि साध्याव्याप्तेः । दोषभिन्नस्वभिन्नाविशेष्यकेण रूप्यतत्प्रयोजकदोषौ मिथ्या इति निश्चयेन दोषस्यापि मिथ्यात्वनिश्चयात् ।

यत्तु—सर्वांशे प्रमात्वेनोभयमतसिद्धत्वस्य तादृशनिश्चये विशेषणत्वात् शुक्तिरूप्यतद्ज्ञापकदोषौ मिथ्या इतिनिश्चयस्य प्रातिभासिकमात्रमिथ्यात्ववादिमते ज्ञापकमिथ्यात्वांशे भ्रमत्वात् तादृशनिश्चयवारणम् , स्वभिन्नं यद्दोषभिन्नं तदविशेष्यकत्वस्थाने स्वाभावाविशेष्यकत्वस्य वा निवेशेन नेहनानेतिश्रुतिजन्यबोधस्य स्वाभावविशेष्यकस्य वारणमिति ।

तन्न—सर्वांशे प्रमात्वं हि स्वव्यधिकरणप्रकारावच्छिन्ना या या विशेष्यता तत्तदनिरूपकत्वरूपं नैयायिकानां अद्वैतिनान्तु अनधिगताबाधितान्याविषयकत्वरूपं ब्रह्मज्ञानमात्रवृत्ति इति प्रमात्वस्योभयसारण्याभावेन प्रमात्वेनोभयमतसिद्धनिश्चयाप्रसिद्ध्या साध्यव्यापकताया दुरुपपादत्वात् । स्वाभावाविशेष्यकत्वनिवेशकल्पोऽपि न युक्तः । मिथ्यात्वघटकाभावस्य पारमार्थिकत्वे नेहनानेतिश्रुतिजन्यबोधस्य दृश्याभावाविशेष्यकत्वेन तदनिश्चितमिथ्यात्वकदोषप्रयुक्तविषयताश्रयत्वस्य शुक्तिरूप्ये अभावेन साध्याव्यापकत्वात् । मिथ्यात्वघटकाभावस्य व्यावहारिकत्वेऽपि स्वाभावाविशेष्यकेण रूप्यसादृश्ये मिथ्या इतिनिश्चयेन दोषस्य मिथ्यात्वनिश्चयात् साध्याव्यापकत्वात् ।

किञ्च, दोषत्वस्य सकलदोषानुगतस्यैकस्याभावात् एकैकदोषस्य दोषत्वेन निवेशे तत्प्रयुक्तभानत्वस्य न साध्यव्यापकतासंभवः । अन्यतमत्वेन रूपेण दोषाणां निवेशे अनन्तदोषघटितान्यतमत्वस्य दुर्ज्ञेयत्वापत्तिः । तावद-

---

टि. **तदतद्रूपत्वकथनस्य**—उक्तश्रुतिजन्यबोधे सर्वदृश्यमिथ्यात्वनिश्चयानात्मकत्वकथनस्येत्यर्थः । **अतद्रूपत्वेऽपि** । निरुक्तमिथ्यात्वनिश्चयानात्मकत्वेऽपीत्यर्थः ।

न्यतमत्वव्यक्तेः स्वरूपतो निवेशात् सुज्ञेयत्वेऽपि अविद्यान्यदोषाणामेव तावदन्यतमत्वरूपेण निवेशसंभवेनाबाध्यान्तवैयर्थ्यापत्तिः। तेन रूपेण साध्यव्यापकताग्राहकतर्काभावश्च। अन्यथा प्रातिभासिकानामन्यतमत्वेनैव रूपेण तादात्म्यसंबन्धेनोपाधित्वापत्तिः। किञ्च स्वाप्नभ्रमे प्रातिभासिकदोषस्यापि संभवेन तस्य स्वबाधकजाग्रदादिबोधबाध्यत्वेन साध्यव्यापकत्वहानिश्च।

यत्तु—भ्रमत्वावच्छिन्नजन्यतानिरूपितजनकतावत्त्वेन दोषाणामनुगमः। उक्तं हि **प्रत्यक्षमणिदीधितौ** 'भ्रमत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वञ्च दोषत्वम्' इति। अन्यतमत्वेनापि दोषाणामनुगमसंभवः। अन्यतमत्वस्य स्वरूपतो भानाङ्गीकारेण दुर्ज्ञेयताविरहात्। न चैवं व्यक्त्यन्यतमत्वेनैवानुगतप्रतीत्युपपत्तौ अतिरिक्तजात्यसिद्ध्यापत्तिरिति वाच्यम्। इष्टत्वात्। न चाविद्यान्यदोषाणामेवान्यतमत्वेन निवेशसंभवेन अबाध्यान्तवैयर्थ्यमिति वाच्यम्। अविद्यातिरिक्तदोषमात्रनिष्ठान्यतमत्वघटितोपाधावबाध्यान्तस्यानिवेशात्। अविद्यासाधारणतद्घटितोपाधावेव तन्निवेशात्। न च—तस्योपाधित्वासंभवः, तेन रूपेण साध्यव्यापकताग्राहकतर्काभावात्। अन्यथा प्रातिभासिकानामन्यतमत्वेनोपाधित्वापत्तिरिति—वाच्यम्। सत्ताया विशिष्टसत्तायाश्च द्रव्यत्वव्यापकताग्राहकतर्कवत् दोषजन्यज्ञानविषयत्वाविद्यान्यदोषजन्यज्ञानविषयत्वयोरपि तत्संभवात्। प्रातिभासिकानामन्यतमत्वेनोपाधित्वस्य चेष्टत्वात्। स्वाप्नभ्रमे प्रातीतिकदोषस्य संभवेऽपि यत्किञ्चिन्निद्राविद्यादिदोषस्य व्यावहारिकस्य स्वाप्नबाधकाबाध्यस्य संभवेन तमादायैवोपाधेस्तत्रोपपादनसंभवश्चेति।

तन्न—जनकत्वस्य तत्तत्स्वरूपसंबन्धविशेषरूपतया अननुगतत्वेन निरुक्तरूपेण दोषाणामनुगमस्यासंभवात्। न च जनकतावच्छेदकैक्यात् जनकतानु-

---

**टि. जनकत्वस्येति**। जनकताया अननुगतत्वेऽपि स्वावच्छिन्नजनकतावत्त्वसंबन्धेन भ्रमस्वरूपजातिविशिष्टत्वमनुगतं दोषत्वं संभवतीति सद्विविक्तत्वविचारे दोषाणामनुगमाभिधानं भ्रमत्वस्य जातिविशेषत्वानङ्गीकारपक्षाभिप्रायेण स्वावच्छिन्नजनकतायाः संबन्धत्वानङ्गीकारपक्षाभिप्रायेण चात्र प्रकरणे दोषाननुगमाभिधानं ब्रह्मानन्दीये इति बोध्यम्।

गमः। अवच्छेदकस्यापि सादृश्यत्वादिरूपस्य नानात्वात्।

अविद्यातिरिक्तदोषप्रयुक्तभानत्वमपि नोपाधिः। तस्य देहात्मैक्ये साध्याव्यापकत्वात्। तेन रूपेण व्यापकताग्राहकतर्काभावाच्च। न च विशिष्टसत्तायाः द्रव्यत्वव्यापकतायामिव अविद्यातिरिक्तदोषजन्यज्ञानविषयत्वस्य साध्यव्यापकतायामनुकूलतर्कस्य संभव इति वाच्यम्। उपाधिव्यतिरेकेण साध्यव्यतिरेकसाधने शरीरजन्यत्वरूपोपाध्यभावे इव व्यर्थविशेषणतया यदि साध्यव्यापकं न स्यात् तदा साध्याभावव्याप्याभावप्रतियोगि न स्यादिति तर्कस्यासंभवात्।

नापि प्रातिभासिकान्यतमत्वमुपाधिः। वह्न्यादिसाध्यके महानसादितत्तत्सपक्षान्यतमत्वसमशीलस्यास्योपाधितयोद्भावनस्य कथकसंप्रदायविरुद्धत्वात्। दृष्टिसृष्टिपक्षे साधनव्यापकत्वाच्च।

स्वबाधकेत्यादेः स्वाप्ने व्यावहारिकं निद्रादिदोषमादाय साध्यव्यापकत्वोपपादनेऽपि देहात्मैक्ये साध्याव्यापकत्वेनोपाधित्वासंभव एव।

यत्तु—देहात्मैक्ये तद्बाधकनाहंदेहइतिज्ञानाबाध्याविद्यारूपदोषप्रयुक्तविषयताश्रयत्वसत्त्वेन साध्यव्यापकत्वं प्रकृतोपाधेः संभवत्येव। नेदंरजतमितिज्ञानस्य रूप्यबाधकतावत् नाहंदेहइतिज्ञानस्य बाधकतासंभवात्। अन्यथा ब्रह्मज्ञानान्याबाध्ये देहात्मैक्ये सिद्धसाधनताया दुर्वारत्वादिति।

तत्तुच्छम्—अहं देहः इत्यध्यासस्याननुभवेन अनुभूयमानं अहं ब्राह्मणः स्थूलः इत्याद्यध्यासं प्रति तदभावानवगाहिनः नाहं देहः इतिज्ञानस्य बाधकत्वासंभवात् नाहं ब्राह्मणः इत्यादेः प्रत्यक्षस्याभावात् यौक्तिकादेश्च तस्य पित्तादिदोषविशेषजन्ये पीतः शङ्खः इतिज्ञाने शङ्खो न पीतः इतिनिश्चयस्येव मिथ्याज्ञानवासनारूपदोषजन्ये निरुक्ताध्यासे बाधकत्वाभावात् ब्रह्मसाक्षात्कारस्यैव बाधकत्वात् तथैवाद्वैतिभिरभ्युपगमात् स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वस्य अभिमतत्वघटितस्य देहात्मैक्ये विरहेण साध्याव्यापकत्वात्। देहात्मैक्यभिन्नत्वस्यापि पक्षविशेषणत्वेन तत्र सिद्धसाधनाभावाच्च।

---

**टि· सिद्धसाधनाभावाच्चेति।** वादिमतेन सिद्धसाधनस्यादोषत्वात् ब्रह्म-

अपि च ब्रह्मज्ञानाव्यवहितपूर्ववर्तिभ्रमसिद्धे प्रातिभासिके साध्याव्यापकत्वान्न स्वबाधकेत्यादेरुपाधित्वं संभवति।

वस्तुतस्तु पर्वतावयववृत्त्यन्यत्वादिवत् साधनवत्पक्षमात्रव्यावर्तकविशेषणवत्त्वेन पक्षेतरत्वतुल्यत्वान्न स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वस्योपाधित्वम्। उक्तं हि मणौ 'न हि पक्षेतरत्वे स्वव्याघातकत्वेनानुपाधौ उपाधिलक्षणस्यातिव्याप्तिः। तत्रानुकूलतर्काभावेन व्यापकत्वानिश्चयात्। बाधोन्नीते च तर्कोऽस्त्येव। एवं पर्वतावयववृत्त्यन्यत्वादिकं नोपाधिः, पक्षमात्रव्यावर्तकविशेषणवत्त्वात्' इति। तथा च पक्षेतरत्वतुल्यत्वेन पर्वतावयववृत्त्यन्यत्वादेः यथोक्तमणिवाक्ये अनुपाधित्वमुक्तं तथा तत्सदृशस्य स्वबाधकेत्यादेरपीति बोध्यम्।

यत्तु–अबाध्यान्तविशेषणस्य वासनादिदोषप्रयुक्तविकल्पविषयादलीकात् विपक्षात् व्यावर्तकत्वेन पर्वतावयववृत्तित्वविशेषणस्य च पर्वतावयवरूपादितो विपक्षात् व्यावर्तकत्वेन दृष्टान्तदार्ष्टान्तिकयोरुभयोरपि साधनवत्पक्षमात्रव्यावर्तकविशेषणवत्त्वाभावः इति।

तन्न—तात्पर्यानवबोधात्। साधनवत्पक्षमात्रव्यावर्तकत्वं हि साधनवद्विपक्षाव्यावर्तकत्वं साधनवद्विपक्षनिष्ठभेदप्रतियोगितावच्छेदकताया अनवच्छेदकं यद्विशेषणं तद्घटितत्वपर्यवसितम्। तथा च पर्वतावयववृत्त्यादिकं विशेषणं अन्यत्वादिनिष्ठाया उक्तावच्छेदकताया अनवच्छेदकमिति न तद्घटितस्योपाधित्वम्। साधनवद्विपक्षे अयोगोलकादौ पर्वतावयववृत्त्यन्यत्वादिमतो भेदासत्त्वात् आर्द्रेन्धनविशेषणस्यार्द्रत्वस्य च साधनवदयोगोलकनिष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकत्वात् तद्घटितस्योपाधित्वमिति।

न च प्रकृते साधनवद्विपक्षाप्रसिद्ध्या प्रकृतोपाधेः तन्निष्ठभेदप्रतियोगितावच्छेदकतानवच्छेदकविशेषणघटितत्वस्यासंभवेनोपाधित्वसंभव इति वाच्यम्। यद्विशेषणघटितस्य यस्योपाधेराश्रयाद्भिन्ने यावद्धर्मिणि प्रकृतसाधनवत्त्वविप-

---

प्रमातिरिक्ताबाध्यमिथ्याभूतदेहात्मैक्यस्वीकर्तुः अद्वैतिभिन्नस्याभावात् न सिद्धसाधनं दोषः संभवतीत्यपि बोध्यम्।

क्षत्वोभयाभावोऽस्ति तत्र तद्विशेषणं साधनवद्विपक्षाव्यावर्तकमिति अबाध्यान्तविशेषणस्यापि तादृशत्वान्न स्वबाधकेत्यादेरुपाधितासंभव इत्यस्य ब्रह्मानन्दीये एवोपपादितत्वात्।

न च—प्रकृतानुमाने सन् घट इत्यादिप्रत्यक्षेण बाधस्य वक्ष्यमाणत्वात् पक्षस्यैव साधनवद्विपक्षत्वात् तद्व्यावर्तकविशेषणघटितत्वेऽपि उपाधित्वाविरोधः। वह्निरनुष्णः पदार्थत्वादित्यादौ पक्षे साध्याभावनिश्चयदशायां पक्षेतरत्वस्याप्युपाधित्वेन सर्वसंमतत्वादिति—वाच्यम्। प्रत्यक्षविषयस्य मिथ्यात्वविरोधिनः सत्त्वस्यैव दुर्वचत्वात्। न हि प्रमाविषयत्वं तद्योग्यत्वं भ्रमाविषयत्वं वा तादृक् सत्त्वम्। तेषां प्रमात्वादिघटितत्वेन प्रत्यक्षायोग्यत्वात्। स्पष्टञ्चेदं **प्रत्यक्षबाधोद्धारे सिद्धिचन्द्रिकयोः।**

किञ्च, यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वं साध्याभावव्याप्यतावच्छेदकं तद्रूपावच्छिन्नस्य साध्यव्यापकत्वनिश्चयादुपाधित्वम्। यथा आर्द्रेन्धनत्वावच्छिन्नाभावत्वस्य धूमाभावव्याप्यतावच्छेदकत्वात् तद्रूपावच्छिन्नस्य तथात्वम्। प्रकृते च स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वत्वावच्छिन्नाभावत्वस्य लघुना दोषप्रयुक्तभानत्वत्वावच्छिन्नाभावत्वेन व्याप्यतावच्छेदकान्तरेण घटितत्वात् नीलधूमत्वादिवत् व्याप्यतावच्छेदकत्वाभावेन न तद्रूपावच्छिन्नस्योपाधितासंभवः। अत एव शरीरजन्यत्वाभावत्वस्य न कर्तृजन्यत्वाभावव्याप्यतावच्छेदकत्वं लघुना जन्यत्वसामान्याभावत्वरूपव्याप्यतावच्छेदकान्तरेण घटितत्वादित्युक्तम् मणौ।

विशिष्टाभावस्यातिरिक्तत्वेन धर्मिभेदेन वैयर्थ्याभावः स्वसमानाधिकरणव्याप्यतावच्छेदकान्तरघटितत्वस्यैव व्यर्थविशेषणतारूपत्वादिति तु न सम्यक्।

अखण्डाभावघटकतया सार्थक्योपपादनस्य वैयर्थ्यापरपर्यायत्वात्।

---

**टि. वैयर्थ्यापरपर्यायत्वादिति।** अयमाशयः—यत्र विशेषणस्य व्यभिचारवारकत्वं असिद्धिवारकत्वं वा न संभवति तत्रैवाखण्डाभावघटकतया सार्थक्यं वदन्ति। तथाचा-

विशेषणविशेष्याभावयोरेव विशिष्टाभावत्वेनातिरिक्तत्वासिद्धेश्च।

यदपि—स्वव्यापकव्याप्यतावच्छेदकान्तरघटितत्वमेव व्यर्थविशेषणत्वम्। अन्यथा वह्निमान् वह्निमदन्यावृत्तेः इत्यादौ वह्निमदन्यावृत्तित्वस्यापि व्याप्यतावच्छेदकत्वानुपपत्तेः। तच्च प्रकृते नास्तीति।

तन्न—येन विशेषणेन विनापि व्याप्तिर्गृह्यते तत् व्यर्थविशेषणमिति स्वीकारेण स्वबाधकेत्यादौ वैयर्थ्यसंभवः। अबाध्यान्तविशेषणं विनापि दोषप्रयुक्तभानत्वमात्रस्य साध्यव्याप्तिग्रहसंभवात्। उक्तं हि मणौ 'उक्तस्थले शरीराजन्यत्वे व्यर्थविशेषणत्वम्, लाघवेनाजन्यत्वस्यैव व्याप्यत्वात्। येन विशेषणेन विना व्याप्तिर्न गृह्यते तस्यैव व्याप्यतावच्छेदकत्वनियमात्। अत एव घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात् इत्यादौ रूपादिषु मध्ये इति असिद्धिवारकमपि न व्यर्थम्, तेन विना व्याप्तेरग्रहात्' इति। अतो विशिष्टोपाधेर्न साध्यव्यापकत्वम्।

यदपि—येन विशेषणेन विना व्याप्तिर्गृह्यते तदेव व्यर्थविशेषणमित्यस्य व्याप्तिग्रहत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकविषयितानिरूपकतावच्छेदकत्वं यत्र तत्र व्याप्यतावच्छेदकत्वाभावः। यथा जन्यत्वाभावः कर्तृजन्यत्वाभावव्याप्यः इति ग्रहे शरीरजन्यत्वाभावत्वावच्छिन्ननिरूपितविषयितावच्छेदसत्त्वात् शरीरजन्यत्वाभावत्वं न व्याप्यतावच्छेदकमित्यर्थः। स चायुक्तः। वह्निव्याप्यवानिति व्याप्तिग्रहे धूमत्वावच्छिन्नविषयितावच्छेदसत्त्वेन धूमत्वस्यापि व्याप्यतावच्छेदकत्वाभावापत्तेः। न च—किञ्चिद्धर्मावच्छिन्नविशेष्यकयद्व्याप्तिग्रहत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकविषयितानिरूपकतावच्छेदकत्वं यस्य तस्य तद्व्याप्त्यवच्छेदकत्वाभावः इत्येव व्याप्तिः। तथा च निर्धर्मितावच्छेदकव्याप्तिग्रहे धूमत्वावच्छिन्नविषयितावच्छेदसत्त्वेऽपि न क्षतिरिति—वाच्यम्। साध्याभाव-

---

खण्डाभावघटकतया सार्थक्यं वदतां व्यभिचाराद्यवारकत्वरूपं वैयर्थ्यमनुमतमेव भवति। **हेत्वाभासद्वितीयलक्षणे** अखण्डाभावघटकतया सार्थकस्यापि लिङ्गस्याविवक्षितत्वमुक्तवतां **दीधितिकाराणां** अखण्डाभावघटकतया सार्थक्यं वैयर्थ्यापरपर्यायमित्याशयः स्पष्टः इति।

वद्वृत्तित्वरूपव्याप्तेः धूमत्वालोकत्वादिरूपहेतुतावच्छेदकभेदेऽप्यभिन्नतया आलोको वह्निव्याप्यः इति ग्रहे धूमत्वावच्छिन्नविषयितावच्छेदसत्त्वात् । न चात्र व्याप्तिपदेन हेतुतावच्छेदकघटितहेतुसमानाधिकरणेत्यादिव्याप्तिरेव विवक्षिता किञ्चिद्धर्मावच्छिन्नविशेष्यकत्वञ्च नोपादेयमिति वाच्यम् । तथा सति शरीरजन्यत्वाभावत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभाव-घटितव्याप्तितो जन्यत्वसामान्याभावत्वावच्छिन्नसमानाधिकरणाभावप्रतियोगिता-वच्छेदकत्वाभावघटितव्याप्तेः भिन्नतया शरीरजन्यत्वाभावत्वघटितव्याप्तिग्रहत्व-समानाधिकरणभेदप्रतियोगितावच्छेदकविषयितानिरूपकतावच्छेदकत्वाभावेन शरीरजन्यत्वाभावत्वस्य तादृशव्याप्यतावच्छेदकताया दुर्वारत्वात् । एवं स्वबाध-काभिमताबाध्यदोषप्रयुक्तभानत्वाभावत्वावच्छिन्नघटितव्याप्तौ तादृशाभावत्वस्या-वच्छेदकताया अनपायेन अबाध्यान्तविशेषणघटितस्योपाधित्वं दुर्वारमिति ।

तदपि न—यादृशरीत्या प्रकृताभावत्वस्य व्याप्यतावच्छेदकत्वमापाद्यते तादृशरीत्या शरीरजन्यत्वाभावत्वस्यापि व्याप्यतावच्छेदकत्वापत्त्या **मण्यादिग्रन्थविरोधापत्तेः** ।

यदपि—अधिष्ठानत्वाभिमतसमसत्ताकदोषजन्यज्ञानविषयत्वमुपाधिः ।

---

**टि. मण्यादिग्रन्थविरोधापत्तेरिति** । येन विशेषणेन विना व्याप्तिर्गृह्यते इति **मणिवाक्यस्य** व्याप्तिग्रहाननुकूलविशेषणं व्यर्थमित्येव स्वारसिकोऽर्थः । अननुकूलत्वञ्च असिद्धिव्यभिचारान्यतरावारकत्वेन । एतादृशव्यर्थविशेषणस्थले सर्वत्र व्याप्यत्वासिद्धिः । विशेषणस्य व्यर्थत्वे व्याप्यतावच्छेदकसामानाधिकरण्यं न प्रयोजकम् । अत एव **असिद्धिग्रन्थे** 'वस्तुतो विशिष्टाभावो दोष एव न, प्रत्येकस्य समर्थत्वे तेनैवान्यथासिद्धेः व्यर्थविशेषणत्वात्' इति **मणिग्रन्थ**व्याख्यानावसरे 'इदमसाधकं व्याप्तिविशिष्टपक्षधर्मत्वाभावात् इत्यसाधकतानुमाने पक्षधर्मत्वाभावादित्यस्यैव सम्यक्त्वे व्यर्थविशेषणत्वात्' इति मूलाभिप्रायो वर्णितः **मथुरानाथभट्टाचार्यैः** । 'स्वसामानाधिकरण्यनिवेशस्य तान्त्रिकसंप्रदायासिद्धत्वात् स्वकपोलकल्पितत्वं निर्युक्तिकत्वञ्च' इति **मिश्रग्रन्थावष्टम्भेन** स्पष्टीकृतोऽयमर्थः **ब्रह्मानन्दीये** । अभ्युपगतश्चायमर्थः न्यायभास्करकारैरेव स्वसमानसत्ताकज्ञानविषयत्वरूपदृश्यत्वविचारावसरे । अधिक**मस्मदीयसुबोधिन्यां** द्रष्टव्यमिति **श्रीपरीक्षिन्महाराजाः** ।

शुक्तिरूप्ये शुक्त्यादिरूपाधिष्ठानसमसत्ताकसादृश्यादिरूपदोषजन्यज्ञानविषयत्वसत्त्वेन साध्यव्यापकत्वात् घटादौ चाधिष्ठानत्वाभिमतब्रह्मसमसत्ताकदोषाप्रसिद्ध्या उक्तोपाधेः साधनाव्यापकत्वात्। न च ब्रह्मणि कल्पितक्षणिकत्वादौ अधिष्ठानभूतब्रह्मसमसत्ताकदोषाप्रसिद्ध्या निरुक्तरूपस्याभावेन न साध्यव्यापकतेति वाच्यम्। अधिष्ठानपदेन स्वजनकाज्ञानविषयावच्छेदकस्यैव विवक्षणेन स्थिरत्वावच्छिन्नब्रह्मविषयकाज्ञानकार्ये क्षणिकत्वे स्वजनकाज्ञानविषयावच्छेदकीभूतस्थिरत्वसमसत्ताकदोषजन्यज्ञानविषयत्वसत्त्वेन साध्यव्यापकतानिर्वाहात्। व्यतिरेकसाधने व्यर्थविशेषणत्वं तु पूर्ववन्निरसनीयमिति।

तत्तुच्छम्—क्षणिकत्वजनकाज्ञानविषयावच्छेदकस्य क्षणिकत्वाभावात्मकस्थिरत्वस्य ब्रह्मस्वरूपत्वेन तत्समसत्ताकदोषाप्रसिद्ध्या निरुक्तरूपस्य क्षणिकत्वे साध्याव्यापकत्वात्। तस्य ब्रह्मातिरिक्तत्वाङ्गीकारेऽपि मृदाद्यवच्छिन्नचिति घटादेरध्यासेन घटजनकाज्ञानविषयावच्छेदकीभूतमृदादिसमसत्ताकाविद्यादोषजन्यज्ञानविषयत्वस्य घटादौ सत्त्वेन साधनव्यापकत्वात्, देहात्मैक्ये साध्याव्यापकत्वाच्च। तज्जनकमूलाज्ञानविषयावच्छेदकस्याभावात् शुद्धस्यैवाज्ञानविषयत्वात्, पूर्ववदेव व्यर्थविशेषणघटितत्वाच्च।

यत्तु—एवं श्रुतितात्पर्याविषयत्वमुपाधिः। शुक्तिरूप्ये साध्यव्यापकत्वात् पक्षे साधनाव्यापकत्वाच्च। न च—स्वर्गसाधनत्वेन यागादाविव दृश्यमात्रे मिथ्यात्वादिविशिष्टतया श्रुतितात्पर्यस्य सत्त्वात् तद्विषयत्वाभावस्य साध्यव्यापकत्वाभावान्नोपाधित्वसंभवः। श्रुतिपरमतात्पर्यविषयत्वाभावस्य साध्यव्यापकत्वेऽपि तादृशतात्पर्यविषयत्वस्य ब्रह्ममात्रनिष्ठतया तदभावस्य साधनव्यापकत्वान्नोपाधित्वमिति—वाच्यम्। स्वर्गसाधनत्वप्रकारकश्रुतितात्पर्यविषयत्वाभावस्यैवोपाधित्वात्। तस्य प्रातिभासिके साध्यव्यापकत्वात् यागादौ साधनाव्यापकत्वाच्चेति।

---

**टि. अज्ञानविषयत्वादिति।** शुद्धचिद्भिन्ने प्रातिभासिके चिद्भेदेऽपि साध्याव्यापकत्वं बोध्यम्। स्वजनकाज्ञानविषयावच्छेदकाप्रसिद्ध्या स्वपदेन तादृशचिद्भेदोपादानासंभवात्।

तन्न—पर्वतत्वाद्यवच्छेदेन वह्न्यनुमानस्थले पक्षैकदेशतत्पर्वतभिन्नत्वादेः अनुमानमात्रोच्छेदापत्त्या अनुपाधित्ववत् पक्षैकदेशयागभिन्नत्वपर्यवसितस्य स्वर्ग-साधनत्वप्रकारकश्रुतितात्पर्याविषयत्वस्योपाधित्वासंभवात् ।

यत्तु—एवं प्रातिभासिकत्वमप्युपाधिः। तच्च ब्रह्मान्यविषयकज्ञानबाध्य-त्वम् । देहात्मैक्ये ब्रह्मान्यदेहान्यत्वविषयकज्ञानबाध्यत्वान्न साध्यव्यापकत्वानु-पपत्तिरिति ।

तन्न—देहात्मैक्यस्य देहान्यत्वज्ञानबाध्यत्वासंभवस्य पूर्वं व्यवस्थापित-त्वात् देहात्मैक्ये ब्रह्मज्ञानाव्यवहितपूर्ववर्तिभ्रमसिद्धप्रातिभासिके च साध्याव्या-पकत्वात् ।

यत्तु—एवं प्रतिभासमात्रशरीरत्वमुपाधिः । तच्च स्वविषयकज्ञानानधि-करणकालासंबन्धित्वम् । एतेन—प्रतिभासमात्रशरीरत्वं यद्यज्ञानविषयतान-वच्छेदकत्वं तदा शुक्तिरूप्यादेरसत्त्ववादिनां माध्वानां मते शुक्तिरूप्यादेरत्य-न्तासत्त्वेन तेषु तदसिद्धेः साध्यव्यापकताभङ्गः । न चात्यन्तासत्त्वादेव न तत्राज्ञानविषयतावच्छेदकत्वमिति तदभावस्याक्षतत्वात् साध्यव्यापकत्वमुपपन्न-मिति वाच्यम् । असतः सत्त्वेन धीवादिनां भवतां तत्संभवात् । शशश्रृङ्गं सदितिज्ञानवत् शशश्रृङ्गाज्ञानस्य संभवात् । स्वकालत्वव्यापकस्वधीकत्वं प्रति-भासमात्रशरीरत्वमित्युक्तावपि शुक्तिरूप्यादौ तदसिद्धिः असतः स्वकाला-प्रसिद्धेरिति—निरस्तम् । निरुक्तप्रतिभासमात्रशरीरत्वस्य असत्त्ववादिनां मते-ऽप्युपपत्तेरिति ।

तन्न—स्वज्ञानानधिकरणकालासंबन्धित्वस्य देहात्मैक्ये असत्त्वेन साध्या व्यापकत्वात् ।

तस्मान्मिथ्यात्वानुमानं नोपाधिग्रस्तमिति कृतबुद्धयो विदांकुर्वन्तु। इति शिवम्।

**निरुपाधिकत्वविचारः समाप्तः ॥**

**इति पलमानेरिग्रामवास्तव्येन श्रीसुन्दरार्यसेवालब्धविवेकवता महामहोपाध्यायश्रीपञ्चापगेशविदुषा विरचितः ब्रह्मानन्दीयभावप्रकाशः समाप्तः ॥**



**टि॰ नोपाधिग्रस्तमिति।** अत्र प्रघट्टके परोद्भावितानामुपाधीनां सर्वेषां साध्यासमानाधिकरणधर्मवत् यत् साधनवत् तन्निष्ठाभावप्रतियोगितावच्छेदको यः साध्यसमानाधिकरणवृत्तिधर्मः तद्वत्त्वरूपदीधितिकारोक्तोपाधिलक्षणाक्रान्तत्वं नास्तीत्यनुसन्धेयं विपश्चिद्भिः। इति शिवम्।

ग्रामः कवेरजातीरे पण्डितग्राममण्डितः।
साहजीराजदत्त**श्रीविशालूरिति** विश्रुतः ॥

दर्भज्ञानृपमान्य**श्रीवेङ्कट्रामतनूभवः।**
छन्दोगवंशजस्तत्र **सुब्रह्मण्याभिधो** बुधः ॥

जगद्गुरूणां करुणापूरपूरितया दृशा।
आबाल्याद्रक्षितो, यस्मै प्रसीदति च सर्वदा ॥

श्रीपरीक्षिन्महाराजः गोश्रीजनपदेश्वरः।
अण्णामलैविश्वविद्यानिलयाध्यापकः सुधीः ॥

निर्माय टिप्पणमिदं जगद्गुरुपदाब्जयोः।
समर्पयामि भक्त्या मामनुगृह्णातु सद्गुरुः ॥

**इति पण्डितराजेन वि. सुब्रह्मण्यशास्त्रिणा विरचितं ब्रह्मानन्दीयभावप्रकाशटिप्पणं समाप्तम् ॥**



श्रीगुरुभ्यो नमः

## सटिप्पणे ब्रह्मानन्दीयभावप्रकाशे उद्धृतानां निबन्धॄणां सूची

| निबन्धारः | पुटसंख्या |
|---|---|
| १४ श्रीपरीक्षिन्महाराजाः | ४, १२, १५, १८, ३३, ४२, ४८, ७०, १०६, १०९, ११६, १२४, १२६, १२७, १३७, १४७, १६९, १८०, १८८, १९०, १९२, २०८. |
| १५ ब्रह्मसिद्धिकाराः | १८३. |
| १६ श्रीब्रह्मानन्दसरस्वत्यः | ६, २६, ४४, ४५, ५०, ७७, ९५, ९७, १०५, ११०, १२५, १४९, १६०. |
| १७ भट्टभास्करः | २, २९. |
| १८ भामतीकाराः | ५१, ७७. |
| १९ मण्डनमिश्राः | १९५, १९६. |
| २० मणिकाराः | १७४. |
| २१ मथुरानाथभट्टाचार्याः | २०८. |
| २२ यादवमिश्रः | २९. |
| २३ श्रीरामसुब्रह्मण्यशास्त्रिपादाः | ७, २६, २८, २९, ४१, ५२, ६९, ७०, ८१, ८३, १०४, १०६, १३२, १३७, १४०, १४२, १५५, १६०, १६३. |
| २४ श्रीलक्ष्मीनरसिंहशास्त्रिपादाः | १०, २४, २६, ३३, ३७. |
| २५ लोकनाथभट्टाचार्याः | ७, १८. |
| २६ वनमालिमिश्रः | १४४. |
| २७ विवरणकाराः | ९४. |
| २८ श्रीविद्यारण्यस्वामिनः | ११, ६३. |
| २९ श्रीविठ्ठलमिश्राः | ११, ५१, ८३, ९५, १०४, ११८, १२०, १२२, १२९. |
| ३० शिरोमणिः | ४१. |
| ३१ सिद्धिकाराः | ७, ९४, १०४, १४२. |
| ३२ श्रीहरिहरशास्त्रिणः | १३९, १६३, १७३, १८२. |

श्रीगुरुभ्यो नमः

# सटिप्पणे ब्रह्मानन्दीयभावप्रकाशे उद्धृतानां निबन्धानां सूची

| निबन्धः | पुटसंख्या |
|---|---|
| १ अथर्ववेदः | ६३. |
| २ अनुभूतिप्रकाशः | ६३. |
| ३ असिद्धिग्रन्थः | २०८. |
| ४ अद्वैतसिद्धिः, सिद्धिः | २५, ३०, ४६, १३४, १४२, १५४, २०६. |
| ५ उभयाभाववारकपरिष्कारः | ७. |
| ६ गदाधरीयम्, गादाधरी | २, ४२, ५९, ९९, ११८. |
| ७ गुरुचन्द्रिका | ८, २६. |
| ८ चतुर्दशलक्षणी | ७१. |
| ९ चिन्तामणिः, मणिः | ५८, १६७, १९६, २०७, २०८. |
| १० तत्त्वदीपनम् | १५३. |
| ११ ध्यानदीपिका | ११. |
| १२ नञर्थवादः | ६०. |
| १३ न्यायभास्करः | १३, २६, ४४, ६१, ७२, ७५, १२०, १२१, १३५, १४९, १५८, १६२, १६४, १६५, १६६, १७२, १७६, १७९, १८०, १८८, १९६. |
| १४ प्रत्यक्षमणिदीधितिः | २०३. |
| १५ ब्रह्मानन्दीयम्, लघुचन्द्रिका, चन्द्रिका | ७, १४, १७, २५, ३०, ३१, ३२, ३६, ४८, ५१, ६४, ६५, ९२, ९७, १३५, १६५, १६८, १७५, १८३, १९१, १९६, १९७, २०३, २०६, २०८. |

---

श्रीगुरुभ्यो नमः

## शुद्धाशुद्धपट्टिका

| पुटसंख्या | पङ्क्तिसंख्या | अशुद्धं | शुद्धम् |
|---|---|---|---|
| ४ | ४ | निरूक | निरूपक |
| ११ | १३ | प्रतियोगिमावस्य | प्रतियोगिमत्त्वस्य |
| १५ | २६ | अख्यातिवादिभिः | सत्ख्यातिवादिभिः |
| ४६ | ३ | प्रतियोगिता च | प्रतियोगितावच्छेदकता च |
| १४१ | ९ | सिद्ध्यत् | सिद्ध्येत् |

शुभं भूयात्

